स्रुचां प्रमाण इति ॥ बाहुमात्राः स्युरिति बौधायनो ॥ ऽरत्निमात्रा इति शालीकिः ॥ प्रादेशमात्रा इत्यौपमन्यवः । ॥

स्रुचामाकृतिविकार इति ॥ हस्त्योष्ठ्यः[1] स्युरिति बौधायनो ॥ वायसपुच्छा इति शालीकिर्हंसमुखप्रसेचना[2] इत्यौपमन्यवः । ॥

I. 54. 16. अम्बरीषस्य करण इति ॥ उत्तरतो ऽग्न्यगारस्याम्बरीषं कुर्यादिति बौधायनो ॥ यत्रैवाम्बरीषः स्यात्तद्गच्छेदिति शालीकिः । ॥

I. 55. 12. अग्न्यगारस्य परिक्रम[3] इति ॥ दक्षिणेनेति बौधायन ॥ उत्तरेणेति शालीकिः । ॥

I. 55. 14. रोहिते चर्मणीति ॥ सूत्रं बौधायनस्यापरोहितं स्यादिति[4] शालीकिः । ॥

I. 55. 15. ब्रह्मौदनस्य[5] मन्त्रामन्त्र इति ॥ मन्त्रवान्स्यादिति बौधायनस्तूष्णीक[6] इति[6] शालीकिः । ॥

ib. ब्रह्मौदनस्य निर्वपण इति ॥ पवित्रवता पात्रेण मन्त्रवन्तमिति बौधायनो ॥ ऽपवित्रेण तूष्णीकमिति शालीकिः । ॥

---

१ हस्त्योष्ठा Ben H C D Bu G; हस्त्योष्ठ्य Be U.

२ Thus Be Bu G (sec. m.) U (sec. m.); ०प्रवेषा H Ben C D G (pr. m.) U (pr. m.).

३ ०क्रमच G and U (sec. m.).

४ कुर्यादिति C D H Ben U.

५ Here and *infra* the MSS. sometimes ब्रह्मौ० sometimes ब्रह्मो० ।

६ Thus Be only; ०ष्णीकमिति G (sec. m.) Bu; तूष्णीमिति H Ben U C D G (pr. m.).

I, 56. 4. ब्रह्मौदनस्य श्रपण इति ॥ पयसि श्रपयेदिति बौधायनो " ऽप्स्विति शालीकिः । ॥

नैवास्मिन्नासिञ्चेन्न निःषिञ्चेदिति बौधायनः " काममस्मिन्नासिञ्चेन्न निःषिञ्चेदिति शालीकि" र्विस्राव्य[1] तथू[1] सूपवन्तमित्यौपमन्यवः । ॥

56. 6. ब्रह्मौदनस्योपस्तरण इति ॥ सूक्तं बौधायनस्य " नोपस्तृणीतेति शालीकिः । ॥

56. 10 ब्रह्मौदनस्योद्वासन इति ॥ सूक्तं बौधायनस्यैव पर्युपविश्येयुरिति[2] शालीकिः । ॥

56. 12. ब्रह्मौदनस्योपोहन इति ॥ यज्ञो मोपनमत्विति वा तूष्णीं वेति । पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः । ॥

ib. ब्रह्मौदनस्य प्राशन इति ॥ आर्षेया एव ब्रह्मौदनं प्राश्नीयुरिति बौधायनो " य एव केच नियतपाना[3] इति कात्यो " ऽन्यो ह स्मारोपमन्यवो महर्त्विज एव ब्रह्मौदनं प्राश्नीयुरच[4] ह्येवैते[5] सतानुनप्त्रिणो भवन्तीति । ॥

---

[1] Uncertain; विस्राव्यतं U H Ben C D G (pr. m.); विस्राव्य G (sec. m.); विस्राव्यंतं Bu.; विस्राव्य ह सूतं Be.

[2] Thus Bu G and U (sec. m.); ०पविश्येरन्निति the other MSS.

[3] Uncertain; नियाना H Ben G (sec. m.) C D; नियक Be; नियावना Bu; नियतपाना G (pr. m.) U; this seems to be the reading also of the vivaraṇa, according to which the meaning is: सहभोजनाः ।

[4] ०चो Ben H G C and U (pr. m.).

[5] After ०वैते Be ins. प्रथमं, thus also Keś. in a citation of this passage.

I. 57. 1. समिधामभ्याधान इति ॥ सूत्रꣳ शालीकेर्चो ह स्माह बौधायनः सकृत्प्राशिते ऽप्रत्यवमृष्टे समिधो ऽभ्यज्यादध्यादित्यौचो ह स्माहौपमन्यवो ऽन्वैवैनाः पार्श्वतः समज्य सादयेत्तद्यदा सर्वं प्राश्नीयुरथैतां पात्रीं निर्णिज्योपस्तीर्य यत्स्थाल्या आज्यमवशिष्टꣳ स्यात्तत्सकृदभ्युन्नीय तेन समिधो ऽभ्यज्यादध्यादिति ॥

I. 57. 13. गोः करण इति ॥ कुर्यादिति बौधायनो न कुर्यादिति शालीकिरपि वक्कीरपि कुर्वीतानु चैतस्य भवेत्पुण्या प्रशꣳसेति कात्यः ॥

I. 57. 15. अरण्योः प्रदान इति ॥ सूत्रमाचार्ययोर्चो ह स्माहौपमन्यवो ऽपरराच एवास्मा अरणी प्रयच्छेदिदं ददामीत्येव वाचं विसृजेदिति ॥

I. 59. 1. अग्न्यायतनानां परिलेपन इति ॥ सूत्रमाचार्ययोर्चो ह स्माहौपमन्यवो गार्हपत्यायतनमेवैकं परिलिम्पेत्तद्धि विदग्धं भवतीति ॥

I. 59. 2. संभाराणां निवपन इति ॥ सूत्रमाचार्ययोर्चो ह स्माहौपमन्यवो गार्हपत्यायतन एवैनान्सर्वैर्मन्त्रैः परिनिष्ठाप्य त्रेधा निवपेदिति ॥ १६ ॥

I. 62. 9. इध्मस्य हरण इति ॥ स ह स्माह बौधायनो जानुदघ्नं प्रथमꣳ हरेदथ नाभिदघ्ने ऽथ ग्रीवदघ्ने प्राणाꣳस्तु नातिहरेदित्यौदराण एवैता मात्रा अभिसंपादयेत्प्राणाꣳस्त्वेव नातिहरेदिति शालीकिः ॥

62.18. संभाराणामाक्रमण इति ॥ सूत्रम् शालीकेरथो ह स्माह बौधायन एवमेवैतेन पुरस्तात्प्रत्यगावृत्तेन[1] दक्षिणेन पूर्वपदेनोत्तरतः पार्श्वतः[2] संभाराणामाक्रमयेद्यथाहितस्याग्नेरङ्गारा अभ्यववर्तेरन्निति । ॥

62.20. अश्वस्य दान इति ॥ अध्वर्यव एतमग्निपदमश्वं[3] दद्यादन्यं ब्रह्मण इति बौधायन ॥ एतं[4] ब्रह्मणे[4] ऽन्यमध्वर्यव[4] इति शालीकिः । ॥

63.1. इध्मस्य निधान इति ॥ सूत्रं बौधायनस्य ॥ तूष्णीमेवेध्मं निदध्यादिति शालीकिः । ॥

63.13. सभ्यावसथ्ययोः करण इति ॥ कुर्यादिति बौधायनो ॥ न कुर्यादिति शालीकिः । ॥

ib. सभ्यावसथ्ययोर्विहरण इति ॥ आहवनीयादेवैनौ विहरेदिति बौधायनो ॥ ग्रामाग्नेरिति शालीकि॥र्निर्मन्थ्यौ स्यातामित्यौपमन्यवो ॥ ऽथो ह स्माहौपमन्यवीपुत्रः सभायामेव सभ्यं व्यपदिशेदावसथ आवसथीयं पर्वणि[5] चैनयो स्थालीपाकौ श्रपयित्वा ब्रह्मणे जुहुयादित्य॥ तदपि न कुर्यादित्या-जौगविः । ॥

---

१ Thus G (sec. m.) D G; °वृतेन the other MSS.

२ Found only in Be and U (sec. m.).

३ अश्वं given only by Bu and G (sec. m.).

४ एवं instead of एतं Bu; the other MSS. are defective, leaving out एतं ब्रह्मणे ।

५ पर्वणिपर्वणि U (sec. m.).

I. 63. 14. रथचक्रस्य करण इति ॥ कुर्यादिति बौधायनो ॥ न कुर्यादिति शालीकिरथो ह स्माहौपमन्यवो रथमेवैतं संयुक्तं[1] प्राञ्चं प्रवर्तयेत्तमृत्विग्भ्यो दद्यादित्यैतदपि न कुर्यादित्याञ्जीगविः । ॥

I. 64. 9. तनूनामनुदेश[2] इति ॥ प्रत्यधीत्यानुदिशेदिति[3] बौधायनो ॥ यास्ते अग्ने घोरास्तनुवस्ताभिरमुं[4] गच्छेत्येव ब्रूयादिति शालीकिः । ॥

I. 64. 11. विराजक्रमेष्विति ॥ सूत्रं बौधायनस्य ॥ मयं प्रजां मे गोपायेत्येव ब्रूयादिति शालीकिः । ॥

I. 65. 2. पूर्णाहुत्यै हवन इति ॥ सूत्रं बौधायनस्य ॥ परिश्रित एव पूर्णाहुतिं जुहुयादिति शालीकिः । ॥ १७ ॥

I. 65. 3. पूर्णाहुतौ तूष्णीमग्निहोत्र इति ॥ सूत्रं राथीतराणामथो ह स्माह बौधायनः पूर्णाहुतिमेव जुहुयान्न तूष्णीमग्निहोत्रमिति ॥ तूष्णीमग्निहोत्रमेव जुहुयान्न पूर्णाहुतिमिति शालीकिः । ॥

I. 66. 3. दशहोतुर्व्याख्यान इति ॥ स ह स्माह बौधायनो यत्र क्व च हविर्निर्वप्स्यन्स्यात्सामिधेनीर्वानुवक्ष्यन्व्याचक्षीतैव तत्र दश-

---

१ Thus Bu Be G (sec. m.) and Keś.; संप्रयुक्तं U H Ben C D G (pr. m.).

२ Thus Bu Ben H G C D; ॰देशने the vivaraṇa; ॰देशेन Be.

३ Thus Bu U (pr. m.); प्रत्याधी॰ H Ben Be C D U (sec. m.).

४ Thus Be Bu U (sec. m.); पाप्मानं instead of अमुं Ben G C D U (pr. m.) H.

होतारमित्येष्वेवैतदाग्न्याधेयिकेषु[1] तन्त्रेषु दृष्टं भवतीति शालीकिरग्निमेवैतदाग्नेये ऽष्टाकपाले दृष्टं भवतीत्यौपमन्यवः ॥

तन्त्रकरण इति ॥ स ह स्माह बौधायनः पञ्चदश सामिधेनीकाः स्युर्वार्त्रघ्नावाज्यभागावुच्चैर्देवता इत्यथो ह स्माह शालीकिः सप्तदश सामिधेनीकाः स्युर्वृधन्वन्तावाज्यभागावुपांशु देवता इत्यथो ह स्माहौपमन्यव आग्नेये ऽष्टाकपाले वार्त्रघ्नावाज्यभागौ स्यातां वृधन्वन्तावैन्द्राग्नादित्ययो[1] रयिमन्तौ[2] पुष्टिमन्तौ पवमानहविःषु वीतवन्तावन्वारम्भ्यामिति[3] ॥

याजमानस्य करण इति ॥ अभीनामं[4] यजिमानं कुर्यादिति बौधायनः ॥ कुर्याद्यथावकाशं याजमानमिति शालीकिः ॥

---

१ Thus Bu G U (sec. m.); एष्ट्रैवैतद॰ H; एष्वैतद॰ Ben U (pr. m.); एवेष्वेतद॰ Be; तेष्वेवैतद॰ D C.—२ चाग्न्याधे॰ H Ben Be U D G (sec. m.); चाग्न्याधे॰ Bu G (pr. m.).

२ ॰योरयिमंतौ C D U (pr. m.) Ben; ॰योरविमंतौ H; ॰योरपिमंतौ Be; योरतियिमंतौ Bu U (sec. m.). I am uncertain whether रयिमन्तौ or अतियिमन्तौ is the right reading.

३ Thus Be Ben H C D G and U (pr. m.); पौवर्तनाव॰ Bu; इथ-र्त्तनाव॰ G and U (sec. m.).

४ अभीनमं Be. The word seems to be absol. to अभिनमति ('to change accordingly'). Vivaraṇa: अभिनाममोषित्वा, correct perhaps ॰ममयित्वा।

I. 66. 6. दक्षिणानां दान इति ॥ सूत्रꣳ शालीकेर″त्यो ह स्माह बौधायनः सर्वा एवैता इष्टीर्दक्षिणावतीः कुर्यात्तिस्रस्तिस्र एकैकस्यां दद्यान्मिथुनावुत्तमायामिति ′ ॥

I. 66. 9. तन्त्रसमास इति ॥ नास्ति तन्त्रसमास आचार्ययोर″त्यो ह स्माहौपमन्यव आग्नेयो ऽष्टाकपालो ऽग्नये पवमानाय तत्प्रथमं तन्त्रꣳ स्याद′थाग्नये पावकायाग्नये शुचये तद्द्वितीयम′थैन्द्राग्नश्चादित्यश्च[1] चरन्तं[1] परीयातामिति ′ ॥

I. 67. 15. दक्षिणानां दान इति ॥ सूत्रꣳ शालीकेर′ख्यातं बौधायनस्य′त्यो ह स्माहौपमन्यवः सर्वा एवैता इष्टीर्दक्षिणावतीः कुर्याद्यतस्ततस्त एकैकस्यां दद्यान्मिथुनावुत्तमायामिति ′ ॥

अनन्वारब्धदर्शपूर्णमासस्य प्रायश्चित्तकरण इति ॥ कुर्यादिति बौधायनो ″ न कुर्यादिति शालीकिः ′ ॥

I. 67. 18. अन्वारप्स्यामिति ॥ चतुर्होतारꣳ सारस्वतौ होमावन्वारम्भेष्टिमित्येतदुपवसथे कुर्यादथेतरदिष्ट्यहनि कुर्यादिति बौधायनश्″चतुर्होतारꣳ सारस्वतौ होमावित्येतदुपवसथे कुर्यादथेतरदिष्ट्यहनि कुर्यादिति शालीकिश्″चतुर्होतारमेवोपवसथे कुर्यादथेतरदिष्ट्यहनि कुर्यादित्यौपमन्यवः ″ सर्वमेवैतदिष्ट्यहनि कुर्यादित्यौपमन्यवीपुत्रः ′ ॥ १८ ॥ षष्ठः ॥

---

१ Emended; °श्चादित्यश्चरन्तं परीयातामिति U (sec. m.); °श्चादित्यश्च-चरन्तश्चपरियाद्विति G (sec. m.); °श्चादित्यश्चचतुरन्तं परीयाद्विति Bu; °श्चादित्यश्च (or श्व, स्तंन (or च) परीयातामिति (or परियाद्विति) the other MSS.

अथातः पुनराधेयं[1] व्याख्यास्यामः ॥

सर्पराज्ञीष्विति ॥ सूत्रꣳ शालीकेरचो ह स्माह बौधायनः सर्पराज्ञिया ऋग्भिर्गार्हपत्यमादधातीति तꣳ पङ्क्तिराधाय सप्तम्योपतिष्ठेतेति । ॥

पूर्णाहुत्यै करण इति ॥ कुर्यादिति बौधायनो ॥ न कुर्यादिति शालीकिः । ॥

तन्त्रकरण इति । सूत्रꣳ शालीकेरचो ह स्माह बौधायन उभयानि तन्त्राणि कारयेत्पौनराधेयिकानि चाग्न्याधेयिकानि चाग्नेयमष्टाकपालं निर्वपेत्तस्यासमुदिते ऽग्न्याधेयदक्षिणा[2] दद्यादथाग्नेयं पञ्चकपालं तस्यासमुदिते पुनराधेयदक्षिणा[3] दद्यादथैन्द्राग्नं चादित्यं[4] च[4] चरुमथाग्निवारुणं पारे[5] द्वादशाहस्य तन्त्र[6] इति[6] । ॥

विभक्तीनां धाम इति ॥ सूत्रꣳ शालीकेरचो ह स्माह बौधायनः सर्वाꣳसर्वान्त्समुत्का[7] यजेतेत्याग्नेयीर्द्व्यक्षरा[8] विभक्तीर्दध्यादित्यौपमन्यवः । ॥

१ पुनराधानं Bu.

२ ॰क्षिणां Bu D C.

३ ॰क्षिणां Bu U Ben D C.

४ Emended; च is missing both times in B G (sec. m.), the second च is missing in Be D C Ben H U G (pr. m.).

५ परे H Bu Ben D C U G (pr. m.); पारे Be G (sec. m.).

६ इति is missing in all the MSS., which read तन्त्रो ; the vivaraṇa runs: द्वादशाहे भवे तनुचत्वौꣳषीति ।

७ Thus Bu G (sec. m.); सर्वांश्चसमु॰ the other MSS.

८ Thus Be only; ॰ग्नेयौद्यच॰ the other MSS.

I. 70. 12. पुरोडाशस्य परिहोम इति ॥ दैवतं परिजुहुयादिति बौधायनः॥ सस्विष्टकृत्कमिति शालीकिः। ॥

I. 70. 14. स्विष्टकृतो निर्वचन इति ॥ स्वे स्थाने निर्ब्रूयादिति बौधायनः॥ स्वे स्थाने निरुच्य कामं तत ऊर्ध्वं निर्ब्रूयादिति शालीकिर॥चो ह स्माहौपमन्यवः पञ्चैतानि स्विष्टकृत्स्थानानि भवन्तीति[1]। तेषु[2] सर्वेषु निर्ब्रूयादिति। ॥

I. 71. 17. अथापाहृताग्नेर्नष्टारणीकस्य चेति ॥ सूचङ् शालीकेर॥चो ह स्माह बौधायनः कामं नष्टेषु वापहृतेषु वाग्निषु नाद्रियेतान्याधेयमाधानप्रभृति यजमान एवाग्नयो भवन्ति। तस्य प्राणो गार्हपत्यो ऽपानो ऽन्वाहार्यपचनो व्यान आहवनीयः। काममुपावरोह्य जुहुयादिति। ॥

I. 72. 3. अग्नीनां विहरण इति ॥ सूचं बौधायनस्य॥धानप्रभृत्येवैते ऽजस्राः स्युरिति शालीकिः। ॥

I. 72. 17. पात्राणाङ् सादन इति ॥ सूचङ्॰ शालीकेर॥चो ह स्माह बौधायनः कूर्चे वा तृणेषु वा पात्राणि सादयेदपसव्यं[3] दारुणा[3] दारु[3] संलीयमानं[3] भवतीति। ॥

---

१ G. om. इति।

२ ज्येष्ठः (meaning? ) ins. Bu.

३ Uncertain reading. Bu reads as given in the text; ॰सव्यं दारुणा दारु संलीय॰ G′ (sec m.); ॰सव्यं दारुणा दारु (sec. m. दारुणा) संलीय॰ U; ॰सव्यां दारुणा दारुणासंलीय॰ Ben H; ॰सव्या दारुणा दारुणा संलीय॰ Be; ॰पसव्या दारुणां दारुणासंलीय॰ D C; ॰पसव्यां दारुणां दारु संलीय॰ G (pr. m.).

द्वयोरेम इति ॥ स ह स्माह बौधायनो यदि पूर्वां[1] भ्रेषं नीयादुत्तरया[2] प्रायश्चित्तं कुर्वीताथ यद्युत्तरा[3] भ्रेषं नीयादुभयं[4] भ्रेषकृतं[5] स्यादन्यया प्रायश्चित्तं कुर्वीतेत्यथो ह स्माह शालीकिर्यतरा कतरा चिद् भ्रेषं नीयादुभयं[6] भ्रेषकृतं स्यादन्ययैव ततः प्रायश्चित्तं कुर्वीतेति । ॥ १९ ॥

अभिज्वलन इति ॥ सूत्रं बौधायनस्य ॥ गार्हपत्यादङ्गारेणाभिज्वाल्य त्रिः पर्यग्नि कुर्यादिति शालीकिः । ॥

वर्त्म कुर्वन्नुदग्नुद्वासयतीति ॥ सूत्रं शालीकेरथो ह स्माह बौधायनस्तथैव[7] त्रिः प्रतिष्ठापयन्निवोद्वासयेत्तथ इमे लोका । एष्वेव लोकेषु प्रतितिष्ठतीति[8] । ॥

उद्वयन इति ॥ पूर्णान्वानूचो वेति । पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः । ॥

---

१ पूर्वां G (sec. m.); पूर्वी Be; पर्वया H Ben U C D; पूर्वया Bu.

२ Emended; नेयादु॰ H Ben U D C; न्येयादु॰ Be G (sec. m.).

३ ॰त्तरा Be G (sec. m.); ॰त्तरया H Ben U C D G (pr. m.); ॰त्तरया Bu.

४ नेयादु॰ H Ben Bu U C D G (pr. m.); न्येयादु॰ Be G (sec. m.). — Thus G (sec. m.); ॰दुभयच Bu; ॰दुभयत्रै Be; ॰दुभये the other MSS.

५ चोर (चोरं, चेरि) कृतं Ben H U G (pr. m.) C D.

६ नेयादु॰ Bu U C D G (pr. m.); नेयदु॰ Ben H; न्येयादु॰ G (sec. m.) Be. — ॰दुभय (instead of ॰दुभयं) H Ben U D C.

७ Thus Bu Be; तथतथैव Ben G U D C; तथतथ H.

८ Thus (and cp. XX. 22) Bu G and U (sec. m.); ॰ष्ठामीति H Ben C Be, G and U (pr. m.); ॰ष्ठामीति D.

I. 73. 20. संमर्ग[1] इति ॥ स ह स्माह बौधायन उभयꣳ संमृज्याच्च स्थाल्याꣳ स्रुग्गतं चेति ॥ स्रुग्गतमेवेति शालीकिः ॥

I. 74. 4. अथ जघनेन गार्हपत्यमुपसादयतीति ॥ सूचं बौधायन-स्त्रौपिणातिहायेति[2] शालीकिः ॥

I. 74. 20. वचन इति ॥ स्वयं व्यवेत्य जुहुयादिति बौधायनो यद्यस्य पुत्रो वान्तेवासी वालंकर्मीणः[3] स्यात्स दक्षिणत आसीनो जुहुयादिति शालीकिः ॥

ib. आहुत्योर्होम इति ॥ पूर्वापरे जुहुयादिति बौधायनः ॥ प्रष्टौ[4] इति शालीकिः ॥

I. 75. 8. द्विरुपमृज्य द्विर्निमृजेदिति बौधायनः ॥ सकृदुपमृज्य द्विर्निमृजेदिति शालीकिः ॥

I. 76. 2. द्विरंजुल्या प्राग्योदङ् पर्यावृत्य 'प्राचीनदण्डया स्रुचा भक्षयतीति ॥ सूचं बौधायनस्त्रोदीचीनदण्डया भक्षयेदिति शालीकिः ॥

---

१ Thus Bu Be and the vivaraṇa; संमर्गेन H Ben G U D C.

२ Thus (and cp. XX. 8: 21. 4). Bu G and U (sec. m.) ०तिचवैति Be; ०भिचावैति Ben G (pr. m); ०भिचार्यति H U (pr. m D C corrupt.

३ Thus G U (sec. m.); वालंकर्मीणः Be; वालंकर्मिणः H; वालंकर्मणः Bu; वालंचर्मीण Be; cp. XX. 2: 6. 12.

४ Thus G (sec. m.) and the vivaraṇa; प्राचौ H Ben Be U D C; प्राचीनौ Bu; cp. XX. 13: 29. 11.

निर्णिज्य स्रुचं निष्टप्याद्भिः पूरयित्वोदगुद्धिमतीति[1] जघनेन गार्हपत्यमपो निनयतीदमहमग्नौ वैश्वानरे ऽमृतं जुहोमि स्वाहेत्यचित्यामचिताहुतिमिति वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

आग्निपावमानीभिरुपस्थान इति ॥ स ह स्माह बौधायनः संवत्सरं यथोपस्थितमाहवनीयमुपस्थाय तत आग्निपावमानीभिर्गार्हपत्यमुपतिष्ठेताथ गायत्रीभिरथ द्विपदाभिरथ श्वो भूते यथायथमित्यथो ह स्माह शालीकिर्यत्प्राक् चोर्ध्वं चाग्निपावमानीभ्यस्तेन संवत्सरं यथोपस्थितमाहवनीयमुपस्थाय तत आग्निपावमानीभिर्गार्हपत्यमुपतिष्ठेताथ गायत्रीभिरथ द्विपदाभिरथ श्वो भूते यथायथमित्येवमौपमन्यवो[2] न चास्मात ऊर्ध्वमाग्निपावमान्य आहवनीयमागच्छेयुर्न गार्हपत्यं स्वाध्यायार्था एवास्मात ऊर्ध्वं स्युरिति[3] ॥ व्याहृतीभिरुपस्थाय भर्तुं वः[4] शकेयं श्रद्धा मे मा विगादित्येव ब्रूयादित्याक्षीगविः ॥

आग्निःश्चिति[5] ॥ स ह स्माह बौधायन आत्मने प्रथम-

---

1 उदगुद्धिमतीति found only in Bu and G (sec. m.). Bo and U (sec. m.) have instead वचिर्. About the constitution of the text of this dvaidham and its meaning I am uncertain.

2 All the MSS. exc. G (sec. m.) om. एवम् ।

3 All the MSS. ins. शालीकिर्. which in G is effaced.

4 Effaced in G.

5 आग्नीश्चिति MSS.

माश्नाशीताथ जातेभ्यो ऽथ तन्तव इत्य॥थो ह स्माह शालीकिर्जातेभ्यः प्रथममाश्नाशीतायात्मने ऽथ तन्तव इत्य॥थो ह स्माहौपमन्यवो ऽजातेष्वेवात्मने[1] च तन्तवे चेति॥ काममपि सायंप्रातराश्नाशीतेत्यौपमन्यवीपुत्रः। ॥ २० ॥

I. 79. 10. पिण्डपितृयज्ञस्य करण इति॥ स ह स्माह बौधायन आदित एव प्राचीनावीतं कुर्वीत। स प्राचीनावीत्येव स्यादाहुतीनाꣳ होमादाहुतीर्हुत्वान्यज्ञोपवीतं कुर्वीत। स यज्ञोपवीत्येव स्यादा सकृदाच्छिन्नस्य स्तरणात्सकृदाच्छिन्नꣳ स्तरिष्यन्प्राचीनावीतं[2] कुर्वीत। स प्राचीनावीत्येव स्यादा प्राजापत्यायै। यज्ञोपवीत्येव प्राजापत्ययर्चा गार्हपत्यमुपतिष्ठेतेत्य॥थो ह स्माह शालीकिरादित एव प्राचीनावीतं कुर्वीत। स प्राचीनावीत्येव स्यादा प्राजापत्यायै। यज्ञोपवीत्येव प्राजापत्ययर्चोदङ्कुयादिति[3]। ॥

तूष्णीꣳ[4] सकृदुत्पूय सकृत्प्रोक्ष्य सकृद्विष्कृद्रूपं कुर्यादिति बौधायनः॥ सकृदेवैनान्सुफलीकृतान्कृत्वा पवित्रवत्याꣳ स्थाल्यामोप्य स्थालीपाकꣳ श्रपयित्वाभिघार्योदञ्चमुद्वासयेदिति शालीकिः। ॥

---

१ The avagraha given only by G (sec. m.); to the reading ऽजातेषु the vivaraṇa also seems to point.

२ ॰वीतं च॰ H Be.

३ Thus G (sec. m.); ॰र्चोदेयादिति Ben H C D G and U (sec. m.); र्चोदङ्ङेयादिति Bu; ॰चादधेयादिति Be U (pr. m.).

४ Effaced in G.

आहुतीनाᳪ होम इति ॥ सूत्रं बौधायनस्य ॥ नात्र मध्यमामाहुतिं जुहुयान्मेक्षणमेव तृतीयᳪ स्यादिति शालीकिः । ॥

महदाच्छिन्नस्य स्तरण इति ॥ उपनिष्क्रम्यान्यगाराद्दक्षिणे पूर्वे ऽवान्तरदेशे महदाच्छिन्नᳪ स्तृणीयाद्दक्षिणतश्चोलूकमुपनिदध्यादिति बौधायनो ॥ ऽन्तरेवैतां दिशमिति शालीकिर्नात्रोलूकमुपनिदध्यादिति । ॥

पिण्डानां दान इति ॥ सूत्रᳪ शालीकेरथो ह स्माह बौधायनः परस्तादेवामुतो ऽर्वाञ्चो ऽपसलैः पिण्डान्दद्यादिति[1] । ॥

आञ्जनाभ्यञ्जने मनसो निह्नव[2] इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः । ॥[3]

पिण्डानामनुप्रहरण इति ॥ सूत्रᳪ शालीकेरथो ह स्माह बौधायनो ऽत्रैवैते पिण्डाः परिश्रयीरन्नुच्छिष्टा ह्येते भवन्ति पितृभिर्भक्षिता इति[4] । ॥

अतिशिष्टस्य प्राशन इति ॥ स्वयं यजमानः प्राश्नीयादिति बौधायनः ॥ पुत्राय वान्तेवासिने वा दद्यादिति

---

१ पिंडंदद्या॰ MSS. exc. G (sec. m.).

२ निह्नवन G.

३ No vikalpa is found in the text proper of Baudh.

४ Thus H Ben C D G (pr. m.); भवंक्षत इति Be; भवंक्षतस्येति G (sec. m.), भवक्षतस्येति Bu.

शालीकिः । पत्नीं प्राशयेत्प्रजा ह्येषा[१] भवतीत्यौपमन्यवो ऽश्नुत्वा यावन्मात्रमवघ्रायाथेतरदग्नावनुप्रहरेदित्यौपमन्यवीपुत्रो भस्मोत्कर उद्वास्य संप्रच्छादयेदित्याञ्जीगविरपो[२] ऽभ्यवहरेदिति मौद्गल्यः ॥ २१ ॥

I. 82. 4. आग्रयणस्य तन्त्रसमास इति ॥ नास्ति तन्त्रसमास[३] ५
आचार्ययोरित्यो ह स्माहौपमन्यवः सौम्यं[४] नित्याथेतराणि हवींषि निर्वपेदेवमस्य चरुमुखानि[५] हवींषि भवन्तीत्यो ह स्माहौपमन्यवीपुत्रो ऽतिपातादावापिक एव सौम्यः स्यादन्तरेण वैश्वदेवं चैककपालं च निर्वपेदित्यो[६] ह स्माहाञ्जीगविस्त्रीण्येतानि[७] हवींषि भवन्ति त्रय इमे लोका एष्वेव लोकेषु १४
प्रतितिष्ठति श्यामाकेनैवास्य प्रस्तरेणैतदाप्तं भवतीति ॥

I. 82. 6. अज्यानीनां होम इति ॥ सूत्रं बौधायनस्य पुरस्तात्स्विष्टकृतो ऽज्यानीरुपजुहुयादिति शालीकिः ॥

ib. आग्रयणहविषां श्रपण इति ॥ पयसि श्रपयेदिति बौधायनो ऽप्स्विति शालीकिः ॥

---

१ Thus Ben Be G H D C; प्राजाह्येषा Bu; प्रजाह्येष H.

२ सं (before प्रच्छाद°) om. H Ben D C U G (pr. m.).

३ इति ins. G and U (sec. m.); but cp. XX. 18: 40. 4.

४ चरुं ins. H Ben U C D G (pr. m.).

५ °सुखानि Bu D G (sec. m.).

६ Thus (निर्वपेद्) Ben H Be U D C; वापयेद् Bu; effaced in G.

७ Thus without स्त्र, U C D Ben D G (pr. m.) and Keś.; त्रीण्येवै-°तानि Be Bu G (sec. m.).

आग्रयण एककपालस्य[1] करण[1] इति ॥ कुर्यादिति बौधायनो ॥ न कुर्यादिति शालीकिः । ॥

तन्त्रकरण इति ॥ स ह स्माह बौधायनः पञ्चदशसामिधेनीकाः स्युर्वार्त्रघ्नावाज्यभागावुच्चैर्देवताः । कुर्याद्याजमानमित्य॥थो[2] ह स्माह शालीकिः सप्तदशसामिधेनीकाः स्युर्वृधन्वन्तावाज्यभागावुपांशुदेवताः । कुर्याद्याजमानमिति[2] ।

॥ २२ ॥ सप्तमः ॥

विपरिधान[3] इति ॥ स ह स्माह बौधायन आहवनीयेनैकेन विपरिधाय[3] प्रव्रजेत्प्रोष्य पुनरागम्य[4] सर्वैर्मन्त्रैराहवनीयं प्रत्युपतिष्ठेतेत्य॥थो ह स्माह शालीकिर्यथोपपन्नमेवाग्निभिर्विपरिधाय[3] प्रव्रजेत्प्रोष्य पुनरागम्य[5] सर्वैर्मन्त्रैरेकैकं प्रत्युपतिष्ठेतेति । ॥

अनुपस्थाय प्रव्रजितस्येति ॥ यत्र स्मरेत्परोक्षं तत्र एवं नित्येनोपतिष्ठेतेति बौधायनो ॥ न[6] चेत्स्मरेत्प्रोष्य[6] पुनरागम्य[7] नित्येनैवेति शालीकिः । ॥

१ कपालकरण H Ben U D C G (pr. m.).

२ Thus U Be G (sec. m.); the other MSS. या (or य)जमान इति ।

३ ॰परिहान and ॰परिहाय D C.

४ ॰गत्य Bu Ben H U G D C; ॰चम्य Be.

५ ॰गम्य Bu and the vivaraṇa; ॰चम्य Be: ॰गत्य Ben H G U C; D defective.

६ न चेतत्स॰ Be Bu G and U (sec. m.); न चेत्स॰ D C.

७ ॰गत्य U H Ben G D C

I. 84. 9. प्रवसथाऽऽकृताविति[1] ॥ स ह स्माह बौधायनो यदि कृतं प्रायश्चित्तꣳ स्यान्नाद्रियेत तत्र होतुमथ यद्यकृतꣳ स्यात्तथैनां[2] जुहुयादित्यथो ह स्माह शालीकिर्ये प्रत्याम्नातप्रायश्चित्ता भ्रेषाः[3] स्युस्तान्येव तत्र प्रायश्चित्तानि स्युरथ येऽप्रत्याम्नातप्रायश्चित्ता भ्रेषाः[3] स्युर्नैवैनामाद्रियेतेत्यथो[4] ह स्माहौपमन्यवो यदि चैव कृतं प्रायश्चित्तꣳ स्याद्यदि चाकृतं जुहुयादेव तत्र प्रवसथाऽऽकृतिमिति ॥

I. 84. 15. विराजक्रमेष्विति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

I. 85. 6. अपामाचमन इति ॥ द्विर्मन्त्रेणाप आचामेत्सकृत्तूष्णीमिति बौधायनः सकृन्मन्त्रेणाप आचामेद्द्विस्तूष्णीमिति शालीकिः ॥

I. 85. 8. साक्षीकरण इति[5] ॥ स ह स्माह बौधायनः सर्वा एवैता देवताः साक्षिणीः कुर्वीताग्ने व्रतपते व्रतं चरिष्यामीत्यग्निर्वै देवानां व्रतपतिरित्येतदेव[6] नातिमन्येतेति[6] शालीकिः ॥

---

1 Thus emended; प्रवसथाकृति (तौ)ष्विति D C Ben H U (pr. m.); प्रवासादाकृताविति U (sec. m.); प्रवसदाकृताविति G (sec. m.); प्रवसतोकृताविति Bu.

2 ॰चैता MSS.

3 भेषा MSS.

4 Thus C H Ben G U (pr. m.) D (sec. m.); नैवैनामा॰ Be; नैमेनामा Bu D (pr. m.); नैवैनानामा॰ U (sec. m.).

5 साक्षी॰ Bu H and the vivaraṇa (one copy); साक्षि॰ Ben Be C D G U and the vivaraṇa (another copy).

6 Thus Bu Ben U G D C; ॰देवानातीमन्येवेति H; ॰देवानाभि॰ Be.

कपाले नष्टे भिन्ने वेति ॥ सूत्रमाचार्ययोर॥थो ह स्माहौपमन्यवो मनो ज्योतिर्जुषतां त्रयस्त्रिंशत्तन्तव इत्येते स्रुवाहुती हुत्वाथान्यदपिसृजेदिमां देवाँ अप्येत्विति । स एष मन्त्रो भवति सं त्वा सिञ्चामि यजुषेति । पयो वाज्यं वाभिक्रामेतेनैव मन्त्रेण संसिञ्चेदिति । ॥

आज्यग्रहाणां ग्रहण इति ॥ स ह स्माह बौधायनो ऽध्वर्युरेवोभयैर्मन्त्रैर्गृह्णीयात्पौरोडाशिकैश्च याजमानैश्च । याजमानैर्यजमानो ऽनुमन्त्रयेतेत्य॥थो ह स्माह शालीकिरध्वर्युरेवोभयैर्मन्त्रैर्गृह्णीयात्पौरोडाशिकैश्च याजमानैश्च । न याजमानैर्यजमानो ऽनुमन्त्रयेतेत्य॥थो ह स्माहौपमन्यवो यथापि पौरोडाशिका मन्त्रा नाभिवर्तन्त[1] एवमेवापि याजमाना मन्त्रा नाभिवर्तेरन्निति[1] । ॥

परिधीनां परिधान इति ॥ स ह स्माह बौधायनो ऽध्वर्युरेवोभयैर्मन्त्रैः परिदध्यात्पौरोडाशिकैश्च याजमानैश्च । याजमानैर्यजमानो ऽनुमन्त्रयेतेत्य॥थो ह स्माह शालीकिरध्वर्युरेवोभयैर्मन्त्रैः परिदध्यात्पौरोडाशिकैश्च याजमानैश्च न याजमानैर्यजमानो ऽनुमन्त्रयेतेत्य॥थो ह स्माहौपमन्यवो यथापि पौरोडाशिका मन्त्रा नाभिवर्तन्त[1] एवमेवापि याजमाना मन्त्रा नाभिवर्तेरन्निति[1] । ॥

समिधोरभ्याधीयमानयोर्जपतीति ॥ सूत्रं बौधायनस्य ॥ सर्व एवैषो ऽग्नियोजनो मन्त्रः स्यादिति शालीकिः । ॥ २३ ॥

---

१ G and U (sec. m.) each time नाभिविव°, Bu the second time.

I. 88. 8. अथ भूर्भुवः सुवरित्यग्निहोत्रमेताभिर्व्याहृतीभिरुपसादयेदिति ॥ स एवमेव संवत्सरेसंवत्सर इति सूत्रꣳ शालीकेरचो ह स्माह बौधायनो यस्याꣳ रात्र्यामादित उपसादयेत्संवत्सरे पर्यवेते तस्यामुपसाद्य न तत ऊर्ध्वमाद्रियेतेत्यचो ह स्माहौपमन्यवोऽभ्यारूढः खल्वस्यैव[1] संवत्सरो भवति । यस्याꣳ रात्र्यामादित उपसादयेत्संवत्सरे पर्यवेते या ततः पूर्वा रात्रिः स्यात्तस्यामुपसाद्य न तत ऊर्ध्वमाद्रियेतेति । ॥

I. 88. 11. दर्शपूर्णमासावालभमान एताभिर्व्याहृतीभिर्हवीꣳष्यासादयेदिति ॥ स एवमेव संवत्सरेसंवत्सर इति सूत्रꣳ शालीकेरचो ह स्माह बौधायनो यस्यां पौर्णमास्यामादित आसादयेत्संवत्सरे पर्यवेते तस्यामासाद्य न तत ऊर्ध्वमाद्रियेतेत्यचो ह स्माहौपमन्यवोऽभ्यारूढः खल्वस्यैवं[2] संवत्सरो भवति । यस्यां पौर्णमास्यामादित आसादयेत्संवत्सरे पर्यवेते या ततः पूर्वा पौर्णमासी स्यात्तस्यामासाद्य न तत ऊर्ध्वमाद्रियेतेति । ॥

I. 88. 15. चातुर्मास्यान्यालभमान एताभिर्व्याहृतीभिर्हवीꣳष्यासादयेदिति ॥ स एवमेव संवत्सरेसंवत्सर इति सूत्रꣳ शालीकेरचो ह स्माह बौधायनो यस्यां पौर्णमास्यां वैश्वदेवहवीꣳष्यासादये-

---

१ एवं (एवꣳ) instead of एव Be G U C D Bu; the passage is missing in H Ben.

२ एव Be H Ben U, एवं Bu D G C.

त्संवत्सरे[1] पर्यवेते तस्यां[1] वैश्वदेवहवीꣳष्यासाद्य[1] न तत ऊर्ध्वमाद्रियेतेत्यथो ह स्माहौपमन्यवो ऽभ्यारूढः खल्वस्यैव[2] संवत्सरो भवति । यस्यां पौर्णमास्यां वैश्वदेवहवीꣳष्यासादयेत्संवत्सरे पर्यवेते या ततः पूर्वा पौर्णमासी स्यात्तस्याꣳ शुनासीरीयहवीꣳष्यासाद्य न तत ऊर्ध्वमाद्रियेतेति ।

व्याहृतीनां धाम इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

प्राशित्रे ऽवदीयमाने जपतीति ॥ सूत्रं[2] मैत्रेयस्यौपायोः[3] प्राशित्रे ऽवदीयमाने जपत्यग्निर्मा दुरिष्टात्पातु सविताघशꣳसादिति ॥

यजमानभागे यो मे ऽन्ति दूरे ऽरातीयति तमेतेन जेषमिति ॥ सर्व एवैष स्विष्टकृदनुमन्त्रणो मन्त्रः स्यादित्यौपमन्यवः ॥

वेदे यजमानं वाचयतीति ॥ सूत्रꣳ शालीकेरथो ह स्माह बौधायनो वेदे यजमानं वाचयति वेदो ऽसि वित्ति-

१ In G this passage has been changed in the following way: ॰साद्येदिति स संवत्सरे पर्यवेते तस्यां शुनासीरीयहवींष्यासाद्य; in U it runs: ॰सादयेत्संवत्सरे पर्यवेते तस्यां पौर्णमास्यां शुनासीरीयहवींष्यासाद्य: possibly G and U are right in reading (l. 1) शुनासीरीय॰ instead of वैश्वदेव॰ ।

२ सर्व Ben G.

३ Thus Ba G (sec. m.); सूत्रमात्रेयस्या॰ the other MSS.

रसि विदेयेति । यद्यन्नाद्यस्याभिध्यायेत्तस्य[1] नाम गृह्णीया-त्तदेवास्य सर्वं वृङ्क्त इति । ॥

अथ यदि यजमानः सुरापो वा भवति प्रवसति वेति ॥ स ह स्माह बौधायनः प्रवसतः प्रस्तरेणैवास्य सह यजमान-भागमनुप्रहरेद्ध्रुवायै वाज्येन पर्युपस्तीर्य शुक्लामवधाय शुक्ल-यात्प्रस्तरभूयं[2] यजमानभागो गच्छतीत्यन्यो[3] ह स्माह शालीकिराहित एव न सुरापेण संसृज्येताथ चेत्संसृज्येत मन्त्रान्तु हैनं वाचयेत्किमु भक्षान्[4] भक्षयेदिति[4] ॥ भक्षयेत्स्वेव भक्षानित्यौपमन्यवः । ॥

I. 93. 7. आदित्यस्योपस्थान इति ॥ उपनिष्क्रम्याग्न्यगारादादित्य-मुपतिष्ठेतेति बौधायनो ॥ ऽत्रैव तिष्ठन्निति शालीकिः । ॥

पौर्णमास्यामुपवेषस्य करण इति ॥ कुर्यादिति बौधायनो ॥ न कुर्यादिति शालीकिः । ॥

I. 94. 9. व्रतविसर्ग इति ॥ मन्त्रेणाप आचम्य मन्त्रेण व्रतं विसृजे-तेति[5] बौधायनस्तूष्णीमप आचम्य मन्त्रेण व्रतं विसृजेतेति शालीकिरुपवेषेण चरित्वा व्रतं विसृजेतेत्यौपमन्यवः । ॥

---

१ सह twice in Bu G (sec. m.), once in the other MSS.

२ ०भूयं U Bu G (sec. m.); भार्यं Ben H C D G (pr. m.); Be uncertain.

३ गच्छतीं G (sec. m.).

४ भक्षानभक्ष० Bu, भक्षाम्भक्ष० Be.

५ Here and *infra* only Be has the medium, the other MSS. have the active.

यज्ञस्य पुनरालम्भं जपतीति ॥ सूर्यं बौधायनस्त्वाहवनीय-मेवैतेन यजुषोपतिष्ठेतेति शालीकिः ॥ २४ ॥ अष्टमः ॥

अथातः पशुबन्धं व्याख्यास्यामः ॥

स ह स्माह बौधायनः सोपवसथा इष्टिपशुबन्धा इति ॥ सोपवसथा[1] वा[1] सद्योयज्ञा[1] वेति[1] शालीकिः ॥

इष्टिकरण इति ॥ पशौपशावेवाग्नेयेनाष्टाकपालेन यजे-तेति बौधायनो ॥ बभ्रुकर्णां चैवैतदजवशायां[2] च दृष्टं भवतीति शालीकिः ॥

रथ्यो यूपो भवतीति ॥ रथप्रकार[3] एवायं चषालवान्यूपो भवतीति बौधायनो[4] ॥ ऽरथ्य[4] एवायमभ्यगारिको ऽचषालो यूपः स्यादिति शालीकिः ॥

विशाखो यूपो भवतीति ॥ ऊर्ध्वं रशनाकाशाद्[5] शाखे चतुरश्रे चतुरश्रचषाले[6] स्यातामथेतरो ऽष्टाश्रिर्यूपः स्यादिति

---

1 Thus G (sec. m.) and Bu (the last MS. reading, however, °यज्ञो); सोपवसथासद्योज्ञावेति Ben U D C; सोपवसथावासद्योयज्ञावेति H; सोपवसथौः सद्योयज्ञावेति Be; cp. Rudradatta on Āp. VII. 6. 3.

2 °दजवशा° Bu G (pr. m.); °दजावशा° Ben U C D G (sec. m.); °दप्रवशा° Be; °दंजावशा° H.

3 रथाकार G D, रथकार C.

4 Thus Be (without, however, the avagraha); °बायन (or नः) रथ the other MSS.

5 °काशाद् MSS.

6 Thus Be; चतुरश्रेरचषालें H; चतुरश्रे (शे)चषाले the other MSS.

बौधायनः। शाखैवेयमपशाला स्यादथेतरो ऽष्टाश्रिर्यूपः स्यादिति शालीकिः॥

I. 107. 6. पशुकरण इति॥ सूत्रं बौधायनस्य। व्रीहीणामपि कुर्यादिति शालीकिः॥

I. 107. 8. पशुहोतुर्होम इति॥ सूत्रं बौधायनस्योपवसथ एव पशुहोतारं जुहुयादिति शालीकिः॥

I. 107. 10. यूपाहुत्यै हवन इति॥ सूत्रꣳ शालीकेरथो ह स्माह बौधायन आज्यं धारणी आदाय यूपस्यान्तिके ऽग्निं मथित्वा यूपाहुतिं जुहुयादिति॥

I. 108. 4. आमस्तनस्याभिहोम इति॥ सूत्रꣳ शालीकेरथो ह स्माह बौधायन एवमेव जुह्वामन्तर्धाय हिरण्यमभिजुहुयाद्वनस्पते शतवल्शो विरोह स्वाहेति। सहस्रवल्शा वि वयꣳ रुहेमेत्यात्मानं प्रत्यभिमृशेताथोदकꣳ[1] स्पृशेदिति॥

I. 108. 12. यूपस्यावाहन इति॥ यः प्राङ् वोदङ् वा पतेत तमावाहयेदिति बौधायनो। यां[2] कां[2] चिद्दिशमभि पतेताव्यापन्नस्यास्यादावाहयेदेवेति शालीकिः॥

I. 108. 13. वेद्यै करण इति। सूत्रमौपमन्यवीपुत्रस्याथो ह स्माह बौधायनो रथसंमिता स्याद्रथाक्षेण पश्चात्तिरश्ची रथेषया

१ Thus (and cp. Vol. I, p. 108, 7, medium!) Bu G (sec. m.); °ध्यमतो° Be; °श्येदि° the other MSS.

२ यांकांचदिशम° G (sec. m.).

प्राचौ. रथयुगेन[1] पुरस्तात्तिरश्च्युत्तरयुगेनोत्तरनाभिरिति[2] ॥ चतुर्निमिता वा स्यात्सर्वतो वा दशपदा विराट्संपन्नेति[3] शालीकिः । ॥ २५ ॥

चात्वालस्य परिलेखन इति ॥ सूत्रं शालीकेर्वो ह स्माह बौधायन एवमेव परिलिखन्वाह्यतः[4] पुरस्ताच्चोत्तरतश्चालिखेदिति । ॥

लोकाग्नीनां हरण इति ॥ सूत्रं शालीकेर्वो ह स्माह बौधायन उत्तरवेद्यामाग्नीध्रमुपवेश्य[5] ततो लोकाग्नीन्हरेदित्युद्देशादेव लोकाग्नीन्हरेदित्यौपमन्यवः । ॥

उत्तरवेद्यै परिमाण इति ॥ सूत्रं शालीकेर्वो ह स्माह बौधायनो रथसंमितायामेव धौरेयशम्यया परिमिमीत[6] । नाच मध्यमा वेदिर्भवतीति । ॥ .

आख्यातं यूपावटस्य परिलेखनम् ॥

१ °युगेन Bu.

२ उत्तरयुगेन all the MSS. (exc. U sec. m.) and the vivaraṇa.

३ Thus G; विराट्संमितेति U (sec. m.); विराट्संपन्नेति H Ben D Be CU (pr. m.); विराट्संपन्नेति Bu.

४ Thus Be DC; °लिखन्वाह्यतः H; °लिखन्वाह्यतः Ben; °लिखेद्वाह्यतः Bu; °लिखेद्वाह्यतः G (sec. m.) U.

५ Thus Bu and a bhāṣya in the Bombay MS. class I B 5; °ध्रमुपविश्य Be; °ध्र उपविश्य Ben HUDC; °ध्रं उपविश्य G.

६ Thus Bu G (pr. m.); °मिमीते the other MSS.

I. 110. 1. उत्तरवेद्या अलंकरण[1] इति ॥ सूत्रं बौधायनस्य ॥ पूर्वधुरेवोत्तरनाभिं परिनिस्तिष्ठेदिति शालीकिः । ॥

I. 110. 13. स्फ्येनाग्नीध्रो निघ्नन्नेति होतुः पदानीति ॥ सूत्रꣳ शालीकेश्चो ह स्माह बौधायनः पदात्पदं पांसूनुपसंहृत्य[2] तानुत्तरेणोत्तरनाभिमतिकिरेदिति । ॥

I. 110. 16. उत्तरवेद्यै प्रोक्षण इति ॥ सूत्रꣳ शालीकेश्चो ह स्माह बौधायनो मन्त्रानुदिश्यं चैनां प्रोक्षेन्मन्त्रानुलोकं चेति । ॥

I. 110. 20. अतिशिष्टानां निनयन इति ॥ वेद्यै दक्षिणेऽꣳसे निनयेदिति बौधायन ॥ उत्तरवेद्या इति शालीकी ॥ रथसंमितायामेव दक्षिणमꣳसमुपनिनयेदित्यौपमन्यवः । ॥

I. 111. 1. उत्तरवेद्यै व्याघारण इति ॥ सूत्रं बौधायनस्य ॥ प्रत्यनीकेष्वेनां[3] व्याघारयेदिति शालीकिर्दक्षिणयैव व्याघारयन्मध्ये हुत्वोत्तरमꣳसमभिजुहुयादित्यौपमन्यवः । ॥

I. 111. 11. इध्मस्य निधान इति ॥ सूत्रं बौधायनस्य ॥ तूष्णीमेवेध्मं निदध्यादिति शालीकिः । ॥

I. 111. 14. अध्वराहुतीनाꣳ होम इति ॥ सूत्रं बौधायनस्य ॥ चत्वारि चतुर्गृहीतानि जुहुयादिति शालीकिः । ॥

I. 112. 11. पृषदाज्यग्रहणे संमार्जनसादन इति ॥ सूत्रं बौधायनस्य ॥

---

१ ०कार Bu. Be.

२ ०मनुपसंहत्य Be; ०मुपहत्य GU (sec. m.); ०मुपसंहृत्य Bu H Ben U (pr. m.) DC.

३ इध्मनीके० Bu Ben HC; इध्मनीके० Be; पध्मनीके० D; प्रत्यनीके० GU, the vivarana and the bhāṣya.

लभेतौपभृते[1] संमार्जनसादने इति शालीकिर्नं संस्रवेदित्यौपमन्यवः ॥

पृषदाज्यस्य ग्रहण इति ॥ सूत्रं बौधायनस्य" छदयान्तेन गृह्णीयादिति शालीकिः" सकृद्याज्यं च दधि चैतैः पञ्चभिर्गृह्णीयादित्यौपमन्यवो" ऽन्यो ह स्माहौपमन्यवीपुत्रस्तूष्णीं द्विरुपस्तीर्य सर्वैर्मन्त्रैर्दध्यानीय तूष्णीं द्विरभिघारयेदिति ॥

पृषदाज्यस्य प्रायश्चित्तकरण इति ॥ ग्रहणाद्याचरणाद्वैवास्य[2] प्रायश्चित्तं कुर्वीतेति बौधायनः" सादनादया[2] चरणाद्वैवेति[3] शालीकिर्नं तु इषितमाच[4] इत्यौपमन्यवः[4] ॥

यूपस्य प्रक्षालन इति ॥ सूत्रं बौधायनस्य" तूष्णीमेव यूपं प्रक्षालयेदिति शालीकिः ॥

यूपस्य प्रोक्षण इति ॥ स ह स्माह बौधायनः खदिरग्रन्थं मैत्रावरुणदण्डं यूपशकलꣳ हिरण्यमुदपात्रमित्येतत्संनिधाय यूपं प्रोक्षेदित्येवं यूपेन यूपसंयोजनानि प्रोक्षेत्पशुना पशुसंयोजनानीति शालीकिः ॥

---

१ Thus the vivaraṇa; °तोपभृते Bu: तौपभृतः the other MSS.; cp. Kāty. V. 4. 28.

२ Or are we to write °इयाचरणा°? The meaning of this passage is not clear to me.

३ चाच effaced in G.

४ Meaning and reading uncertain; इषतिमाच इ° G (sec. m.) and the bhāṣya; इषितमाचे the vivaraṇa; इषतपाच इ° Bu; इषतिमाच इ॰ Be; पषिमाचमि° Ben HCDG (pr. m.); पतिममाच° U.

I. 113. 18. यूपस्य परिक्रमण[1] इति ॥ दक्षिणेनेति बौधायन ॥ उत्तरेणेति शालीकिः । ॥

I. 114. 2. यूपस्याञ्जन इति ॥ सूत्रं बौधायनस्य ॥ अग्निष्ठामेवेति शालीकिः । ॥

उदपात्रस्योपनिनयन इति ॥ प्रदक्षिणमुपनिनयेदिति बौधायनो ॥ यथोपपादमिति शालीकिः । ॥

I. 114. 16. यूपस्य परिव्ययण इति ॥ त्रिरेव मन्त्रं ब्रूयात्त्रिः कर्मावर्तयेदिति बौधायनः ॥ सकृदेव मन्त्रं ब्रूयात्सकृत्कर्मेति[2] शालीकिः । ॥

*ib.* नाभिदघ्ने परिव्ययतीति ॥ सूत्रं बौधायनस्य ॥ मध्यदेश इति शालीकिः । ॥ २६ ॥

I. 114. 21. स्वरोरवगूहन इति ॥ सूत्रं बौधायनस्य ॥ अग्निष्ठां प्रतीति शालीकिः । ॥

I. 115. 2. पशोरुपाकरण इति ॥ सूत्रमौपमन्यवीपुत्रस्य ॥ त्वो ह स्माह बौधायन एवमेवोपाकुर्यान्न तु जोषयेदिति ॥ जोषयेच्चैव शुद्ध्याच्चोपाकरणायेति शालीकिर् ॥ त्वो ह स्माहौपमन्यव एवमेवैनं पुरस्तात्प्रत्यगावृत्तं[3] दर्हिर्भ्यां च प्लक्षशाखया चाभिषेधेदेतस्यां[4] च प्लक्षशाखायाꣳ हृदयं निधायावद्येदिति । ॥

---

1 Thus Ben HDCUG (pr. m.) and the vivaraṇa; ०क्राम G (sec. m.); ०क्रम Bu Bo.

2 ब्रूयात्त्रिः कर्मेति G (sec. m.)

3 Thus DGU: ०वर्तं Bu; ०वृतं the other MSS.

4 Thus H Ben DCBo G (pr. m.) and the vivaraṇa; ०भिषेधेदे० G (sec. m.); ०भिवधेदे० U; B has a lacuna.

अरण्योः समञ्जन इति ॥ सूत्रँ शालीकेरथो ह स्माह बौधायनोऽग्नेर्जनित्रमसीति शकलमाददीत । वृषणौ स्थ इति पूर्वं[1] वा शकले वा [2]निदध्यादुर्वश्यसीत्यधरारणिमाददीत । पुरूरवा इत्युत्तरारणिमथैने आज्यस्थाल्याँ समज्य[3] घृतेनाक्ते वृषणं दधाथामिति समवदध्यादिति ॥

पशुरशनाया आदान इति ॥ मन्त्रेणाददीतेति बौधायनस्तूष्णीमिति शालीकिः ॥

पशोरभिधान इति ॥ सूत्रं बौधायनस्य ग्रीवायामेवाभिदध्यादिति[4] शालीकिः ॥

७.१० पशोर्नियोजन इति ॥ सूत्रं बौधायनस्य यूप एव पशुं नियुञ्ज्यादिति शालीकिः ॥

पशोः प्रोक्षण इति ॥ तूष्णीँ संस्कृताभिरद्भिः प्रोक्षेदिति बौधायनः कमण्डलुभिरिति[5] शालीकिः ॥

7. पशोः समञ्जन इति ॥ सूत्रँ शालीकेरथो ह स्माह बौधायनो ललाटे स्रुचं प्रतिष्ठाप्यानुच्छिन्दन्नकर्षदा दक्षिणायै श्रोणेरिति ॥

---

१ पूर्वं Be Ben U (pr. m.).

२ वानुनिदध्या॰ Be U (sec. m.).

३ Thus HD; समंज्य U Ben; समज्य C; समंज्याद् Be; समनक्ति Bu G (sec. m.).

४ Thus G and U (sec. m.) and the vivaraṇa; ग्रीवायामेवमभि॰ the other MSS.

५ Thus D Bu; कमंडलुभि॰ GUC (sec. m.); कामंडलुभि॰ the other MSS.

स्वरुग्रहणस्योत्पादन इति ॥ यूपः स्वरुग्रहणमुत्पादयेदिति बौधायनः ॥ पशुरिति शालीकिस्तन्त्रमित्यौपमन्यवो ॥ देवतेत्यौपमन्यवीपुत्रः ॥ २७ ॥ नवमः ॥

I. 116. 13. अत्याश्रावण इति ॥ सूत्रं बौधायनस्य ॥ सोम एवात्याश्रावयेदिति शालीकिः । ॥

I. 117. 2. पशोः समञ्जन इति ॥ स ह स्माह बौधायनो यथा[1] समञ्ज्यात्[2] तथा[1] विशस्यात्[3] लेतया[1] शृतस्यावद्येदिति ॥ यथोपपादमिति शालीकिः । ॥

I. 117. 4. पशोः पर्यग्निकरण इति ॥ महच्छामित्रं पर्यग्नि कुर्यादिति बौधायनो ॥ यदन्यच्छामित्रादिति शालीकिः ॥ पशुं चाज्यानि चेति राथीतरः ॥ पशुमेवेत्यौपमन्यवः । ॥

I. 117. 6. अपाव्यानाᳪ होम इति ॥ स ह स्माह बौधायन एकं प्रथमे पर्याये जुहुयाद्द्वे मध्यमे द्वे उत्तम इति ॥ यथोपपादमिति शालीकिः । ॥

I. 117. 12. उपप्रैषाश्रावण इति ॥ सूत्रं बौधायनस्य ॥ नाश्रावयेदिति शालीकिः । ॥

I. 117. 17. पशोर्निहनन इति ॥ प्रतीचीनशिरसमुदीचीनपादमिति

१ यथा and तथा (instead of यथा and तथा) some of the MSS.

२ समंज्यातथा Bu.

३ विशंस्या॰ all; विशसनं न कुर्यात् the vivaraṇa; cp. Āp. VII. 14. 13 and Bhāradvāja VI. 11: या चक्रा धारा तथा पशुᳪ समनक्ति तथैव हविषः शृतस्यावद्यतीत्यथा विशस्ति यथाकामी विशसन इत्यपरम् ।

बौधायन उदीचीनशिरसं प्रतीचीनपादमिति शालीकिः प्राचीनशिरसमुदीचीनपादमित्यौपमन्यवः ॥

पशुरशनाया उद्गृहन इति ॥ चात्वाले रशनामुदस्येदिति बौधायनो ऽद्भिरभ्युक्ष्यासंचर[1] इति शालीकिः ॥

पत्न्या उदानयन इति ॥ सूत्रं शालीकेरन्यो ह स्माह बौधायनो ऽनर्वा प्रेहीत्येनां प्रणयेदथैनामादित्यमुदीक्ष्यानर्वा प्रेहीत्येव प्रणयेदिति ॥

अपामवेक्षण इति ॥ उपरिष्टाच्चात्वालस्यावेक्षयेदिति बौधायनः पार्श्वतः पशोरिति शालीकिः ॥

बर्हिषः समञ्जन इति ॥ सूत्रं शालीकेरन्यो ह स्माह बौधायनस्तथाक्तमेवेतरस्यादितरत एवैनदक्त्वा निरस्येद्रक्षसां भागो ऽसीत्यथोदकं स्पृशेदिति ॥ २८ ॥

वपायाः प्रदान इति ॥ आज्यस्रुवा वा स्रुहिरण्यं वा[2] द्वितीये चतुर्थे चेति पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

पशुपुरोडाशस्य निर्वपण इति ॥ सूत्रं बौधायनस्य पशुमालभ्य पुरोडाशं निर्वपेदिति शालीकिः ॥

पशोः प्रच्यावन इति ॥ हृदयजिह्वे[3] प्रच्यावयेदिति बौधायनो हृदयमेवेति शालीकिः ॥

---

१ हिरभ्युक्ष्य H Beu DCG (pr. m.).

२ Found only in G and U (sec. m.) and the vivaraṇa; cp. also Rudradatta on Āp. VII. 20. 9.

३ हृदयं जिह्वां Bu G and U (sec. m.) Keś.; हृदयं जिह्वे U (pr. m.); हृदयजिह्वा D.

I. 121. 10. हृदयस्य श्रपण इति ॥ सूत्रᳲ शालीकेरथो ह स्माह
बौधायनः शूलपाकमेवैनच्छ्रपयेद्देव हृदयशूलं परिनिखिष्टे-
दुपरिष्टाच्च मन्त्रेणोपस्पृशेदिति[1] ॥
I. 121. 13. पशुपुरोडाशस्येडाया अवदान इति ॥ सूत्रᳲ शालीकेरथो
ह स्माह बौधायनो निरवदायैवास्य स्विष्टकृतमिडामवद्येदेवᳲ
सवनीयानामिति ॥
I. 122. 2. हृदशूलस्य करण इति ॥ सूत्रं बौधायनस्य बर्हिष्येव
शुष्कशाखायाᳲ हृदयं निधायावद्येदिति शालीकिः ॥
I. 122. 3. पशोः संवदन इति ॥ सूत्रᳲ शालीकेरथो ह स्माह
बौधायनः[2] पृष्ठाभिक्रामेत्पूषा[3] मा पशुपाः पात्विति द्वितीयं
पृष्ठाभिक्रामेत्पूषा[3] मा प्रपथे पात्विति तृतीयं पृष्ठाभिक्रामे-
त्पूषा[3] माधिपतिः पात्विन्ति ॥
I. 122. 9. पशोरभिघारण इति ॥ सूत्रं बौधायनस्य पृषदाज्येन
हृदयमभिघार्याज्येनेतराण्यभिघारयेदिति शालीकिः ॥
पशोरासादन इति ॥ पशुश्रोणामासादयेदिति बौधायन-
स्रूच्योमिति शालीकिः ॥
I. 122. 17. पशोरवदान इति ॥ स ह स्माह बौधायनो हृदयस्य

---

१ संवेशोपः स्पृ॰ G (sec. m.) U Bu; संवेशाप (पः) स्पृ॰ Be G (pr. m.) DC Ben H (मन्त्रेणोपस्पर्शनम् the vivaraṇa).

२ प्रथमं ins. DC.

३ Thus Bu G (sec. m.); ॰तिक्रामे॰ U Be Ben H; ॰विक्रामे॰ DC, but cp. Ap. VII. 23. 6 अभिप्रव्रजति with Rudradatta's remark.

जिह्वाया वक्षस इत्येतेषामेवानुपूर्वमवद्येत्तृतीयं[1] पार्श्वावदानं पश्चावत्तिनां कुर्यादित्य" थो ह स्माह शालीकिः सर्वेषामेवानुपूर्वमवद्येन्न पार्श्वं तृतीयमवदानं पश्चावत्तिनां कुर्यादिति ' ॥ २९ ॥

पशोः संमर्शन इति ॥ स ह स्माह बौधायन उभयानि[2] संमृश्येद्येभ्यश्चावद्यत्यनुगतानि चेति " अनुगतान्येवेति शालीकिः ' ॥

कुम्भतः श्रीणातीति ॥ सूत्रं बौधायनस्य " समस्तेनैवास्य पार्श्वेन वसाहोमं श्रीणीयादिति[3] शालीकिः ' ॥

पशोः प्रतिपरिहरण इति ॥ प्रतिपरिहरेदिति[4] बौधायनो " न प्रतिपरिहरेदिति शालीकिः ' ॥

प्रत्याक्रमण इति[4] ॥ सूत्रं बौधायनस्य " जघनेनोत्तरवेदिं परिक्रम्याश्रावयेदिति शालीकिः ' ॥

दिशां प्रतीज्याया इति ॥ सूत्रं शालीकेर् " थो ह स्माह बौधायनः पुरस्ताद्वनस्पतेः समान्यो दिशः प्रतियजेद्दिग्भ्यः स्वाहेति ' ऊर्ध्वोपतिष्ठेत[5] स्वाहा दिग्भ्यो नमो दिग्भ्य इति ' ॥

---

१ एतेषाम् Bu G (sec. m.); एषाम् the other MSS.

२ Thus Bu G (sec. m.); सर्वाणि the other MSS.

३ श्रिणीयादिति Bu; श्रीणातीति the other MSS.

४—४ The words प्रतिपरि° ... °क्रमण इति left out by all the MSS. exc. Bu and G and U (sec. m.).

५ °तिष्ठते MSS.

I. 124. 7. वनस्पतेस्स्वर्याया इति ॥ सूत्रं बौधायनस्य ॥ पृषदाज्या- चतुर्गृहीतेन चरेदिति शालीकिः । ॥

I. 124. 13. वनिष्ठोराधान इति ॥ षडवत्तं संपादयेदिति बौधा- यनः ॥ सकलमेवेति शालीकिः । ॥

I. 124. 18. चोपयजेष्विति ॥ सूत्रं शालीकेर्न्यो ह स्माह बौधायन आहवनीयादेवोदीचो ऽङ्गारान्निर्वर्त्य तेषूपयष्टोपयजेदिति । ॥

I. 125. 2. गुदतृतीय इति ॥ एकादशधा कृत्वोपयष्टोपयजेदिति बौधायनो ॥ ऽपच्छेदमिति[1] शालीकिः ॥ समस्तमेवैनमनु- प्रहृत्य[2] सर्वैर्मन्त्रैरनुमन्त्रयेतेत्यौपमन्यवः । ॥

I. 125. 4. अथ बर्हिषि हस्तौ निमार्ष्टीति ॥ सूत्रं बौधायनस्यापो ऽप्यस्मा[3] अन्वानयेयुरिति[3] शालीकिः । ॥ ३० ॥

I. 125. 6. स्वरोर्होम इति ॥ सूत्रं बौधायनस्य ॥ चतुर्गृहीते ऽवधाय जुहुयादिति शालीकिः । ॥

I. 125. 10. पत्नीनां संयाजन इति ॥ सूत्रं बौधायनस्याज्येनैव[4] पत्नीः संयाजयेदिति शालीकिः[4] । ॥

---

१ °पच्छेदमिति Ben, with प the other MSS. and the vivaraṇa cp. XX. 12 : 26. 12, XXII. 15 s. f.

२ °मेवैतमनु Bu G (sec. m.); °मेवैतदनु° H Ben Be CDUG (pr. m.)

३ चास्मा अन्वानये° G (sec. m.) Ben; प्यास्मा अन्वानये° CD; वापस्मा अन्वानये° Bu; यस्मा अन्वानुनये° H; अन्वानये° Be; यस्मा अन्वानये° U.

४ आचार्ययोः instead of बौधायनस्य and औपमन्यवः instead of शालीकिः G (sec. m.).

उत्तानायै जाघन्यैं देवानां पत्नीर्यजति नीच्या अग्निं गृहपतिमिति ॥ सूत्रं बौधायनस्य ॥ सर्वमेवैतदुत्तानायै जाघन्यै कुर्यादिति शालीकिः । ॥

उत्तानायै जाघन्यै होत्र इडामवद्यति[1] नीच्या[2] अग्नीधे[2] षडवत्तमिति ॥ सूत्रं बौधायनस्य ॥ सर्वमेवैतदुत्तानायै जाघन्यै कुर्यादिति शालीकिः । ॥

पत्नीकरणहोमस्य करण इति ॥ कुर्यादिति बौधायनो ॥ न कुर्यादिति शालीकिः । ॥

ध्रुवाया आप्यायन इति ॥ स ह स्माह बौधायन उभावेव ध्रुवामाप्याययेतामध्वर्युश्च यजमानश्चेत्य॥ध्वर्युरेव ध्रुवामाप्याय्य समिष्टयजूंषि जुहुयादिति शालीकिः । ॥

समिष्टयजुषां होम इति ॥ सूत्रं बौधायनस्य ॥ त्रीणि चतुर्गृहीतानि जुहुयादिति शालीकिः । ॥

हृदयशूलस्योद्वासन इति ॥ कुर्वीतात्र समिधाश्च दुर्मित्रास्येति बौधायनो ॥ न कुर्वीतेति शालीकिः । ॥

समिधां करण इति ॥ सर्व एवार्द्राः सपलाशाः कुर्वीरन्निति बौधायनो ॥ यजमानश्चैव पत्नी चेति शालीकिः । ॥

बर्हिषः पर्युपोषण इति ॥ वेद्यै दक्षिणेंऽसे पर्युपोषेदिति बौधायन ॥ उत्तरवेद्या इति शालीकिः । ॥

---

1 Thus G (sec. m.); इडां समवद्यति the other MSS.

2 नीच्याग्नीधे Bu GDC; नीच्याग्नीध्रे H Ben U.

I. 126. 16. सक्तुहोमस्य करण इति ॥ त्रीन्सक्तुहोमान्कुर्यादिति बौधायन" एकमेवेति शालीकिः" प्रदाव्य एव सक्तुहोमेन चरेदित्यौपमन्यवः' ॥

I. 127. 6. III. 54. 10. आख्यातं देवतानामुपस्थानम् ॥

I. 127. 8. यूपस्योपस्थान इति ॥ सूत्रं बौधायनस्याहवनीयमेवैतेन यजुषोपतिष्ठेतेति शालीकिः' ॥

I. 127. 10. समन्वानयन[1] इति ॥ सूत्रं बौधायनस्य" नाद्रियेतेति शालीकिः' ॥

I. 127. 13. पूर्णाहुत्यै करण इति ॥ कुर्यादिति बौधायनो" न कुर्यादिति शालीकिः' ॥

I. 127. 14. दक्षिणायै दान इति ॥ धेनुं वानड्वाहं वा दद्यादिति बौधायनो" ऽन्यद्वैकधनमिति शालीकिरन्यद्वैकधनमिति शालीकिः' ॥ ३१ ॥ दशमः ॥

॥ इति विंशः[2] प्रश्नः ॥

---

१ Thus B. u HGUC and the vivaraṇa; समन्वायन Bu; समन्वा-नयन Be; समन्वान D.

२ On the praśna-number cp. Preface to Vol. II, p. ii.

अथातश्चातुर्मास्यानि व्याख्यास्यामः ॥

स ह स्माह बौधायनो यावज्जीवप्रयुक्तान्येव चातुर्मास्यानि स्युरन्तर्मिथुनानि । प्रथमे त्वेव संवत्सरे व्रतं चरेदित्य॥थो ह स्माह शालीकिः सांवत्सरिकाण्येव खलु[1] चातुर्मास्यानि व्रतचर्यवन्ति भवन्तीति ॥ यथाप्रयोगमित्यौपमन्यवः । ॥

5. पयसां मन्थामन्थ इति ॥ उभये सायंप्रातर्दोहा मन्थवन्तः स्युरिति बौधायनस्तू।ष्णीका इति शालीकिर॥थो ह स्माहौपमन्यवो यत्प्राक्सोमेज्यायै चातुर्मास्यिकानि पयाꣳसि तूष्णीकानि स्युरथोर्ध्वꣳ[2] सोमेज्यायै मन्थाꣳस्तभेरन्नित्य॥थो[3] ह स्माहाश्मीगविः पञ्चैवैतानि पयाꣳसि मन्थवन्ति भवन्ति[4] दर्शपूर्णमासयोर्मैत्रावरुण्यामिक्षायां दाक्षायणयज्ञे कौण्डपायिन्ये सौत्रामण्यामिति । ॥

8. वैश्वानरपार्जन्ययोः[5] करण इति ॥ कुर्यादिति बौधायनो॥ न कुर्यादिति शालीकिः । ॥

3. 9. १५ फाल्गुन्यां वा चैत्र्यां वा पौर्णमास्यां विश्वेभ्यो देवेभ्यो वत्सा अपाकृता भवन्तीति ॥ सूत्रं बौधायनस्यौदगयन आपूर्यमाणपक्षस्य पुण्याह इति शालीकिः । ॥

१ Om. H Be.

२ Thus H Ben Be G (pr. m.) U DC Keś.; स्युरत ऊर्ध्वं Bu; थव effaced in G.

३ Thus Bu; मंथां G; मंथा the other MSS.

४ भवंतीति Bu Be G (sec. m.).

५ Thus U (sec. m.); °पार्जन्यायाः the other MSS.

I. 128. 7. प्रसूमयं[1] प्रस्तरमिति[1] ॥ सूत्रं बौधायनस्य सर्वमेवैतद्बर्हिः प्रसूमयᳲ स्यादिति शालीकिः ॥

I. 128. 12. पञ्चहोतुर्होम इति ॥ सूत्रं बौधायनस्योपवसथ एव पञ्चहोतारं जुहुयादिति शालीकिः ॥

I. 131. 5. प्रयाजानामनुमन्त्रण इति ॥ चतुरश्चतुर्भिरनुमन्त्र्य[2] पञ्चमेनेतराननुयमियादिति[3] बौधायनश्चतुरश्चतुर्भिरनुमन्त्र्य सर्वेषां पारे पञ्चमेनानुमन्त्रयेतेति[4] शालीकिः ॥

एककपालानां मन्त्रामन्त्र इति ॥ मन्त्रवन्तः स्युरिति बौधायनस्तूष्णीका इति शालीकिः ॥

एककपालानामवदान इति ॥ स ह स्माह बौधायनश्चातुर्मास्यिकानामेव नावद्येदथेतरेषामवद्येदित्यथो ह स्माह शालीकिस्तन्त्रहराणामेवावद्येदथेतरेषां[5] नावद्येदित्यथो ह स्माहौपमन्यवो य एव वैश्वदेवपदस्थि तस्य नावद्येदथेतरेषामवद्येदिति ॥

---

१ •मयः प्रस्तर इति MSS. exc. Bu U (pr. m.) and the vivaraṇa; the accusative as XXIII. 18: मावैः पूर्वं समयचूनिति।

२ Thus Be; चतुर्भिश्चतुरो G (sec. m.); चतुरश्चतुर्भिश्चतुरो G (pr. m.) चतुर्भिश्चतुर्भिश्चतुर्भिरन् D; चतुर्भिश्चतुर्भिरन्• Ben C.

३ •नुयमीयादिति Bu G (sec. m.); यमीयादिति (without नन्) Ben HDC; पंचमीयादिति Be.

४ •मंत्रयेदिति MSS.

५ •हराणामेवा• Be U (sec. m.): •हराणमेवा• Ben; •हरणानामेव G (sec. m.); •परेषमेवा• Bu; •हरणमेवा• HU (pr. m.); •हरणमेवा• C (pr. m.), •हराणमेवा• C (sec. m.).

एककपालानामभिहोम इति ॥ यः स्रुचि सꣳस्रावः स्यात्तेनाभिजुहुयादिति बौधायनश्चतुर्भिश्चतुर्भिश्चतुर्नामभिरेकैकमिति शालीकिः' ॥ १ ॥

एककपालानामाग्रयणस्यानुसꣳहरण इति ॥ अनुसꣳहरेदिति बौधायनो" नानुसꣳहरेदिति शालीकिः' ॥

वाजिनस्य चर्याया इति ॥ उपाꣳशु चरेदिति बौधायन" उच्चैरिति शालीकिः' ॥

वाजिनस्य भक्षण इति ॥ सूत्रꣳ शालीकेर्"नो ह स्माह बौधायनो ऽवघ्रभक्षणेनैवेतरे[1] भक्षयेयुर्यजमान एव प्रत्यक्षं भक्षयेदिति' ॥

निवर्तन इति ॥ निवर्तनेनोपवाप्योभयं[2] केशश्मश्रु वापयीतेति बौधायनो" निवर्तनेनोपवाप्य[2] श्मश्रूण्येव वापयीत न केशानिति शालीकि"र्निवर्तनेनोपवाप्य[2] नैव श्मश्रूणि वापयीत न केशानित्यौपमन्यवः' ॥

वरुणप्रघासेषु दक्षिणस्य विहारस्य पात्राणां करण इति ॥ सूत्रं बौधायनस्य" सौवर्णानि वा राजतानि वा स्युरिति शालीकिः" शमीमयानीत्यौपमन्यवः ॥

---

१ °भक्षणेनै° Bu G and U (sec. m.); °भक्षे° DHC Ben Bo G and U (pr. m.).

२ Uncertain reading; °नोपवाप्य each time H Ben Be UDG (pr. m.) C, °नोवाप्य G (sec. m.), thus also (besides °नोपाप्य) Bu: the vivaraṇa seems to have read also °नो वाप्यः; it runs: निवर्त(ने)नो वाप्यः केशा मलत्वा विभज्य उपमन्दः च (read च ?) मन्त्रकार्यं।

सान्नयजुषोर्हरण इति ॥ व्यतिचारꣳ सान्नयजुषी हरेयातामिति[1] बौधायनः ॥ सहेति शालीकिः । ॥

आज्यस्यावेक्षण इति ॥ दार्शपौर्णमासिकायै दक्षिणत उपविश्य दक्षिणमवेक्ष्योत्तरमवेक्षेतेति बौधायनो ॥ वेदिसंधावुपविश्य दक्षिणमवेक्ष्योत्तरमवेक्षेतेति शालीकिर्॥ मध्यत[2] इत्यौपमन्यवः । ॥

I. 133. 8. ऐषीकꣳ शूर्पमिति ॥ सूत्रं बौधायनस्य ॥ दर्भमयं वा कुशमयं वेति शालीकिः ॥ प्रत्यक्षमित्यौपमन्यवः । ॥

I. 137. 12. शूर्पस्यानुप्रहरण इति ॥ अनुप्रहरेदिति बौधायनो ॥ नानुप्रहरेदिति शालीकिर्॥ अग्निरभ्युक्ष्य भुञ्जीतेत्यौपमन्यवः । ॥

I. 138. 8. आमिक्षयोरवदान इति ॥ सूत्रꣳ शालीकेर्॥ अपो ह स्माह बौधायन आमिक्षयोरवदाय मेषीमवदध्यान्[3] शमीपर्णकरीरसक्तूनामवद्येद् घासोक्ता ह्येते भवन्तीत्यु॥त्तमेनावदानेन सर्वं विश्वलोपꣳ[4] समवदध्यादित्यौपमन्यवः[5] । ॥ २ ॥

I. 138. 4 (?) मारुत्यै पर्याया इति ॥ सूत्रं बौधायनस्योत्तर एवाग्नौ मारुत्या चरेदिति शालीकिः । ॥

१ Thus (and cp. XXV. 1. s. f.) Bu Ben HGU ; हरियामिति DC ; हरेतामिति Be.

२ मध्य Bu G (sec. m.).

३ Thus H Ben DC ; मेषमुपद॰ Bu ; मेषावुपद॰ Be G and U (sec. m.).

४ Thus Bu Be U (sec. m.) ; ॰लोपमवदध्या॰ H Ben. G ; ॰लोपमवध्या॰ D ; ॰लोपमवध्या॰ C.

५

I. 141. 20. गृहमेधीयस्य श्रपण इति ॥ पर्यग्नि श्रपयेदिति बौधायनो '' ऽग्निष्विति शालीकिः ' ॥

शाकलानां करण इति ॥ कुर्यादिति बौधायनो '' न कुर्यादिति शालीकिः ' ॥

I. 141. 22. गृहमेधीयस्यासादन इति ॥ दात[1] एव बर्हिष्यासादयेदिति बौधायनो '' ये ऽन्ये ऽनुपयुक्ताः कुशाः स्युस्तेष्विति शालीकिः ' ॥

I. 142. 1. गृहमेधीयस्य चर्याया इति ॥ उपांशु चरेदिति बौधायन '' उच्चैरिति शालीकिः ' ॥

शाकलानामनुप्रहरण इति ॥ अनुप्रहरेदिति बौधायनो '' नानुप्रहरेदिति शालीकिः ' ॥

I. 142. 5. प्रतिवेशस्य श्रपण इति ॥ अन्वाहार्यपचने श्रपयेदिति बौधायनो '' ग्रामाग्नाविति शालीकिः ' ॥

I. 142. 10. पूर्णदर्व्यस्य[2] होम इति ॥ सूचमाचार्ययो''र्व्याहृतीर्हुत्वा ब्रह्मणो हिंकारे[3] जुहुयादिति गौतमः ॥ ३ ॥ प्रथमः ॥

I. 143. 19. महापितृयज्ञस्य बर्हिरिति ॥ समूलमेतद्बर्हिर्भवतीति बौधायनस्तत्र नास्ति प्रत्यभिमर्शन इति '' चातिशेषं[4] भव-

---

१ दात Ben H (as partic. from दाति); दप Be; C D om. दात एव: विमव G and U (sec. m.), thus var. विमय the vivaraṇa.

२ °दर्व्यस्य Bu, the vivaraṇa; °दर्वस्य H Ben Be G U D C.

३ °कारेव H G D C U (pr. m.); °कारेवाभिजु° U (sec. m.).

४ Thus H Ben G U D C; Be defect.; चशेषं Bu.

तीति शालीकिस्तेन सिद्धः प्रत्यभिमर्शन इति ॥ निर्मूल-
मूलमेवैतत्स्नुयादित्यौपमन्यवः[1] ॥

5. अथैतदभिवान्यायै दुग्धमर्धपात्रमिति ॥ सूत्रं बौधायन-
स्याथ यदि कनीयः स्यादद्भिरभ्युन्नयेति[2] शालीकिः ॥

9. तेषां व्रीहिष्वेव हविष्कृतमुद्वादयत्युपोदन्ते यवा-
निति ॥ सूत्रञ्च शालीकेर्यो ह स्माह बौधायन आवपन-
प्रभृति यत्रेषु मन्त्रकर्माभ्यावर्तेत तन्त्रं तु हविष्कृत्[3]
स्यादिति ॥

1. आप्यनिनयन इति ॥ जघनेन गार्हपत्यमाप्येभ्यो निनये-
दिति बौधायनोऽग्रेणातिहायेति शालीकिरग्रेण वा जघ-
नेन वेत्यौपमन्यवः ॥

2. वेद्ये करण इति ॥ उपनिष्क्रम्याग्न्यगाराद्दक्षिणे[4] पूर्वे
ऽवान्तरदेशे कुर्यादिति बौधायनोऽन्तरेवेतां दिशमिति
शालीकिरन्वाहार्यपचनमेवाभित इत्यौपमन्यवः ॥

3. अन्वाहार्यपचनस्योपसमिन्धन इति ॥ स्वे स्थान उपसमि-
न्धीरन्निति बौधायन इध्ममेवातिप्रणयेयुरिति शालीकिः ॥

---

१ मूलमुया॰ Be G and U (sec. m.); मूलमौया॰ Ben H Bu C D G and U (pr. m.).

२ Thus G U D H C; without अभि Be; ॰भ्युन्नयेति Ben Bu.

३ ॰ष्कृत स्यादिति G U C D H Ben; ष्कृत स्यादिति Be; ॰ष्कृतं स्यादिति Bu; cp. XXI. 16, XXII. 11.

४ दक्षिणं Bu G; दक्षिण Ben Be U D C.

I. 145. 12. आज्यग्रहाणां ग्रहण इति ॥ पञ्चगृहीतानि वा चतुर्गृहीतानि वा स्युरिति बौधायनः ॥ चतुर्गृहीतान्येवेति शालीकिः ॥

प्रस्तरस्य मन्त्रामन्त्र इति ॥ ग्रहणं चैवास्य न्यसनं च तूष्णींकं स्यादथेतरन्मन्त्रवत्स्यादिति बौधायनः ॥ संभरणं[1] चैवास्य न्यसनं च तूष्णींकं स्यादथेतरन्मन्त्रवत्स्यादिति शालीकिर्धारणमनमेव[2] तूष्णींकं स्यादथेतरन्मन्त्रवत्स्यादित्यौपमन्यवः ॥

I. 145. 15. त्रिरपसलैः परिस्तृणान्पर्येतीति ॥ सूत्रं बौधायनस्य ॥ यथोत्पन्नेनैव संस्तृणीयादिति शालीकिः ॥

वेद्यै स्तरण इति ॥ सूत्रं बौधायनस्योर्णाम्रदसं त्वा स्तृणामीत्येव ब्रूयादिति शालीकिः ॥ ४ ॥

I. 145. 17. परिधीनां परिधान इति ॥ सूत्रं शालीकेरथो ह स्माह बौधायनः सर्वान्परिधीन्परिदध्यात्पितृकर्मणि क्रियमाणे दक्षिणतश्चोत्तरमुपनिदध्यादिति[3] ॥ ५

I. 146. 2. हविषामुद्वासन इति ॥ सूत्रं बौधायनस्य ॥ यथागृहीतमेव[4] हवींष्युद्वासयेदिति शालीकिः ॥

हविषां संचारो[5] ऽध्वर्योश्चेति ॥ दक्षिणेनेति बौधायनः ॥ उत्तरेणेति शालीकिः ॥

१ संभरणं Bu.

२ Thus G (sec. m.); धारणमन° the other MSS.

३ Thus all exc. Bu (दक्षिणतश्चोत्त°).

४ Thus G and U (sec. m.), D; यथाहृत° the other MSS.

५ संचारो all the MSS. exc. Be (संचारे); the vivaraṇa has also the nominative.

विपरिक्रामन्त्येत ऋत्विजो विपरिहरन्ति हवींषीति ॥ सूत्रं बौधायनस्य " नाच हवींषि विपरिहरेयातामिति[1] शालीकिर्नाच हवींषि विपरिहरेयातामध्वर्युश्चैवाग्नीध्रश्च[1] विपरिक्रामेतामित्यौपमन्यवः[2] ' ॥

आश्रावण इति ॥ ओं स्वधेति बौधायन " आ स्वधेति शालीकिः ' स्वधेत्यौपमन्यवः ' ॥

प्रवर इति ॥ सूत्रमा गार्यं गोविदाङ्‌ श्वत्कित्वमित्यौप-मन्यवः ' ॥

आख्यातं पिण्डानां दानम् ॥

आख्यातमाञ्जनाभ्यञ्जनयोः ॥

आख्यातं पिण्डानामनुप्रहरणम् ॥

त्रैयम्बकाणां मन्त्रमन्त्र इति ॥ मन्त्रान्तः स्युरिति बौधायन " स्तूष्णीका इति शालीकिर्येनानेककपाल एव अपयेदित्यौपमन्यवः ॥

8. एकोल्मुकस्य हरण इति ॥ अन्वाहार्यपचनाद्धरेदिति बौधायनो " ग्रामाग्नेरिति शालीकिः ' ॥

9. एतत्समादाय गार्हपत्यमुपतिष्ठन्त इति ॥ स ह स्माह बौधायन उभय[3] एव[3] मन्त्रो भवत्याध्वर्यवश्च याजमानश्चेति " याजमान एवेति शालीकिः ' ॥

१ Thus all; read probably विपरिहरेतामिति।

२ Thus Be; ०क्रामेयाता मि० the other MSS.

३ Thus G D C H Be U (pr. m.); उभयत्र एव U (sec. m.); उभ०यत्र एव Bo; उभयैव Bu.

I. 152. 5. त्रैयम्बकाणामुत्खेदन[1] इति ॥ सूत्रं शालीकेर्वो ह स्माह बौधायनस्त्रिरेवाभ्यतिषजन्परोऽत्य[2] चित्त्विदेङ्गगाय त्वा भगाय[3] त्वेति ॥ ५ ॥

I. 152. 10. अथैनान्यजमानस्याञ्जलावावपतीति ॥ सूत्रं शालीकेर्वो ह स्माह बौधायनो यजमानस्यैवैकस्य मन्त्रेणावपेत्तूष्णीं पत्न्यै च[4] भगकामायै चेति ॥

I. 153. 1. अथैनान्मूत ओप्य नीललोहिताभ्यां सूत्राभ्यां विग्रथ्य शुष्के वा स्थाणौ विशाखायां[5] वा बध्नातीति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

I. 153. 5. उदगाचस्योपनिनयन इति ॥ प्रदक्षिणमुपनिनयेदिति बौधायनो यथोपपादमिति शालीकिः ॥

I. 153. 20. शुनासीरीयपर्वण इज्यायां[6] इति ॥ सूत्रं शालीकेर्वो ह स्माह बौधायनो य एवात ऊर्ध्वमापूर्यमाणपक्ष आगच्छे-

१ ॰मुत्खिद्दन G (sec. m.) Be and the vivarana; ॰मुत्खिद्दनन Bu.

२ Thus G and U (sec. m.) and the vivaraṇa (अभ्यतिषजन्परोऽत्य चित्त्विदेन); ॰स्त्रिरेवाभ्यतिष॰ the other MSS.

३ Thus Be G and U (sec. m.); भगेन Ben H D C G and U (pr. m.).

४ च (sic) Be, all the other MSS. om the word.

५ Thus Ben H U D C; विशाखायां Be Bu G (sec. m.).

६ ॰पदवे इज्याया Ben C; पदवा इज्याया U D; शुनरा इज्याभ्यामा H; ॰पर्वण्याया Be G (sec. m.) and the vivaraṇa.

त्वग्निष्टुतासौरीयपशुना यजेत । त्रयोदशस्यैवैतन्मासस्यापौष्यार्थं[1] दृष्टं भवतीति ॥

वेद्ये करण इति ॥ दार्शपौर्णमासिकी स्यादिति बौधायनः । पाशुबन्धिकीति शालीकिः ॥

दक्षिणानां दान इति ॥ सूत्रं शालीकेस्त्यो ह स्माह बौधायनो हिरण्यं वैश्वानरे दद्याद्धेनुं पार्जन्ये द्वादश वैश्वदेवे द्वादश वरुणप्रघासहविःषु तिस्र आनीकवते तिस्रः सांतपने चतस्रो गृहमेधीय ऋषभं पूर्णदर्व्ये[2] तिस्रः क्रैडिने द्वादश महाहविःषु तिस्र आदित्ये द्वादश शुनासीरीयहविःष्वित्यो ह स्माहौपमन्यवस्ततःषष्टिश्चातुर्मास्यदक्षिणाः समाम्नाता भवन्ति । तास्वेवाधिगच्छेदासाङ्स्येतावन्ति मन्त्राश्चौदनाश्चैतावतो[3] दद्यान्नो ह्येवैतं काममवाप्नोतीति[4] ॥

चातुर्मास्यानामन्त इति ॥ सोमान्तानि स्युरिति बौधायनः । पशून्तानीति शालीकिः । सवनेष्टा यजेतेत्यौपमन्यवः ॥ ६ ॥ द्वितीयः ॥

---

१ त्रयोदशस्यैवैतन्मा० Be H G U (pr. m.); त्रयोदशस्य स्वैतन्मा० U (sec. m.), त्रयोदशस्य -- ऐतान्मा० Bu; त्रयोदशस्य वैतन्म० Ben C U.— ०पौष्यार्थं Ben G U D C; ०मौष्यार्थं Be; ०भाष्यार्थं Bu; ०पौषार्थं H.

२ Thus G, ०दर्वे the other MSS.

३ Thus G U D C and Ko.; मंथाश्चोदनाश्चैतावतो Ben; मन्त्राश्चोदना-श्चैतावतो Bu; मंथाश्चोदनाश्चैतावतो H; मन्त्राश्चैतावतो Be (cp. Vol. I. 44. 15).

४ इति is not found in my copies.

I. 156. 1. अथातो ऽग्निष्टोमं व्याख्यास्यामः ॥

स ह स्माह बौधायनो नादृष्ट्वा राजानं पर्त्विजश्च[1] दीक्षयेदित्यु ह स्माह शालीकिर्यदि दीक्षा दीर्घाः स्युराश्वासिका[2] आहर्तारस्तथैन्द्रीयः[3] कामं दीक्षयेदिति ॥

I. 167. 2. शालाया[4] अध्यवसान[4] इति ॥ स ह स्माह बौधायनो मध्यंदिने शालामध्यवस्येदापः पूर्वा गच्छेयुरन्वग्यजमानो राजा चारणिभ्यां चेत्यु ह स्माह शालीकिः कामं पूर्वाह्णे वापराह्णे वा शालामध्यवस्येत्प्राङ्क्षेवास्तमयाद्दीक्षणीयायाᳪ संतिष्ठापयिषेदिति[5] ॥

I. 158. 16. अग्नीनाᳪ हरण इति ॥ अजस्राᳪहरेदिति बौधायनो ऽरण्योः समारोह्येति शालीकिः ॥

१ •श्चेति H Be Bu.

२ Uncertain; •राश्च सिका चाह• H G (pr. m.) C, the vivaraṇa (one copy); राश्वासिका U; राश्वासकामाह• Be; •राश्वासिकार्थमाहर• D; •राश्च सिका चाह• Bu; •राश्वासिकाय चाह (G (sec. m.) and the vivaraṇa (other copy). The vivaraṇa periphrases आश्वासिका (or आश्वासित रः) by प्रत्येनारः (one copy), प्रत्यनीकाः (or प्रत्य थ यि) न र. Read perhaps राश्वासकामा आहर्तारः (see शो. सू).

३ •मौथाः (G sec. m.) The vivaraṇa. एश्वौथमदधाब्दन संजो हव्यमे ... पन्य चाह ऊश्नीय ऊह्नार रो मृत्युके ।

४ Thus Be H G U D C, in Bu these words are missing. शाला- यामध्य• the vivaraṇa.

५ Thus G Be U; संतिष्ठापये• Bu; प्रति• H; C D corrupt

सप्तहोतुर्होम इति॥ स्रुवं बौधायनः स्रुचोत्तरः कृत्वा सप्तहोतारं जुहुयादिति शालीकिः॥

यूपाकृत्यै हवन इति॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः॥

वाससामुपकल्पन इति॥ अष्टाविति बौधायनः सप्तेति शालीकिः॥

कृष्णाजिनानामुपकल्पन इति॥ पञ्चेति[1] बौधायनः षडिति[1] शालीकिः॥

कृष्णविषाणाया उपकल्पन इति॥ त्रिवलिरिति बौधायनः पञ्चवलिरिति शालीकिः सकलैवैषा स्यादित्यौपमन्यवः॥

व्रतप्रदान इति॥ कंस इति बौधायनश्चमस इति शालीकिः॥

प्रवर्ग्यस्य करण इति॥ स ह स्माह बौधायनो न प्रथमसोमे प्रवृञ्ज्यादुपनामुको हैनमुत्तरो यज्ञो भवतीति न प्रवर्ग्यं गच्छेद्यनेति शालीकिः॥ ७॥

तीर्थगमन इति॥ स ह स्माह बौधायनः प्रदक्षिणमावृत्यैतत्तीर्थं गच्छेद्यथामुतो ऽपसलैरावर्ततेत्यथो ह स्माह शालीकिरपसलैरावृत्यैतत्तीर्थं गच्छेद्यथामुतः प्रदक्षिणमावर्ततेति॥

1 In G पञ्च obtains (see. m.) the place of षड्।

I. 157. 7. अथास्य प्राङ्मुखस्य दक्षिणं गोदानमद्भिरुनत्तीति ॥ सूत्रं बौधायनस्योभयमेवाप्यस्य मन्त्रेण कुर्यादिति शालीकिः ॥

I. 158. 1. अभ्यञ्जन इति ॥ सूत्रꣳ शालीकेरथो ह स्माह बौधायनो महीनां पयो ऽसीत्यादाय वर्चोधा असि वर्चो मयि धेहीत्यभ्यञ्जीतेति ॥

I. 158. 4. आञ्जन इति ॥ सूत्रꣳ शालीकेरथो ह स्माह बौधायनो वृत्रस्य कनीनिकासीत्यादाय चक्षुष्पा असि चक्षुर्मे पाहीत्याञ्जीतेति[1] ॥

I. 158. 5. त्रिरनिधावं द्विरुत्तरमंष्णु पञ्च कृत्व आङ्क्त इति ब्राह्मणं पञ्च कृत्व एव दक्षिणं पञ्च कृत्व उत्तरमिति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

I. 158. 7. प्रवप इति ॥ स ह स्माह बौधायनस्त्रीन्सप्रवर्गान्कृत्वा तेषामेकेन प्राणदेशे प्रवपेदथेतरेण नाभिदेशे ऽथेतरेण गुल्फदेशे ऽथैनान्यद्भिरभ्युक्ष्योदक्षूत्खिदेदित्यथो[2] ह स्माह शालीकिर्दर्भाभ्यां प्रवपति त्रिभिः प्रवपतीत्येतैरेनमेकविंशत्यावपाहशः[3] प्रवयित्वाथैनान्यद्भिरभ्युक्ष्योदक्षूत्खिदेदित्यथो ह

---

1 Thus Kes. only; पाहीत्यञ्ज इति G U, ॰त्याञ्ज इति D C; the other MSS. corrupt. An optative is required.

2 Instead of उत्खिदेत्, the reading of Be (and once उत्खिदे॰ Bu), here and infra, the MSS. have उत्क्षिपेत् ।

3 Uncertain; G (sec. m.) as given in the text; प्रवपतीत्येषमेकं विंशत्या॰ Bu; प्रवपतीत्युत्तरैरेवमेकविंशत्या॰ U; प्रवपतीत्युत्तरैरेकमेकविंशत्या॰ H; प्रवपतीत्युत्तरैकविंशत्या॰ C D; Be wholly corrupt.

आचौपमन्यवः समस्तैरेवैनं [1]प्राणदेशे पवयेच्चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनातु देवस्त्वा सविता पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिरिति । देवतायां देवतायामतिवाच्या ग्निरभ्युक्ष्योदक्युत्स्विदेदिति[2] । ॥

अथैनꣳ सव्ये पाणावभिपातयेति ॥ दक्षिण[3] इति प्रोक्तं ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः । ॥

अथैनमग्रेणाहवनीयं पर्याणीयेति ॥ जघनेनेति प्रोक्तं ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥

पत्न्या उदानयन इति ॥ सूचनꣳ शालीकेरन्वो ह स्माह बौधायनः शुचिमेवैनां पर्यथित्वा सर्वयर्त्वादानीय जघनेन गार्हपत्यमुपवेशयेदिति । ॥

पत्न्या दीक्षण इति ॥ सूचमाचार्ययोरन्वो ह स्माचौपमन्यवः प्रायणीये हविष्कृदन्ते पत्नीं दीक्षयेदिति । ॥

न यजमानं व्रतमुपनयतीति ॥ सूचनꣳ शालीकेरन्वो ह स्माह बौधायनः सौमिके तन्त्रे पौरोडाशिकं याजमानमभ्यावर्तेतान्यच यज्ञस्य पुनरालम्भादिति । ॥

न पत्नीꣳ संनह्यतीति ॥ सूचनꣳ शालीकेरन्वो ह स्माह बौधायनो दीक्षणीयायामेनाꣳ संनह्य सꣳस्थितायां विमु-

1 Thus Be; एव not found in G (pr. m ; Bu H H D C : एनं not in G (see m )

2 देवतायां once in Bu D H C

3 °क्षिणत Bu and one copy of the vivaraṇa.

च्चाध्वरिकेण सह याजमानेन[1] तस्मेतंन्वे वात[2] ऊर्ध्वं पौरो-डाशिकेन कर्मणाभिमंनन्त्रयेदिति । ॥

I. 159. 15. ध्रुवाया आप्यायन इति ॥ स ह स्माह बौधायन उभा-वेव ध्रुवामाप्याययेतामध्वर्युश्च यजमानश्चेत्यध्वर्युरेव ध्रुवामा-प्याय्य दौक्षाहुतीर्जुहुयादिति शालीकिः । ॥

I. 159. 16. दौक्षाहुतीनाꣳ होम इति ॥ सूत्रं बौधायनस्य चतुर्थी[3] पञ्चमीमनुद्रुत्य जुहुयादिति शालीकिरथो ह स्माहौपमन्यव आकूत्यै प्रयुज इति तिस्रो ऽनन्तरा हुत्वा सरस्वत्यै पूष्णे ऽग्नय इत्युपातीत्यापो देवोर्बृहतीर्विश्वशम्भुव इत्येतां जुहुयादथौ-द्ग्रहणमिति । ॥ ८ ॥ तृतीयः ॥

I. 160. 10. कृष्णाजिनयोरिति ॥ द्वाभ्याꣳ ससुक्तिताभ्यां[4] दौक्षये-दिति बौधायनो । ऽथ[5] यद्यन्यतरत्स्याद्दक्षिणमोर्म प्रतिषीव्ये-दित्येकमेव[6] कृष्णाजिनꣳ स्यादिति शालीकिः । ॥

I. 160. 11. शुक्लकृष्णयोः संसर्गान इति ॥ शुक्ले ऽङ्कुशो भवति कृष्णे ऽङ्कुशिरित्येवꣳ शुक्लकृष्णे संसृजेदिति बौधायनः ॥

१ याजमा॰ G and I (see. m.) and the vivarana, यजमा॰ the other MSS.

२ वात G (see m.) I Be, the vivarana

३ चतुर्थी G (see. m. D)

४ Thus G (see m. only), ससुक्ताभ्यां the other MSS

५ Effaced in G.

६ इति before एकमेव found in G only (see. m.).

BIBLIOTHECA INDICA:
A
COLLECTION OF ORIENTAL WORKS
PUBLISHED BY THE
ASIATIC SOCIETY OF BENGAL.
NEW SERIES, No. 1415.

# बौधायन श्रौतसूत्रम् ।

# BAUDHĀYANA ŚRAUTA SŪTRAM

SANSKRIT WORK ON THE VEDIC LITERATURE.




EDITED BY
DR. W. CALAND OF UTRECHT.

VOL. III. FASCICULUS II.

CALCUTTA:
PRINTED AT THE BAPTIST MISSION PRESS
AND PUBLISHED BY THE
ASIATIC SOCIETY, 1, PARK STREET.
1917.

LIST OF BOOKS FOR SALE
AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL,

**No. 1, PARK STREET, CALCUTTA,**

AND OBTAINABLE FROM

*The Society's Agent—*
MR. BERNARD QUARITCH, 11, *Grafton Street, New Bond Street, London, W.*

*Complete copies of those works marked with an asterisk * cannot be supplied—some of the Fasciculi being out of stock.*

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| | Rs. | As. |
|---|---|---|
| Açvavaidyaka, Fasc. 1-5 @ -/10/- each .. .. .. | 3 | 2 |
| Advaita Brahma Siddhi (Text), Fasc. 1-4 @ -/10/- each .. .. | 2 | 8 |
| Advaitachintā Kaustubha, Fasc. 1-3 @ -/10/- each .. .. | 1 | 14 |
| *Agni Purana (Text), Fasc. 1-14 @ -/10/- each .. .. .. | 8 | 12 |
| *Aitareya Aranyaka of Rig-Veda (Text), 2-4 @ -/10/- each .. .. | 1 | 14 |
| Aitarēya Brāhmaṇa, Vol. I, Fasc. 1-5; Vol. II, Fasc. 1-5; Vol. III, Fasc. 1-5, Vol. IV, Fasc. 1-8 @ -/1 /- each.. .. .. | 14 | 6 |
| Aitareyalocana .. .. .. .. .. | 2 | 0 |
| Amarakosha, Fasc. 1-2 .. .. .. .. .. | 4 | 0 |
| *Anu Bhasyam (Text), Fasc. 2-5 @ -/10/- each .. .. .. | 2 | 8 |
| Anumana Didhiti Prasarini, Fasc 1-3 @ -/10/- each .. .. | 1 | 14 |
| *Aphorisms of Sandilya (English), Fasc. 1 @ 1/- .. .. | 1 | 0 |
| Aṣṭasāhasrikā Prajñāpāramitā, Fasc. 1-6 @ -/10/- each .. .. | 3 | 12 |
| Atharvana Upanishads (Text), Fasc. 1-5 @ -/10/- each .. .. | 3 | 2 |
| Ātmatattvaviveka, Fasc. 1-2 .. .. .. .. | 1 | 4 |
| Avadāna Kalpalatā (Sans. and Tibetan), Vol. I, Fasc. 1-11, Vol. II, Fasc. 1-11 @ 1/- each .. .. .. .. | 22 | 0 |
| Bālam Bhaṭṭī, Vol. I, Fasc. 1-2, Vol. II, Fasc. 1 @ -/10/- each .. | 1 | 14 |
| Bardic and Historical Survey of Rajputana. (A Descriptive Catalogue of Bardic and Historical Manuscripts. Sec. I, Prose Chronicles, Part I) * .. .. .. .. .. .. | 1 | 0 |
| Bauddhastotrasangraha .. .. .. .. .. | 2 | 0 |
| Baudhāyana Śrauta Sūtra, Fasc. 1-3; Vol. II, Fasc. 1-5; Vol. III, Fasc. 1 @ -/10/- each .. .. .. .. .. | 5 | 10 |
| Bhamati (Text), Fasc. 1-8 @ - 10/- each .. .. .. | 5 | 0 |
| Bhasavritty .. .. .. .. .. .. | 0 | 10 |
| Bhāṭṭa Dīpikā, Vol. I, Fasc. 1-6; Vol. II, Fasc. 1-2 @ -/10/- each .. | 5 | 0 |
| Bodhicaryāvatāra of Çāntideva, Fasc. 1-7 @ -10- each .. .. | 4 | 6 |
| Brahma Sutras (English), Fasc. 1 @ 1/- .. .. .. | 1 | 0 |
| Bṛhaddēvatā, Fasc. 1-4 @ -/10/- each .. .. .. | 2 | 8 |
| Bṛhaddharma Purāṇa, Fasc. 1-6 @ -/10/- each.. .. .. | 3 | 12 |
| Çatadūṣaṇī, Fasc. 1-2 @ -/10/- each.. .. .. .. | 1 | 4 |
| Catalogue of Sanskrit Books and MSS., Fasc. 1-4 @ 2/- each .. | 8 | 0 |
| *Çatapatha Brāhmaṇa, Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-5; Vol. III, Fasc. 1-7; Vol. V, Fasc. 1-5 @ -/10/- each .. | 14 | 6 |
| Ditto Vol. VI, Fasc. 1-3 @ 1/4/- each .. .. | 3 | 2 |
| Ditto Vol. VII, Fasc. 1-5 @ -/10/- .. .. | 3 | 2 |
| Ditto Vol. IX, Fasc. 1-2 .. .. .. | 1 | 4 |
| Çatasāhasrikā-prajñāpāramitā, Part I, Fasc. 1-18, Part II, Fasc. 1 @ -/10/- each .. .. .. .. .. | 11 | 14 |
| *Caturvarga Chintāmaṇi, Vol. II, Fasc. 1-25; Vol. III, Part I, Fasc. 1-18, Part II, Fasc. 1-10; Vol. IV, Fasc. 1-6 @ -/10/- each | 38 | 14 |
| Ditto Vol. IV, Fasc. 7 @ 1/4/- each .. .. | 1 | 4 |
| Ditto Vol. IV, Fasc. 8-10 @ -/10/- .. .. | 1 | 14 |
| *Chandah Sutra (Text), Fasc. 1-3 @ -/10/- each.. .. .. | 1 | 14 |
| Çlokavartika (English), Fasc. 1-7 @ 1/4/- each .. .. .. | 8 | 12 |
| *Çrauta Sutra of Apastamba (Text), Fasc. 2-17 @ -/10/- each .. | 10 | 0 |
| *Çrauta Sutra of Çānkhāyana, Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-4; Vol. III, Fasc. 1-4; Vol. IV, Fasc. 1 @ -/10/- each .. .. | 10 | 0 |
| Çri Bhashyam (Text), Fasc. 1-3 @ -/10/- each .. .. .. | 1 | 14 |

पृथेनैवैतं संधिं संनह्येदिति शालीकिर्'' येनमेकाङ्कुष्ठेव संनह्येदित्यौपमन्यवः ' ॥

60. 13 कृष्णाजिनस्याभिसर्पण इति ॥ सूत्रं शालीकेर्'' वो ह स्माह बौधायनः पूर्वं वोत्तरं वार्धं विग्रथ्नीयात्तेनैव मध्यदेशं गच्छेदिति ' ॥

60. 17, 23. 5 आख्यातं ग्रन्थिकरणम् ' ॥

60. 22. अथास्य प्रदक्षिणमुष्णीषेण शिरो वेष्टयतीति ॥ सूत्रं बौधायनस्य '' वासमेव संप्रच्छन्नः स्यादिति शालीकिः ' ॥

161. 4 कृष्णविषाणाया: प्रदान इति ॥ सूत्रं शालीकेर्'' वो ह स्माह बौधायनः समस्तेनैवास्मै मन्त्रेण कृष्णविषाणां प्रयच्छेत्तूष्णीं वेयन्तमुद्धन्यात्तूष्णीं केशान्तमुपस्पृशेदिति ' ॥

161. 9. दण्डस्य प्रदान इति ॥ सूत्रमाचार्ययोर्'' वो ह स्माहौपमन्यवः समस्तेनैवास्मै मन्त्रेण दण्डं प्रयच्छेत्तूपस्था देवः वनस्पतिरूर्ध्वो मा पाह्योदृच इति ' ॥

161. 11, 14 अथैनं यजमानमान्वारम्भं वाचयतीति ॥ सूत्रं शालीकेर्'' वो ह स्माह बौधायनो मष्टिकरणाः खल्वेते मन्त्रा दृष्टा भवन्ति

१ Thus corrected in accordance with the vyākhyā, which runs प्रथमेन *sic* वसतजेन प्रथमेनैवैतं (G. see m.) प्रथेनैवैतं Bu प्रथमेनैव C H D C

२ Thus Be. before ऊर्ध्वो H ins. इति ; D U G C abbreviate the mantra, giving only the first and the last words.

३ Thus Be., C D U G H Bu add यजमानः प्रतिस्थानानि, apparently a reminiscence of the text proper (Vol. I, 161. 12

स्वाहा यज्ञं मनसा स्वाहा द्यावापृथिवीभ्याꣳ स्वाहोरोरन्तरिक्षात्स्वाहा यज्ञं वातादारभ इति ॥

I. 161. 13. मुष्टिकरण इति ॥ वाचोयमसंयुक्तं[1] मुष्टिकरणꣳ स्यादिति बौधायनो ऽवान्तरदीक्षायै विसर्गादिति शालीकिः ॥

I. 161. 14. आवेदन इति ॥ यथावर्णमावेदयेदिति बौधायनो ऽदीक्षिष्टायं ब्राह्मण इत्येव ब्रूयादिति शालीकिः ॥

I. 162. 14. व्रतदोहन इति ॥ सूत्रं बौधायनस्यौपरदारिकमेव[2] यजमानव्रतꣳ स्यादिति शालीकिः ॥ ९ ॥

I. 163. 8. यजुषोरनुषङ्ग इति ॥ आ कृष्णाजिनप्राशनादनुषज्जेतामिति[3] बौधायनो ऽवान्तरदीक्षायै विसर्गादिति शालीकिर्दक्षिणानयनादित्यौपमन्यवः[4] ॥

I. 163. 11. संवेशनयजुषीति[5] ॥ सूत्रꣳ शालीकिर्नो ह स्माह बौधायनो ऽग्ने त्वꣳ सु जागृहीत्येव संविशेद्वर्तयिष्यन्नप आचामेद्देवीं धियं मनामह इति ॥

I. 164. 12. अथ सनीहारान्प्रक्षिणोतीति[6] ॥ अन्यत्रोग्रशूद्रयोरिति

---

१ Thus G (sec. m.) and the vivaraṇa; वाचोयमसं॰ Be H U G (pr. m.); वाचंयमसं॰ D C; वाचोयम्यसं॰ Bu.

२ ॰परादा U D H Be C; cp. XXI. 19 init.

३ ॰षज्जेतामिति H Bu G U D C, ॰षज्जेदिति Be

४ Thus Be, the vivaraṇa and Keś; दक्षिणादानादि॰ H Bu G (sec. m.) U D C; दक्षिणावदनादि॰ G (pr. m.).

५ यजुषोरिति H, यजुषी इति U D C.

६ सनी॰ Be; सनि॰ Bu G, संनि॰ D U C; सह॰ H.

बौधायनो ॥ ऽन्यचोर्धैरिति[१] शालीकिः। सर्वान्यज्ञान्विहृत्य इत्यौपमन्यवः। ॥

163. 11. संवेशनयजुःप्रबुद्धयजुःप्रयाणयजुःपर्यायणयजुरिति[२] ॥ अनुषङ्गीण्येतानि[३] भवन्तीति बौधायनः ॥ सकृत्सकृतान्येवैतान्यह्ने[४] वा रात्रिये वा स्युरिति शालीकिः। ॥

164. 16 दक्षिणानां प्रतिग्रह[५] इति ॥ स ह स्माह बौधायनो यस्य कस्य च जातस्य मन्त्रेण प्रतिगृह्णीयात्पुनरप्यागतं[६] मन्त्रेणैव प्रतिगृह्णीयादित्य॥थो ह स्माह शालीकिर्यस्य कस्य च जातस्य मन्त्रेण प्रतिगृह्णीयात्प्रतिगृहीतमेव तस्य स्यादागन्त्वेवाख्यात[७] ऊर्ध्वं मन्त्रेणैव प्रतिगृह्णीयादिति। ॥

164. 21. अविज्ञातायै दान[८] इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

१ न्यचानप्रैरिति U D C H. on the instrumental cp Speyer Sanskrit Syntax § 107

२ ०पर्याय० instead of ०परियाय० all

३ Thus Bu U G (sec. m.) and the vivarana. अनुषंगौहयतानि H G (pr. m.). अनुषंगाख्यतानि Be, D C corrupt

४ सकृत् twice U Be

५ प्रतिग्रह G and U sec. m.) and the vivaraṇa. ०ग्रह G (pr. m.) U (sec. m. and the other MSS

६ Thus H G (pr. m.) U D C. ०गामनं G sec. m. ०यामनं Bu ०गामनं Be

७ Reading, meaning and interpunction doubtful. स्यादागन्त्वेवाख्यात (G (sec. m.): स्यादागनत्वेवाख्यात G (pr. m.). स्यादागतेवाख्यात Be. स्यादंगत्वेवाख्यात U; ०हंगत्वेवाख्यात D: स्यादंगात० C

८ विद्दान U D Be C. the passage is missing in H.

I. 165. 10. प्रयाण इति ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥

I. 165. 12 अथ यद्येनं यान्तं प्रतनवेलोपाधिगच्छतीति ॥ मथित्वाग्नी-न्विहृत्य प्रतयेदिति बौधायन॥ उत्तरतो ऽरणी निधाय[१] दक्षिणतः परिश्रित्य प्रतयेदिति शालीकिः ॥

I. 165. 11. अथ यद्यपर्याणा अप उपाधिगच्छतीति ॥ सूत्रᳪ शाली-केर्नो ह स्माह बौधायनो यत्रैवापर्याणा अप उपाधिगच्छे-त्तत्रोपेह्वैरापो अपां नपाद्य ऊर्मिर्हविष्य इन्द्रियावान्मदि-न्तमस्तान्वो[२] गच्छामीति । चीम्लोष्टानाददीत । तेषामेक-मुदकान्ते निदध्यात्तं वो मा वक्रमिषमित्यथान्यं ध्वᳪसयन्ननुद्र-वेदच्छिन्नं तन्तुमित्यथान्यमुदकान्ते निदध्यात्पृथिव्या अनु गेषमिति । मं वा गाहते मं वा तरति । सेतुमेव कृत्वात्ये-तीति ब्राह्मणम् ॥ १० ॥ चतुर्थः ॥

I. 166. 11 रोहिते चर्मणीति ॥ सूत्रं बौधायनस्याप्यरोहितᳪ स्यादिति शालीकिः ॥

I. 166. 12. अᳪशुग्रहणे हिरण्य इति ॥ कुर्यादिति बौधायनो॥ न कुर्यादिति शालीकिः ॥

I. 167. 2. देवयजनस्याध्यवसान इति ॥ सूत्रमाचार्ययोर्नो ह स्माहौपमन्यवः पुरस्तादेवैतत्त्रिविध्यगतेषु देवयजनमध्यवसे-दिज्ञायते सा वा इयᳪ सर्वैव वेदिरिति ॥

I. 167. 4. III. 20. 9. (?). व्याख्यातं प्रायणीयस्य निर्वपणम् ॥

१ After निधाय U Be ms तस्या, C D तस्य ।

२ तान्वो G D C Be, the vivaraṇa, तंवो H U Be defective

167 12. प्रायणीयस्य श्रपण इति ॥ पयसि श्रपयेदिति बौधायनो ऽप्स्विति शालीकिः ॥

167 13. प्रायणीयस्यासादन इति ॥ पङ्क्तौ चासादयेदिति बौधायनस्तूष्णीमिति शालीकिः ॥

167. 14. प्रायणीयस्य चर्याया इति ॥ उपांशु चरेदिति बौधायन उच्चैरिति शालीकिः ॥

169 11 आदित्यस्योदीचण इति ॥ हिरण्यमन्तर्धायादित्यमुदीचयेदिति बौधायनो ऽनन्तर्धायैवेति शालीकिः ॥

169 13. सोमक्रयण्या अतिविसन इति ॥ मदमः काले ऽतिविसयेदिति बौधायन उपरवकाल इति शालीकिः ॥

169 15 सोमक्रयण्यै पदस्यानुनिक्रमण[1] इति ॥ अतिक्रान्तायै षष्ठ्या कालं दक्षिणस्य पूर्वपदस्यानुनिक्रामेदिति[1] बौधायनो महावेदिमेवातिक्रान्तायै यस्यैव[2] कस्य[2] चेति[2] शालीकिः ॥

169 21 सोमक्रयण्यै पदस्य[3] परिलेखन इति ॥ सूचं शालीकेरत्नो ह स्माह बौधायन स्फ्येन च कृष्णविषाणया च पदं परिलिखेदन्तरतः कृष्णविषाणा स्यादिति ॥ ११ ॥

170 10. उदपात्रस्योपनिनयन इति ॥ प्रदक्षिणमुपनिनयेदिति बौधायनो यथोपपादमिति शालीकिः ..

१ °नुनिक्र° all (C D only °नुनिष्क्र°) (the reading given by Th) is also to be restored VI 12 169 16 see TS VI 1 8 1

२ यस्यैव कस्यै चेति B1 G (sec. m.) यस्यै कस्य चेति Be; कस्य चेति C H D G (pr. m)

I. 171. 1. राज्ञ उपस्थान इति ॥ स ह स्माह बौधायन उषसा[1] नामेयमोषधिर्भवति[1] तां दूतीं कुर्वीतैष ते गायत्रो भाग इति मे सोमाय ब्रूतादेष ते त्रैष्टुभो भाग इति मे सोमाय ब्रूतादेष ते जागतो भाग इति मे सोमाय ब्रूताच्छन्दोमानाꣳ साम्राज्यं गच्छेति मे सोमाय ब्रूतादित्यथो[2] ह स्माह शालीकिः प्रत्यक्षः खल्वयꣳ राजा भवति प्रत्यक्षवदेवोपतिष्ठेतैष ते गायत्रो भाग एष ते त्रैष्टुभो भाग एष ते जागतो भागश्छन्दोमानाꣳ साम्राज्यं गच्छेति ॥

I. 171. 9. राज्ञो मान इति ॥ सूत्रं बौधायनस्य निगद्यैवैतामृचं पञ्च कृत्वो मिमीतेति[3] शालीकिः ॥

I. 172. 5. राज्ञः पणन[4] इति ॥ सूत्रं बौधायनस्य गवा ते क्रीणानीत्येव ब्रूयादिति शालीकिः ॥

I. 172. 8. प्रजाया उपनिग्रहण इति ॥ सूत्रं बौधायनस्यानुपनिगृह्यैवाशां मन्त्रं जपेदिति शालीकिः ॥

I. 197. 1 मैत्रावरुणस्य दण्डप्रदान इति ॥ सूत्रमाचार्ययोरथो ह

१ Instead of उषसा नामेय० H C D U read उपस्थाना एष०।— ०ओषधिर्भ० G (see m.), ०ओषधीर्भ० H Bu C D U (pr. m.); ०ओषधीभिर्भ० Be U (see m.)

२ The mantras are given partially abbreviated in the MSS.

३ मिमीते इति or मिमीत इति MSS.

४ Thus Bu G (see m.) and the vivaraṇa; पण Be H C D U G (pr. m.)

स्माहौपमन्यवः सोमविक्रयिणमुदकुम्भनापहृत्याचैव[1] मैत्रावरुणाय दण्डं प्रयच्छेदिति ॥

73. 11. राज्ञः प्रत्यानहन इति ॥ अन्तर्लोम्ना चर्मणा प्रत्यानह्येदिति बौधायन ऊर्ध्वग्रीवेण बहिर्लोम्नेति शालीकिः ॥

73. 21 इषाया अन्वारम्भ इति ॥ सूत्रं बौधायनस्योनन्वारभ्यैवेषां प्रत्यङ् द्रवन्मन्त्रं जपेदिति शालीकिः ॥

174. 3. राज्ञः परिवहण इति ॥ प्रदक्षिणं परिवहेदिति बौधायनो यथोपपादमिति शालीकिः ॥

174. 7. राज्ञः प्रत्युपस्थान इति ॥ स ह स्माह बौधायनो श्रौषिभिस्सारणीभ्यां च राजासन्द्या च राजानं प्रत्युपतिष्ठेतेत्यथो ह स्माह शालीकिरजेन च कर्णगृहीतेनोल्मुकेन[2] च राजासन्द्या च राजानं प्रत्युपतिष्ठेत मो ऽग्नीषोमीयः पशुः स्यात्सोमः[3] स्यात्तूपरः स्यात्साण्डः स्याच्छ्मश्रुमान्स्यात्पीवान्स्यादिति[4] विज्ञायते ॥ १२ ॥

---

१ सोमक्रयणम् instead of सोमविक्रयिणम् G (sec. m.), सोमक्रयिणम् U D H C — ०भनोपहृत्या० Bu G (sec. m.), ०भनोपप्रहृत्या० C D H (sec. m.). ०भनोमहृत्या H (pr m

२ ०गृहीतेन सोमक्रयेन U D H C, ०गृहीतेन सोमकेन G.

३ सोमः Bu G and the vivaraṇa, सोमयः H D U C.

४ श्मश्रुमान् G Bu. viv., fails in H U, D Be are defective – पीवान् Bu U (pr. m.), viv ; पीवमान् Be U (sec. m.) पीवमना H, D C defective ; fails in G (sec. m., first hand invisible) N. B. nomin पीवान् as Mahabh , not ० वा ।

आतिथ्यस्य बर्हिषः संस्कार इति । अधिदादानप्रभृतीन्मन्त्रानाधयेदिति बौधायनः ॥ शुल्बप्रभृतीनिति शालीकिः ॥ संभरणप्रभृतीनित्यौपमन्यवः ॥

1.174.12. आतिथ्यस्य निर्वपण इति ॥ सूत्रं शालीकेरचो ह स्माह बौधायन उभौ विमुच्य राजानं प्रपाद्यातिथ्यं निर्वपेदिति ॥

1.175.14. राज्ञः परिचर्याया इति ॥ सूत्रं शालिकेरचो ह स्माह बौधायन अचैव राजानं परिचरेदृचार्घ्यमुपनिगृह्णीयादिति ॥

1.175.17. अर्हण इति ॥ यथागतमर्हयेदिति बौधायनो ॥ राजानमर्हयित्वर्त्विजो[1] ऽर्हयेदिति शालीकिः ॥

1.175.19. आतिथ्यस्य करण इति ॥ पुरोडाशश्च गौश्च स्यातामिति बौधायनः ॥ पुरोडाश एवेति शालीकिः ॥

1.176.10. आज्यग्रहाणां ग्रहण इति ॥ चतुर्गृहीतानि वा पञ्चगृहीतानि वा स्युरिति बौधायनः ॥ पञ्चगृहीतान्येवेति शालीकिः ॥

1.176.18. आतिथ्यस्यासादन इति ॥ चतुर्होत्रासादयेदिति बौधायनस्तूष्णीमिति शालीकिः ॥

1.176.19. आतिथ्यस्य चर्याया इति ॥ उपांशु चरेदिति बौधायन ॥ उच्चैरिति शालीकिः ॥

1.177.19. तानूनप्त्रस्य भक्षण इति ॥ सूत्रं शालीकेरचो ह स्माह

---

[1] यथागतम॰ instead of राजानम॰ G. P., C. D. and H. are defective.

बौधायनो निगृभमेवैनं[1] निधापयित्वा व्रतकाले व्रतेन सह भक्षयेदिति । ॥

178.19 औपसदस्य बर्हिषः संस्कार इति ॥ अभिदादानप्रभृतीन्मन्त्रान्साधयेदिति बौधायनः ॥ स्तुलवप्रभृतीनिति शालीकिः ॥ संभरणप्रभृतीनित्यौपमन्यवः । ॥

ib. उपसदां मन्त्रामन्त्र इति ॥ मन्त्रवत्यः स्युरिति बौधायनस्तूष्णीका इति शालीकिः ॥ यत्पर्याज्यं[2] तत्तूष्णीकं[2] स्यादथेतरन्मन्त्रवत्स्यादित्यौपमन्यवः[2] ॥ सर्वमेवैतत्कर्मावृता कुर्यादित्यौपमन्यवीपुत्रः । ॥

26.10 आहुतीनां होम इति ॥ सूत्रं बौधायनस्य ॥ प्राचीरेवैता आहुतीः संस्थापयेदिति शालीकिः । ॥

ib. 18 उपसदां[3] होम इति ॥ सूत्रं बौधायनस्यानत्याक्रम्यैवोपसदो[4] जुहुयादिति शालीकिः । ॥

स्रुचां परिप्लावन इति ॥ अहोरात्रं परिप्लवोरन्निति बौधायनो ॥ ऽहरेवेति शालीकिः ॥ कर्मणःकर्मणः प्रयुञ्जीतेत्यौपमन्यवः । ॥ १७ ॥ पञ्चमः ॥

१ निगृभ॰ Bu G and I' (sec. m. ...) ; नगृभ॰ Bc I (pr. m.), G (pr. m.) H D C.

२ Thus G (sec. m.) only, the vyākhyāna of the text proper and Kes. (पर्याज्यम् = प्रधानम् Viv.). All the other MSS. are more or less corrupt.

३ Thus Bu H G D C ; ॰सदो Bc I.

४ Thus Bu H U G (pr. m.) D C ; ॰सदा G (sec. m.) ; ॰सद Bc.

I. 182. 13. स्तम्बयजुषो हरण इति ॥ सूत्रं बौधायनस्यौपरवकालाद्ध्याग्नीध्रो हरेदिति शालीकिः । ॥

I. 183. 1; III. 57. 4. आख्यातं चात्वालस्य परिलेखनम् ॥

III. 57. 7. आख्यातं लोकाग्नीनाꣳ हरणम् ॥

I. 215. 5 (?). स्फ्यविघनानामुपस्थान इति ॥ सूत्रꣳ शालीकेर्द्वौ ह स्माह बौधायनोऽग्निवत्युत्तरं परिग्राहं परिगृह्य योयुपित्वा तिर्यञ्चꣳ स्फ्यꣳ स्तब्ध्वा यजमानमुत्करे स्फ्यविघनानुपस्थापयेदिति । ॥

अग्नीषोमीयस्य बर्हिषः संस्कार इति ॥ असिदादानप्रभृतीन्मन्त्रान्साधयेदिति बौधायनः ॥ शुल्बप्रभृतीनिति शालीकिः ॥ संभरणप्रभृतीनित्यौपमन्यवः । ॥

अग्नीषोमीयस्य पशोरनुसंव्रज्याया इति ॥ अनुसंव्रजेदिति बौधायनो ॥ नानुसंव्रजेदिति शालीकिः । ॥

I. 183. 18 इध्माबर्हिषोरुपसादन[1] इति ॥ सूत्रमाचार्ययोर्द्वौ ह स्माहौपमन्यवोऽचैवास्मा आग्नीध्रायेध्माबर्हिराहरेत्तदादाय प्राङ्क्रियात्कुशहस्तस्य[2] पृष्ठ्याकालं प्राङ् स्तृणन्गच्छेदिति[3] । ॥

१ °सुपकल्पन the vivaraṇa.

२ Thus G (see m.) Be. प्रांदौयात्कुश° Bu प्राक्रियात्कुश° C'; प्राक्त्यात्कुश° U' G (pr. m.). प्राक्त्याकु° H. प्राक्तेत्यकुश° D C.

३ Thus G C' U' C. स्रोतस्मरे° Bu. स्वयमरे° H. सृपमारे° Be. सृपमारे° D.

हविर्धानयोरभ्यावर्तनं[1] इति ॥ काष्ठानि वा तृणानि वान्तर्धायाभ्यावर्तयेदिति बौधायनो ॥ ऽनन्तर्धायैवेति[2] शालीकिः ॥

184. 4. हविर्धानयोः प्रोक्षण इति ॥ तूष्णीं संस्कृताभिरद्भिः प्रोक्षेदिति बौधायनः ॥ कमण्डलुभिरिति[3] शालीकिः ॥

184. 13. वर्त्मनोरभिहोम इति ॥ सूत्रमौपमन्यवीपुत्रस्यैको ह स्माह बौधायनो दक्षिणस्य हविर्धानस्य वर्तनिमभिजुहुयात्सर्वा[4] अक्षधुर उपाञ्ज्यात्सर्वतश्च परिमृशेदित्यन्यो ह स्माह शालीकिः सर्वा एव वर्तनीरभिजुहुयात्सर्वा अक्षधुर उपाञ्ज्यात्सर्वतश्च परिमृशेदिति ॥

मेथ्योर्निहनन इति ॥ स ह स्माह बौधायनो दक्षिणस्य हविर्धानस्य दक्षिणतो मेथ्यौ निहन्यादुत्तरस्य दक्षिणत इति ॥ दक्षिणतश्चोत्तरतश्चेति शालीकिर्मध्य इत्यौपमन्यवः ॥

186. 10 द्वार्बाह्वोः परिषीवण[5] इति ॥ सर्वान्द्वार्बाहूनन्वेण परिषीव्येदिति बौधायनः ॥ पूर्वौपूर्वाविति शालीकिर्दक्षिणौदक्षिणावित्यौपमन्यवः ॥ १४ ॥

---

१ °भ्यववर्तये° G (see m.) and the vivaraṇa; this might, after all, be the correct reading also VI. 24: 184. 3 (°भ्यववर्तयन्ति

२ Thus G (see m.) C²; नान्तर्धा° the other MSS.

३ कमंडलूभि° G (see m.), cp. Pāṇ. IV. 1. 71.

४ Emended; वर्तन्यामभि° H Be G (pr. m.) D C¹; वर्तन्या अभि Bu.

५ Thus C¹ D H G (pr. m.); °षिवण Be C²; °षवण Bu G (see m.) and the vivaraṇa.

I. 189. 1. औदुम्बर्यां अभिहोम इति ॥ सूत्रमौपमन्यवीपुत्रस्यांचो ह स्माह बौधायन एवमेव जुहुदन्तर्धाय[1] हिरण्यमभिजुहुयादित्युभयोरेव विशाखयोर्हिरण्ये[2] निधायाभिजुहुयादिति शालीकिः ' ॥

I. 197. 8. वसतीवरीणां ग्रहण इति ॥ सूत्रꣳ शालीकेर्"त्रो ह स्माह बौधायन उभयतःशुक्रा आदित्यवतीर्वसतीवरीर्गृह्णीयात्ताः शुक्रास्ताभिराप्याययेत्ताभिरभिषुणुयादिति[3] " धिष्णियान्व्युप्य वसतीवरीर्गृह्णीयादित्यौपमन्यवः ' ॥

I. 190. 18. उपरवाणां परिलेखन इति ॥ त्रिस्त्रिरेकैकं परिलिखेदिति बौधायनः " सकृत्सकृदिति शालीकिः ' ॥

I. 191. 7. उपरवपांसूनां हरण इति ॥ सूत्रꣳ शालीकेर्"त्रो ह स्माह बौधायनो यजमानस्याधस्पदमुपोप्योत्करꣳ हृत्वोपस्पृशेदिति[4] ' ॥

I. 192. 1. उपरवाणां प्रोक्षण इति ॥ त्रिस्त्रिरेकैकं प्रोक्षेदिति बौधायनः " सकृत्सकृदिति शालीकिस्तेष्वेवापो ऽवनयेत्तस्मिन्नवान्प्रस्कन्दयेदित्येवमेवैतत्त्रिविधं कर्म कुर्यादित्यौपमन्यवः " सर्वमेवैतत्कर्मावृता कुर्यादित्यौपमन्यवीपुत्रः ' ॥

१ °दुन्तर्धाय G (see m.), rightly.

२ Thus Bu G, the vv. and Kes.; °ण्यो Be H I D C' C.

३ °ताभिरेवाप्या° G (see m.).

४ Thus Bu C' U C D G (see m.); °कृत्वा H; °हृत्वो° Be.

194.11. धिष्ण्यानां निवपन इति ॥ स ह स्माह बौधायनो वेद्यन्त आग्नीध्रीयं निवपेद्वेद्यन्ते मार्जालीयं। धिष्ण्यान्व्युष्योदीचीनमंसस्थतां[1] कुर्यादित्यथो[1] ह स्माह शालीकिरन्तर्वेद्याग्नीध्रीयं निवपेदन्तर्वेदि मार्जालीयं। धिष्ण्यान्व्युष्य न[1] चोदीचीनमंसस्थतां[1] कुर्यादिति। ॥

194.10. वेद्यै स्तरण इति ॥ सूत्रं शालीकेरथो ह स्माह बौधायनस्तयो दक्षिणतस्त्रय उत्तरतो मध्ये सप्तमः पृष्ठ्याकालं[3] प्राञ्च स्तृणन्तो गच्छेयुरिति॥ पुरस्तादेवैनां प्रत्यञ्च स्तृणन्तोऽभ्यवक्रामेयुरित्यौपमन्यवः। ॥

194.11. अग्नीषोमीयस्याज्यानां ग्रहणे मादन इति ॥ सूत्रं बौधायनस्य॥ पत्नीशाल एवाग्नीषोमीयस्याज्यानि गृहीत्वा-ज्यानि खरे सादयेदिति शालिकिः। ॥

194.13. समन्वानयन इति ॥ सूत्रं बौधायनस्य॥ नाद्रियेतेति शालीकिः। ।

1 Thus here and ... °मंस्थां B. C. ... °मीयस्था Bu ... °संस्थितान्कुर्या° I. H. D. C. ... Bu ... here and ... धिष्ण्यान् H. I. D. here and ... धिष्णियं।

2 Thus C. D. C. G. ... Bu. ... व्युष्यामचोदीचीनमं° Be. व्युष्योदी-चीनमं° H.

3 Between पृष्ठ्या and कालं Ba G. ... स्तरण°, Be C. D. C. Kes ... the word ... H this dvandham is missing.— °कालेन C. G. D. Kes. and cp. XXI. 11: 94. 16. °कालं Bu C., काल Be.

I. 194. 4. अर्धस्तनव्रतप्रदान इति ॥ समन्वानीय[1] वासमन्वानीय[1] वा[1] पुराणगार्हपत्यमर्धस्तनव्रतं प्रयच्छेदिति बौधायनो'' नार्धस्तनव्रतं प्रयच्छेदिति शालीकिः' ॥

I. 195. 1. वैमर्जनानाꣳ होम[2] इति ॥ सूत्रं बौधायनस्य'' चत्वारि चतुर्गृहीतानि जुहुयादिति शालीकिः' ॥

I. 195. 7. वसतीवरीणामनुसꣳहरण इति ॥ अनुसꣳहरेदिति बौधायनो'' नानुसꣳहरेदिति शालीकिः' ॥

वपानां परिहोम इति ॥ तांतां परिजुहुयादिति बौधायन'' आदितश्चान्ततश्चेति शालीकिः' ॥

हृदयशूलानामुद्वासन इति ॥ एकैकश उद्वासयेदिति बौधायनः'' सर्वान्सहेति शालीकिः' ॥

I. 198. 3. वसतीवरीणां परिहरण इति ॥ सूत्रꣳ शालीकेर्''चो ह स्माह बौधायन एवमेवैनाः परिहरन्नग्रेण यूपꣳ सादयित्वा जघनेन गार्हपत्यमुपसाद्याग्नीध्रे 'सन्ना अभिमृग्रेथञ्जे जागृतेति' ॥ १५ ॥ षष्ठः ॥

I. 200. 5. सवनीयस्याज्यानां ग्रहणे सादन इति ॥ सूत्रं बौधायनस्याग्नीध्र[3] एव सवनीयस्याज्यानि गृहीत्वा तानि खरे सादयेदिति शालीकिः' ॥

१ In some of the MSS. समन्वानीयवा is found once only, but cp. the vivarana समन्वानयनात्प्रागूर्ध्वं वा ।

२ परिहोम H Bu D C U G (pr. m.), without परि Be G (sec. m.) and the vivarana. C' वेदसंमार्जनानां होम ।

३ °ग्नीध्रीय U, °ग्नीध्रीये D C omitting एव.

200.17. औदुम्बराणां महापरिधीनां परिधान इति ॥ सूत्रमाचार्ययोर्वचो ह स्माहौपमन्यवः सुम्नन्ता एवैते स्युरिति ॥

201.4. राज्ञ उपावहरण इति ॥ सूत्रमाचार्ययोर्वचो ह स्माहौपमन्यवः प्रातःसवन एव सर्वेभ्यः सवनेभ्यो राजानमुपावहरेदिति ॥

201.7. पञ्चहोतुर्होम इति ॥ सूत्रं बौधायनस्य चतुर्होतारꣳ हुत्वा पञ्चहोतारं जुहुयादिति शालीकिः ॥

201.10. प्रातरनुवाकस्योपाकरण इति ॥ सूत्रमाचार्ययोर्वचो ह [1]स्माहार्तभागीपुत्रस्तूष्णीकेनैककपालेन[2] प्रातरनुवाकमुपाकुर्यादिति ॥

201.16. सवनीयानां निर्वपण इति ॥ सूत्रमाचार्ययोर्वचो ह स्माहौपमन्यवः प्रातःसवन एव सर्वेभ्यः सवनेभ्यः सवनीयान्निर्वपेदिति ॥

201.17. तेषां व्रीहिष्वेव हविष्कृतमुद्वादयत्युपोप्याच्छन्ते यवानिति ॥ सूत्रꣳ शालीकेर्वचो ह स्माह बौधायन आवपनप्रभृति यवेषु मन्त्रकर्माभ्यावर्तेत तस्मं तु हविष्कृत्[3] स्यादिति ॥

आज्यनिनयन इति ॥ जघनेन गार्हपत्यमाज्येभ्यो निनये-

१ °तभागिपुत्र° G (sec. m.).

२ Thus Bu G (sec. m.) the vivaraṇa. °तूष्णीमेकैकै° C H C D G (pr. m.). °तूष्णीमेककपा° Be C.

३ हविष्कृत् G C; हविषूत् D H C; हविष्कृत Bu; हविष्कृतं Be C. cp. XXI. 4: 75. 7; XXII. 11

दिति बौधायनो॥ ऽग्रेणातिहार्येति शालीकिरग्रेण वा जघनेन वेत्यौपमन्यवः। ॥

I. 202. 1 पात्राणाᳪं सादन इति ॥ सूत्रᳪं शालीकेरत्रो ह स्माह बौधायनः खरे पात्राणि सादयेत्तेषां यथार्थमाददीतेति। ॥

I. 203. 9. अथैकधनान्गृह्णातीन्द्राय वो जुष्टान्गृह्णामीति वा तूष्णीं वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः। ॥ १६ ॥

I. 203. 11. अग्नौ प्रस्कन्दन इति ॥ होतृचमसादग्नौ प्रस्कन्दयेदिति बौधायनो॥ वासतीवरात्कलशादिति[१] शालीकिः। ॥

I. 203. 21 ऋतुकरण इति ॥ सूत्रं बौधायनस्य॥ यथाक्लृप्तमेवास्य ऋतुकरणानि कुर्यादिति शालीकिः। ॥

I. 204. 8. दधिग्रहस्य ग्रहण इति ॥ सूत्रᳪं शालीकेरत्रो ह स्माह बौधायन औदुम्बरेणैनं पात्रेण गृह्णीयाद्धुत्वा चैतत्पात्रमग्नावेवानुप्रहरेदिति। ॥

I. 205. 2. दक्षिणायै दान इति ॥ सूत्रं द्वैधमेवैतद्भवति ॥

I. 205. 7 तासु निग्राभ्यासु यजमानं वाचयतीति ॥ सूत्रᳪं शालीकेरत्रोह स्माह बौधायन ऊरौ वोरसि वोपनिगृह्य तासु निग्राभ्यासु यजमानं वाचयतीति। ॥

I. 205. 17. राज्ञो निर्वपण इति ॥ सूत्रमाचार्ययोरत्रो ह स्माहौपमन्यवः प्रातःसवन एव सर्वेभ्यः सवनेभ्यो राजानं निर्वपेदिति। ॥

१ Thus Bu G H. °तीवरीकलशा° Be C. °तीवरीः U'

206. 11 यो ऽꣳशौ स्कन्ने वाचयतीति ॥ सूत्रं बौधायनस्योपाꣳशा-वेवाꣳशौ स्कन्ने वाचयेदिति शालीकिः ॥

208. 16 उपाꣳश्वन्तर्यामयोर्होम इति ॥ सूत्रं बौधायनस्याभावेवो-दिते जुहुयादिति शालीकिरभावेवानुदिते जुहुयादित्यौ-पमन्यवः ॥

207. 11 ; 209. 8 आग्रयणस्य ग्रहण इति ॥ सूत्रꣳ शालीकेरेको ह स्माह बौधायनो द्वयोर्धारयोः प्रातःसवने गृह्णीयात्तिसृणां माध्यंदिने सवने चतसृणां तृतीयसवन इति ॥

211. 18 द्रप्सानुमन्त्रणीयास्विति ॥ सूत्रं बौधायनस्य स्रुवा-हुतीरेवैता[1] जुहुयादिति शालीकिः ॥ १७ ॥

212. 4 पवमानग्रहाणां ग्रहण इति ॥ सूत्रं बौधायनस्य सजुष्टान्परिमृज्य सादयेदिति शालीकिः ॥

212. 13 संततीनाꣳ[2] होम इति ॥ सूत्रꣳ शालीकेरेको ह स्माह बौधायनो वसतीवरीरध्येतैर्मन्त्रैरवनयेदिति ॥

212. 8 पवमानानामुपाकरण इति ॥ सूत्रं बौधायनस्य सदस एव बर्हिषी आदायोपाकुर्यादिति शालीकिः ॥

212. 14 ब्रह्मण उपवेशन इति । यथा सदस्येवमुपविशेदिति बौधायनो यथा दर्शपूर्णमासयोरेवमिति शालीकिः ॥

१ Thus, and cp XXV. 18, H D C I G °रेवैता Bu, °वैता Be C'

२ Thus (with न, G (see m) C' संततीनां the other MSS., cp XXV. 18

I. 212. 14. यजमानस्योपवेशन इति ॥ यथा सदस्येवमुपविशेदिति बौधायनो ॥ यथा दर्शपूर्णमासयोरेवमिति शालीकिः ॥

I. 212. 19. अथोद्गात्रे वा प्रस्तोत्रे वा बर्हिषी प्रयच्छतीति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

I. 212. 19. ऋक्सामयोरुपस्तरणमसि मिथुनस्य प्रजात्या इति वा तूष्णीं वेति । पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥

I. 213. 5. पञ्चम्यां प्रस्तुतायां वाचयतीति ॥ सूत्रं बौधायनस्य ॥ यस्यामेव कस्यां चिद्वाचयेदिति शालीकिः ॥

I. 213. 16. सप्तहोतुर्होम इति ॥ सूत्रं बौधायनस्यानुसवनमेव सप्तहोतारं जुहुयादिति शालीकिः ॥

I. 213. 19. धिष्णियानां विहरण इति ॥ स ह स्माह बौधायन आग्नीध्रीयादङ्गारानादाय[1] तत आग्नीध्रीये प्रस्कन्दयेद्यथानुपूर्वमितरेषु धिष्णियाग्विहृत्योदीचीनसङ्ख्यातां[2] कुर्यादित्यथो ह स्माह शालीकिराग्नीध्रीयादङ्गारानादाय तत आग्नीध्रीये प्रस्कन्दयेद्यथानुपूर्वमितरेषु धिष्णियान्विहृत्य न चोदीचीनसङ्ख्यातां[3] कुर्यादिति ॥

१ ०ग्नीध्र० and ०ग्नीध्रीय० the MSS promiscue; the vivaraṇa and Keś. always ०ग्नीध्रीय० ।

२ Thus G D C C' (pr. m.) संख्याताम C' (sec. m.), ०सख्यातां H. ०संख्या Bu., Be C'' defective

३ Thus U (sec. m.) D C C' ; ०संस्थातं G (sec. m.); ०संख्यातं Bu : संख्याता H Be U (pr. m.) G (pr. m.)

214. 1. धिष्णियानां व्याघारण इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

स्वरुशकलस्योत्पादन इति ॥ यूपः स्वरुशकलमुत्पादयेदिति बौधायनः ॥ पशुरिति शालीकिस्तन्त्रमित्यौपमन्यवो ॥ देवतेत्यौपमन्यवीपुत्रः । ॥ १८ ॥ सप्तमः ॥

215. 16. सर्पण इति ॥ सूत्रं बौधायनस्यापरदारिक[1] एव यजमानः स्यादिति शालीकिः । ॥

तार्तीयसवनिकेषूक्थ्यविग्रहेष्विति ॥ स ह स्माह बौधायनः प्रसर्पेदेव तार्तीयसवनिकेभ्य उक्थ्यविग्रहेभ्यः षोडशिने[2] रात्रिपर्यायेभ्यो राथंतराय संधय इत्यथो ह स्माह शालीकिस्तृतीयसवनातिवृद्धिरेवैषा[3] भवति । यदेव तृतीयसवने प्रसर्पेत्तत्प्रसृप्तमेव[4] तेषाꣳ[4] स्यादिति ॥ प्रातःसवन एव सर्वेभ्यः सवनेभ्यः संप्रसर्पेदित्यौपमन्यवः । ॥

217. 13. आभिचारिके मन्त्रामन्त्र इति ॥ मन्त्रवती च स्यात्सर्वाणि च सवनान्यनुसमियादिति[5] बौधायनस्तूष्णीका च स्यात्स-

[1] °परादारि° U D C H Be C': cp XXI 9 : 86. 7

[2] °श्मिने G Be, °श्मिनि Bu H U C D C''

[3] °मातिवृद्धि° Be G (sec. m.), °मांसवृद्धि° C D U °मंसवृद्धि° H G (pr. m.), माभिवृद्धि° Bu C' and the vivarana

[4] °मेवैतेषु G (sec. m.). °मेषां H.

[5] °नुसमीया° MSS

वर्षि च सवनान्यनुषमियादिति[1] शालीकि॥र्मन्त्रवती च स्यात्प्रातःसवने चैवैषा स्यादित्यौपमन्यवः । ॥

I. 217. 11. सवनीयानामुद्वासन इति ॥ सूत्रं बौधायनस्य ॥ नाना-पात्रेष्वेव[2] सवनीयानुद्वासयेदिति शालीकिः । ॥

I. 217. 16. प्रातः प्रातःसावस्येति ॥ सूत्रं बौधायनस्य ॥ प्रातःसावस्येत्येव ब्रूयादिति शालीकिः । ॥

सवनीयानामनुसंहरण इति ॥ अनुसंहरेदिति बौधायनो ॥ नानुसंहरेदिति शालीकिः । ॥

I. 218. 8. प्रतिनिर्ग्राह्याणां[3] ग्रहण इति ॥ सूत्रं बौधायनस्य ॥ द्विदेवत्येभ्य एव प्रतिनिर्ग्राह्यान्गृह्णीयादिति[4] शालीकिः । ॥

I. 218. 13. आघार इति ॥ सूत्रं बौधायनस्य ॥ यज्ञादेवैतमाघार-माघारयेदिति शालीकि॥र्द्रोणकलशात्परिप्लुना पात्रेणेत्यौप-मन्यवो ॥ यजुरेवैतज्जपन्नेतमाघारमाघारयेदित्याश्मौगविः[5] । ॥

१ ॰नुषमोया॰ MSS

२ Thus Be C′ and the viv., ॰पात्रेषु Bu G U D C Kes ; ॰पात्रेष्वेव H.

३ ॰निर्ग्रा Be C′ H, U D C G (pr. m.), निग्रा॰ Bu G (sec. m.) and the vivaraṇa

४ निर्ग्राह्याभिग्रह्णी॰ G (sec. m.) but the र effaced, Be H C D U, ॰निग्राह्यांनिग्रह्णी॰ Bu, ॰ग्राह्यानिग्रह्णी॰ C′ ; ॰निग्राह्यान्ग्रह्णी॰ Kes.: read probably (with Kes.) ॰निर्ग्राह्यान्गृह्णीयादिति

५ Thus G (sec. m.). ॰ग्रैवमाघार॰ Be H U C D ; ॰नैवमाघारये॰ C′ ॰चैतमाघारये॰ G (pr. m.) Kes., ॰यवदेवैतमाघारमा॰ Bu

220. 9. संस्रावस्यापिधान इति ॥ सूत्रं बौधायनस्य ॥ यावानेव[1] संस्रावः स्यात्तमपिदध्यादिति शालीकिः । ॥

220. 14. चमसानामायातन[2] इति ॥ अग्रेण स्रुचः[3] प्राच[3] आयातयेदिति बौधायनो ॥ जघनेन स्रुच उदीच आयातयेदिति शालीकिः । ॥ १९ ॥

I. 221. 4. ग्रहयोः संधान इति ॥ अरत्नौ च ग्रहौ च संदध्यातामिति बौधायनो ॥ ग्रहावेवेति शालीकिः । ॥

222. 12 शुक्रवतो मन्थिवत इति ॥ सूत्रं बौधायनस्य ॥ मन्थिवत इत्येव ब्रूयादिति शालीकिः । ॥

222. 20. मन्थिसंस्रावस्य होम इति ॥ सूत्रꣳ शालीकेर् ॥ यो ह स्माह बौधायन आहवनीयादेवोदीचो ऽङ्गारान्निर्वर्त्य तेषु मन्थिनः[4] संस्रावं[4] जुहुयादिति । ॥

होत्रकचमसानाꣳ[5] होम इति ॥ स ह स्माह बौधायनः शुक्रामन्थिभ्यामेनान्सह संपृक्तान्जुहुयाद्धिरभ्युन्नीतानित्य् ॥ यो ह स्माह शालीकिर्नैनाञ्छुक्रामन्थिभ्याꣳ सह संपृक्तान्जुहुयाद्धिरेवाभ्युन्नीतानिति । ॥

1 यावानय U D C, यावामेव Be, यावानय H

2 °मायतन MSS and the vivaraṇa

3 Thus G (sec. m.) Bn; स्रुच उदीच H U C, स्रुच only, Be D C'

4 मंथिसंस्रा° G (sec. m.)

5 Thus G (sec. m.) and C' only, होत्रचमसानां the other MSS. and the vivaraṇa

I. 223. 17. द्विदेवत्यानां भक्षण इति ॥ सूत्रं बौधायनस्य " प्राणेषूप-निग्राह्यं द्विदेवत्यान्भक्षयेदिति शालीकिर्दीर्घभक्षेणैवैनान्भक्षये-दित्यौपमन्यवः[1] ' ॥

I. 224. 7. अथैतानि , द्विदेवत्यपात्राण्यरिक्तानि करोतीति ॥ सूत्रं बौधायनस्य " सोमेनैवैतान्यरिक्तानि स्युरिति शालीकिः ' ॥

I. 224. 10. अथैनानि दक्षिणस्य हविर्धानस्योत्तरस्यां वर्तन्याꣳ सादय-तीति ॥ सूत्रं बौधायनस्याधस्तादेवैनान्युपस्थस्य[2] सादयेदिति[2] शालीकिः ' ॥

वाचि वाचं दधामीति[3] वा तूष्णीं वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ' ॥

होत्रकचमसानां प्रतिभक्षण इति ॥ प्रतिभक्षयेदिति बौधायनो " न प्रतिभक्षयेदिति शालीकिः ' ॥

I. 229. 6. प्रत्यभिमर्शन इति ॥ सूत्रꣳ शालीकेर्"नो ह स्माह बौधायनो भक्षयन्नेव[4] भक्षाणां पारें प्रत्यभिमृशतीति ' ॥

१ दीर्घभक्षेणै॰ MSS., only C भक्षणैवैना॰, cp. XXV. 20

२ Uncertain, ॰न्युपस्थस्यासाद॰ G (see m.), all the other MSS ॰न्युपस्थ आसाद॰ The vivaraṇa अधस्तादेव दक्षिणस्योपस्थस्य द्रोणकलश-समीपे; could उपस्थस्य be the correct reading?

३ Thus Bu C D G U C', दधामीति H Be. In the text proper no vikalpa of the kind here mentioned, is found, neither is the yajus to be traced in any text. Perhaps this dvaidham is to be taken together with the foregoing one

४ Thus G (see m.) and the vivaraṇa, भक्षंनेव Bu, भक्षयेन्नेव H Be U D G (pr. m.) C C'

233. 1. ऐन्द्राग्नस्य ग्रहण इति ॥ सूत्रमाचार्ययोर्॥ वो ह स्माह दीर्घवात्स्यो मुख्येनैनं पात्रेण गृह्णीयादिति । ॥

229. 1. नाराशंसानामनुप्रकम्पन इति ॥ अनुप्रकम्पयेरन्निति बौधायनो ॥ नानुप्रकम्पयेरन्निति शालीकि॥र्नैनानुपोषच्छेरंस्त्वनेत्यौपमन्यवः । ॥ २० ॥ अष्टमः ॥

31 13. माध्यंदिनीये ऽभिषव इति ॥ नवकृत्वोनवकृत्वो ऽभिषुत्य निग्राभमुपेयुरिति बौधायनो॥ ऽपरिमितमिति शालीकिः । ॥[1]

235. 9. मरुत्वतीययोर्ग्रहण इति ॥ सूत्रं शालीकेर्॥ वो ह स्माह बौधायन उपरिष्टादेवाग्रयणाद्गृह्णीयादिति । शालीको स्रोष भवतीति । ॥

36. 10. अष्टम्यां प्रस्तुतायां वाचयतीति ॥ सूत्रं बौधायनस्य ॥ यस्यामेव कस्यां चिद्वाचयेदिति शालीकिः । ॥

237. 3 दधिघर्मस्य ग्रहण इति ॥ सूत्रं बौधायनस्याग्नीध्र एनं गृह्णीयादिति शालीकिः ॥ परिश्रित्योभयतः शान्तिं कृत्वाग्नीध्र एवेत्यौपमन्यवः । ॥

दधिघर्मस्य चर्याया इति ॥ उपांशु चरेदिति बौधायन ॥ उच्चैरिति शालीकिः । ॥

37 16. दधिघर्मस्य भक्षण इति ॥ सूत्रं शालीकेर्॥ वो ह स्माह

१ After this dvaidham G C D H C ins. प्रातःसवन एवैषा स्यादित्यौपमन्यवः सवनीयामुद्वासन इति सूत्रं बौ० स नानापात्रेष्वेव सवनीयानुद्वासयेदिति शा० कि: ॥ cp XXI. 19 104. 3

बौधायनो ऽवघ्रभक्षणेनैवेतरे भक्षयेयुर्यजमान एव प्रत्यक्षं भक्षयेदरण्ये[१] ऽनुवाक्येन[१] मन्त्रेणेति ' ॥

I. 240. 20. दक्षिणानामत्याकरणे[२] इति ॥ सूत्रꣳ शालीकेर्"चो ह स्माह बौधायन एकामेव दक्षिणां दक्षिणापथेनात्याकुर्यादथे-तरा[३] यथावकाशं गच्छेयुरिति ' ॥

संचर[४] इति ॥ नीतासु दक्षिणासु[५] यथार्थꣳ संचरेरन्निति बौधायनो " नासꣳस्थिते सोमे ऽध्वर्युः प्रत्यङ् सदो ऽतीयादिति शालीकिः ' ॥

I. 259. 7. कृष्णविषाणायाः प्रासनं इति ॥ सूत्रं बौधायनस्य " नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्येदिति शालीकिः ' ॥

I. 241. 9. आत्रेयस्य संवदन[६] इति ॥ सूत्रꣳ शालीकेर्"चो ह स्माह बौधायनस्त्रिरेवाव्यतिषजन्पृच्छेत्क[७] आत्रेयः क आत्रेय इति ' ॥ २१ ॥

१ Thus G U (pr. m.), viv., Keś; °ण्येनानुवा° Be U (sec. m.); °ण्येनवा° Bu H D C, °ण्येवानुवा° C'.

२ Thus Be C' Bu and the vivaraṇa (one copy) °त्याक्रमण U H G D C and the vivaraṇa (another copy).

३ °कुर्याद्° Be Bu C', °क्रामेद्° U H G D C'

४ संचरण Bu.

५ Between दक्षिणासु and यथार्थꣳ the MSS. exc. Be C' and Keś; ins. चात्वाले, clearly interpolated from the following dvaidham.

६ Thus Bu C' G (sec. m.), the vivaraṇa; संवादन Be H C U D G (pr. m.).

७ Thus Bu Be G C'; °त्रिरेवव्यति° H U D C

241. 13. दक्षिणानां दान इति ॥ स ह स्माह बौधायनो मरुत्विंभ्य एना[1] दद्यान्न होत्रकाननुसंचरेदिति ॥ न च होत्रकाननुसंचरेन्न च सदस्याय दद्यान्न शतस्यानुख्या विज्ञायत इति शालीकिः ॥

242. 8.9 मरुत्वतीययोर्होम इति ॥ स ह स्माह बौधायनो यद्येवाध्वर्युर्जुहुयात्स वषट्कृतानुवषट्कृतः स्यादथेतरो ऽननुवषट्कृतः[2] स्यादित्युभावेवाननुवषट्कृतौ[3] स्यातामिति शालीकिरुभावेवानुवषट्कृतौ स्यातामित्यौपमन्यवः ॥

242. 13. तृतीयस्य मरुत्वतीयस्य ग्रहण इति ॥ सूत्रमाचार्ययोर्यो ह स्माह दीर्घवात्स्यो मुख्येनैनं पात्रेण गृह्णीयादिति ॥

243. 5 नाराशꣳसानामनुप्रकम्पन इति ॥ अनुप्रकम्पयेरन्निति बौधायनो नानुप्रकम्पयेरन्निति शालीकिर्नैनानुपोषयेरꣳश्नेत्यौपमन्यवः ॥

244. 2 सौम्यस्य मन्त्रामन्त्र इति ॥ मन्त्रवान्स्यादिति बौधायनस्तूष्णीक इति शालीकिः सौम्य एव मन्त्रवान्स्यात्तूष्णीक एककपाल इत्यौपमन्यवः ॥

245. 11 तार्तीयसवनिके ऽभिषव इति ॥ सूत्रं बौधायनस्य यदाप्याययति तेनाꣳशुमदित्येव ब्रूयादिति शालीकिः ॥

१ एना Bu G; एनां H Be C' U D C. एव the vivaraṇa

२ Emended; मानुव° or मानव° MSS.

३ Thus Be C' U. °भावेवानु° H D C. °भावेव वषट्कृतानुवषट्कृतौ G (sec. m.).

I. 245. 19. आदित्यपात्रस्य ग्रहण इति ॥ सूत्रं शालीकेर्यो ह स्माह बौधायनः पुरस्तादेनमभिषवाद्गृह्णीयात्तूष्णीं[1] शृतातङ्क्यमवनयेदिति । ॥

I. 246. 12. आदित्यग्रहस्योद्वाहनन इति ॥ अर्धर्चश उद्वाहन्यादिति बौधायनः । सर्वर्चेति शालीकिः । ॥

I. 247. 11. मैत्रावरुणस्य श्रयण[2] आग्निरो[2]ऽवनयन[2] इति ॥ सूत्रं शालीकेर्यो ह स्माह बौधायनः श्रीणीयादेव मैत्रावरुणं पयसाग्निरमवनयेदिति । ॥

I. 248. 5. नवम्यां प्रस्तुतायां वाचयतीति ॥ सूत्रं बौधायनस्य । यस्यामेव कस्यां चिद्वाचयेदिति शालीकिः । ॥

I. 249. 17, 250. 6. होत्रकाणां[3] संतर्पण इति ॥ सूत्रं शालीकेर्यो ह स्माह बौधायनोऽनुषवनमेव होत्राः[4] संतर्पयेदिति । पञ्च प्रातःसवने षण्माध्यंदिने सवने सप्त तृतीयसवन इत्यौपमन्यवः । ॥

I. 251. 1. औपासनेष्विति ॥ स ह स्माह बौधायनोऽनुसंगृह्यौपासनानतुमन्त्रयेत चमसेभ्यश्च पुरोडाशशकलानुपास्येद्य चैव

१ पुरस्ताद्देवाभि॰ G (sec. m.); पुरस्तादेवमभि॰ D C H.

२ Emended; पयसाग्निरोवनयन Bu G and the vivaraṇa; पयसाग्निरत्वोवनयन H U D C; पयसौग्निरोवनयन Be C′.

३ होत्रकाणां Be G (sec. m.) C′, the vivaraṇa; होत्राणां Bu; होत्रणां G (pr. m.); होत्राणां H U D C.

४ होत्राः Bu G (sec. m.); होत्रकान् Be C′ H U D C G (pr. m.).

यजुर्होतारं व्याचक्षीतेत्यथो ह स्माह शालीकिरनुसंख्यैवौपासनानतुमन्त्रयेत पार्श्वतस्समवेभ्यः[1] पुरोडाशशकलानुपास्येदुपरिष्टाच्च यजुर्होतारं व्याचक्षीतेति ॥ २२ ॥ नवमः ॥

I. 251. 6. सावित्रस्य ग्रहणे सादन इति ॥ सूत्रं बौधायनस्य यजुष्टं परिमृज्य सादयेदिति शालीकिः ॥

I. 252. 5. तदन्यतो-मदं प्रतिगृणातीति ॥ सूत्रं बौधायनस्य मदामोद[2] इवेत्येव[2] प्रतिगृणीयादिति शालीकिः ॥

. 252. 11. नाराशंसानामनुप्रकम्पन इति ॥ अनुप्रकम्पयेरन्निति बौधायनो नानुप्रकम्पयेरन्निति शालीकिर्नैनानुपोषयेरꣳसनेत्यौपमन्यवः ॥

सौम्यस्य चर्याया इति ॥ उपांशु चरेदिति बौधायन उच्चैरिति शालीकिः ॥

I. 253. 5. सौम्यस्य परीज्याया इति ॥ स ह स्माह बौधायनो यदि चैव[3] समस्तौ यदि च विहृतावग्नाविष्णू उपांश्वेव स्यातामिति समस्तावुपांशु विहृतावुच्चैरिति शालीकिः ॥

. 248. 12. तार्तीयसवनिकानां धिष्ण्यानां विहरण इति ॥ सूत्रꣳ शालीकेरथो ह स्माह बौधायनश्चरित्वा वाचरित्वा वा सौम्येनाङ्गारैस्तुर्धिष्ण्यान्विहरेदिति ॥

१ पार्श्वतः om. Be C′.
२ मोदइवेत्येव G (sec. m.) only.
३ चैव om. Be Bu D U (pr. m.).

I. 254. 6. पात्नीवतस्य भक्षण इति ॥ सूत्रं बौधायनस्य ॥ दध्ना वा पयसा वा पात्नीवतꣳ श्रीणीयादिति शालीकि॥र्धिष्ण्यानां व्याघारणशेषेणाज्येन पात्नीवतꣳ श्रीणीयादित्यौपमन्यवः । ॥

I. 254. 14. पत्न्या उदानयन इति ॥ सूत्रं बौधायनस्य॥पिवासीतापो-हिष्ठीयाभ्य इति शालीकिः । ॥

I. 255. 14. तदुभयतो-मदं[1] प्रतिगृह्णातीति ॥ सूत्रं बौधायनस्य ॥ मोदा मोद[2] इवेत्येव[2] प्रतिगृह्णीयादिति शालीकिः । ॥

I. 255. 17. ध्रुवस्य प्रप्यावन इति ॥ सूत्रं बौधायनस्य ॥ सर्व एवैषो ऽवनयनमन्त्रः स्यादिति शालीकिः । ॥ २३ ॥

I. 256. 14. चमसानामायातन[3] इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

I. 256. 15. तेषु त्रीꣳस्त्रीꣳस्य दूर्वाग्रन्थीन्प्रास्यत्येकैकं च दर्भपुञ्जील-मिति ॥ सूत्रं बौधायनस्य॥च्छिद्रैरेवैते दर्भाः[4] स्युरिति शालीकिः । ॥

I. 256. 21. चौपयजेष्विति ॥ सूत्रꣳ शालीकेर्॥चो ह स्माह बौधा-यन आग्नीध्रादग्नीषोमीयस्य[5] च सवनीयस्य चाङ्गारानाहरे-च्छामित्राग्नेश्चावदध्यै वपाया इति । ॥

---

१ •मदं all, against VIII, 15 : 255. 14.

२ मोदैवेत्व• G D C C′.

३ •मायतन all exc. C.

४ ? दर्भा Bu C′, दर्भाः G (sec. m.), दर्भा Be, H U D C omit the word altogether. The vivaraṇa has: छिद्रैरेव चाषणो दर्भमीषा इति ।

५ Thus, and comp. vol. I l.c., H G U (pr. m.) C D, the vivaraṇa; •ग्नीमीया• Be C′ U (sec. m.) Bu Keś.

258. 8. मिन्द्राग्न्योर्होम इति ॥ सूत्रमाचार्ययोर्नो ह स्माहौपमन्यवः पुरस्तादैन्द्राग्नौ जुहुयादैन्द्राग्नौ हुत्वा हारियोजनं ग्रहं गृह्णीयादिति ॥

258. 10. शाकलैश्चर्याया इति ॥ सूत्रं शालीकेर्नो ह स्माह बौधायनो यावन्त्येनांसि कृतान्यभिविजानीयात्तेषामवयजनमधीत्याभ्याददध्यादिति ॥

258. 15. आदित्यस्योपस्थान इति ॥ सूत्रं बौधायनस्याहवनीयमेवैतेन यजुषोपतिष्ठेरन्निति शालीकिः ॥

259. 8. कृष्णविषाणायाः प्रास्यन इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

259. 12. अवभृथ इति ॥ सूत्रमाचार्ययोर्नो ह स्माहौपमन्यवो ऽचैवैनं[1] स्थण्डिले कुम्भमिश्रं प्ररोप्य शालीभिश्च ग्रावोवायव्येन चावभृथमवेयादिति ॥

261. 12. ग्रावोवायव्यस्य प्रप्लावन इति ॥ सूत्रं बौधायनस्य प्रचास्योदाहरेयुरिति शालीकिः ॥ प्रचास्यैवैता शालीरुदाहरेयुस्तानि देविकाहवींषि अपयेयुरिति बौधायनः प्रप्लावयेयुरेवेति[2] शालीकिः ॥ २४ ॥

ib. कृष्णाजिनस्य प्रप्लावन इति ॥ सूत्रं शालीकेर्नो ह स्माह बौधायनः कृष्णाजिनमनुख्याद्गिरभ्युक्ष्य पुनाय वासो-

1 चैवैनं Bu G D C; चैवैन H U (pr. m.); चैवैतत् U (sec. m.), चैतत् Be C′.

2 एव only in G (sec. m.).

वासिने वा दद्यात्कुशोपधानं[1] वैनत्कुर्वीतापि वैनेन पुनर्दीक्षितापि वैनेन पुनर्यजेतेति ॥

I. 262. 6. उदयनीयस्य बर्हिषः संस्कार इति ॥ असिदादानप्रभृतीन्मन्त्रान्साधयेदिति बौधायनः ॥ प्रस्तरप्रभृतीनिति शालीकिः ॥ संभरणप्रभृतीनित्यौपमन्यवः ॥

ib. उदयनीयस्य निर्वपण इति ॥ स्रुचि वावधाय[2] श्यामकाषं स्थाल्यां[3] वा सश्यामकाषायां[4] निर्वपेदिति[4] ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

I. 262. 9. उदयनीयस्य श्रपण इति ॥ पयसि श्रपयेदिति बौधायनो ॥ ऽप्स्विति शालीकिः ॥

चरोरनुपरिहरण इति ॥ अनुपरिहरेदिति बौधायनो ॥ नानुपरिहरेदिति शालीकिः ॥

उदयनीयस्यासादन इति ॥ यजुषासादयेदिति बौधायनस्तू॥ष्णीमिति शालीकिः ॥

उदयनीयस्य चर्याया इति ॥ सूत्रं बौधायनस्याहवनीय एवोदयनीयेन चरेदिति शालीकिः ॥

I. 263. 2, 5. पशूबन्धस्य[5] करण इति ॥ सूत्रं बौधायनस्य ॥ मैत्रावरु-

---

1 कुशोपधानं all the MSS.; कुशोप॰ Keś.; कुशां निधानार्थं इतिः the vivaraṇa.

2 वानधाय H D G U C C′.

3 स्थाल्या G (sec. m.) Bo C′.

4 ॰काषायेति G (sec. m.); ॰काषायेदिति C′.

5 पशू॰ G (sec. m.) C′ and the vivaraṇa; पशु॰ the other MSS.

ह्यामिक्षया[1] यजेतेति शालीकिर्॥थो ह स्माहौपमन्यवो ऽर्धं[2] पशुमप्यवालभेतैकादशप्रयाजं त्वेव तन्त्रं संतिष्ठापयिषेदिति ।

वपानां परिहोम इति ॥ तांतां परिजुहुयादिति बौधायन॥ आदितश्चान्ततश्चेति शालीकिः । ॥

हृदयशूलानामुदासन इति ॥ एकैकश उदासयेदिति बौधायनः॥ सर्वान्सहेति[3] शालीकिः । ॥ २५ ॥

उत्सर्ग[4] इति ॥ सर्वाङ्गोपशूनुत्सृजेदिति बौधायनो॥ ऽन्यत्रर्षभाच्च वशायै चेति शालीकिः । ॥

I. 263. 5.१० आमिक्षायै मन्त्रामन्त्र इति ॥ मन्त्रवती स्यादिति बौधायनस्तूष्णीकेति शालीकिः । ॥

I. 263. 6. मैत्रावरुणे परिधिष्विति ॥ सूत्रं शालीकेर्॥थो ह स्माह बौधायनः पूर्वे स्थूणे सदसो वा हविर्धानयोर्वा भित्त्वा वेदस्कान्परिधीन्मैत्रावरुणे[5] कुर्यादिति । ॥

१ वा ins. G.

२ अ Bu.

३ सर्वांश्च instead of सर्वान् some of the MSS.; some omit सह ।

४ Thus G (sec. m.) and the vivaraṇa of our passage, उत्सिच a copy of the vivaraṇa of the text proper; उत्सृज Bu; उत्कर्ष Be C′ U (sec. m.); उत्सव C D H U (pr. m.) G (pr. m.) and a copy of the vivaraṇa of the text proper.

५ वै(वे)दस्कान् all (and thus also the Karmânta, XXV. 26), exc. G (sec. m.), which has वैदखान् ।

I. 263. 8. उद्वसान इति ॥ सूत्रं बौधायनस्य " पूर्णाहुत्यैवोद्वसेदिति शालीकिः ' ॥

I. 263. 12. दक्षिणायै दान इति ॥ सूत्रं बौधायनस्य " नाचाकामनियतं[1] देयमिति शालीकिः ' ॥

I. 263. 13. देविकाहविषां करण इति ॥ सूत्रमौपमन्यवीपुत्रस्यौपो ह स्माह बौधायनस्त्रीण्यनूबन्ध्यस्य पशुपुरोडाशमनुवर्तयेत्त्रीण्युदवसानीयामिति " सर्वाण्येवानूबन्ध्यस्य पशुपुरोडाशमनुवर्तयेदिति शालीकिरा'ख्येनैव देविका यजेतेत्याश्नीगविः ' ॥

I. 264. 5. अग्निभिः प्रत्यवसान इति ॥ अजस्रैः प्रत्यवस्येदिति बौधायनो " ऽरण्योः समारोप्येति शालीकिः ' ॥

I. 264. 7. अग्निहोत्रयोः प्रतिहोम इति ॥ प्रतिजुहुयादिति बौधायनो " न प्रतिजुहुयादिति शालीकिर्न प्रतिजुहुयादिति शालीकिः[2] ' ॥ २६ ॥ दशमः ॥

॥ इत्येकविंशः[3] प्रश्नः ॥

---

1 Uncertain reading: नाचाकामयतो G (sec. m.); नाचाकामन्नितं Be C' (but न्न corrected into य); नाचकामनियतं I' : नाचकामनियतं H; नाचकामनियमं D: नाचकामनियमं C'': नाचकामनियति Bu. The vivaraṇa, although my copy of it is rather bad, seems at least to point to °चकाम° as it runs: इतरोकामकानियतो नियमः ।

2 The repetition of the finishing words not found in the MSS.

3 On the praśna- number cp. Preface to Vol. II, p. II.

II. 1. 1. अथातोऽग्निकल्पं व्याख्यास्यामः ॥

. 1. 11. खरस्य करण इति ॥ उत्तरपूर्वे ऽवान्तरदेशे कुर्यादिति बौधायन उत्तर एवेति शालीकिः ॥

. 1. 20. सावित्राणाꣳ होम इति ॥ सूत्रं बौधायनस्य सम्प्रा-प्य च चतुर्गृहीतं जुहुयादिति शालीकिः ॥

II. 2. 6. गर्दभरशनाया आदान इति ॥ मन्त्रेणाददीतेति बौधा-यनस्तूष्णीमिति शालीकिः ॥

1. 9. वल्मीकवपायै निधाने वैश्यस्योपवेशन इति ॥ सूत्रꣳ शालीकेरन्यो ह स्माह बौधायनो वल्मीकवपां निदध्याद् वैश्यमुपवेशयेद्यत्र खनिः[1] स्यात्तद्रुक्षेयस्तत्र पृच्छन्तं प्रति-ब्रूयादिति ॥

I. 3. 6. खनन इति ॥ अर्धंशः खनेदिति बौधायन आवर्तेति शालीकिः ॥

. 3. 10. पुष्करपर्णेनोत्तरदण्डेन संस्तृणातीति ॥ सूत्रं बौधाय-नस्य यथोत्पन्नेनैव संस्तृणीयादिति शालीकिः ॥

. 3. 14. पिण्डानाꣳ हरण इति ॥ सूत्रꣳ शालीकेरन्यो ह स्माह बौधायनः सर्वाभिःसर्वाभिश्चतुर्हरेदिति । गायत्रीभिर्हरेत्त्रि-ष्टुग्भिः सादयेदित्यौपमन्यवः ॥

II. 4. 8. अश्वस्यात्याक्रमण इति ॥ सूत्रꣳ शालीकेरन्यो ह स्माह बौधायनस्तूष्णीमश्वमत्यायच्छेत्सर्व एवैष गर्दभमन्त्रः स्यादिति ॥

१ खनिर् or खनी the MSS. खनिः भविता स्यात् the Mahāgnisarvasva

II. 4.12. द्यावापृथिव्योः समीक्षण इति ॥ उभे पद्भ्यः समीक्षेतेति बौधायनस्त्विरेवेति शालीकिः । प्राच्यां दिशि संधिमीक्षमाण एतं मन्त्रं जपेदित्यौपमन्यवः ॥

II. 4.16. अपो रशने अभ्यवहरन्त्यपि वाद्भिरभ्युक्ष्य भुञ्जत इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥ १ ॥

II. 5.11. उखानां करण इति ॥ स ह स्माह बौधायनोऽषाढामप्येतस्यै याजुष्यै पादमात्रौ[1] कुर्याद्यावन्मात्रौ चादायेष्टकामृत्तिकायामपिसृजेदेवमस्य[2] सर्वो ऽग्निर्याजुषो भवतीत्यौकामेवोख्यां मन्त्रेण कुर्यात्तूष्णीमितर इति शालीकिः ॥

सर्वासु भिक्षासु प्रत्यय इति ॥ स ह स्माह बौधायनः समाविच्छं मन्त्रकर्माभ्यावर्तयेदिति[3] ॥ यदन्यत्साविच्छेभ्य इति शालीकिः ॥

II. 6.4. अथादत्त एकविंशतिं वृष्णो अश्वस्य शकृत्पिण्डानभिमग्निं पचनमिति ॥ सूत्रं बौधायनस्य यस्यैव कस्य चाश्वस्यादद्दीतेति शालीकिः ॥

II. 6.5. उखानां धूपन इति ॥ सूत्रं बौधायनस्यापरिमितैर्मन्त्रैर्धूपयेदिति शालीकिः ॥

---

१ पाद॰ B U and G (sec. m.) Bn; पद॰ Be C' U' and G (pr. m.)

२ ॰इष्टकायामपि॰ B G (sec. m.), the vivaraṇa: सर्वेष्टकार्थायां (था the Ms.) अपि, the Ms.: सर्वेष्टकार्थायां (था the Ms.) अपिकायाम्।

३ Thus G, U (sec. m.) and the Ms.; मंत्राकर्मा॰ B: मंत्रकर्मणावर्त॰ Bn; कर्माभ्यावर्त॰ Be C'.

II. 6. 11. उखानां प्रवृञ्जन इति ॥ सूत्रं बौधायनस्य कामेवोखा मन्त्रेण प्रवृञ्ज्यात्तूष्णीमितरे इति शालीकिः ॥

II. 6. 14. ताः प्राचीर्वोदीचीर्वायातयतीति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

II. 6. 15. पचन इति ॥ स ह स्माह बौधायन उखा अवभाम्यन्त-लेष्टका वार्हस्पत्यं महावीरं लोकंपृणा इत्येतद्गार्हपत्यात्पचेदथेतरद्ग्रामाग्नेरिति यत्किं चेष्टकोक्तं ग्रामाग्निना तत्पचेद्विहृतं गार्हपत्यादिति शालीकिः ॥

II. 8. 7. पशुशीर्षाणां करण इति ॥ प्रत्यक्षाणि वा मार्त्तिकानि वा स्युरिति बौधायनः प्रत्यक्षाण्येवेति शालीकिर्हिरण्मयानीत्यौपमन्यवो वायव्यसिरसि चैतान्मन्त्राभिगदेदित्यौपमन्यवीपुत्रः ॥

II. 9. 1. चिरपत्नैः पर्णशाखया परिकर्षतीति ॥ सूत्रं बौधायनस्यानुपरिकीर्यैव माषान्यमगाथाभिः परिगायेदिति शालीकिः ॥

II. 10. 9. आघार इति ॥ उभाभ्यां मन्त्राभ्यामेतमाघारमाघारयेदिति बौधायनो हिरण्यगर्भः समवर्तताग्र इत्येतेनैतमाघारमाघारयेदिति शालीकिः ॥ २ ॥ प्रथमः ॥

अनिष्टप्रथमसोमस्याध्वरदीक्षाहुतीनाꣳ होम इति ॥ अध्वरदीक्षाहुतीर्ज्वालाग्निका जुहुयादिति बौधायन आग्निका एवेति शालीकिः ॥

II. 11. 12. वैराजीषु दीक्षास्विति ॥ स ह स्माह बौधायनो नाम-

त्सरꣳ सोम्यैराजौर्दीक्षाः कुर्वीत । कामꣳ संवत्सरꣳ सोम्यैराजौर्दीक्षाः कुर्वीत । संवत्सरं वा कृत्वैकाह्निकं[1] कुर्वीतैकाह्निकस्त्वेवाग्निरिति[2] शालीकिः ॥

II. 13. 7. काम्यस्यान्ववधान[3] इति ॥ जाते काम्यमन्ववदध्यादिति[4] बौधायनः ॥ पुरस्तादेवेति शालीकिः ॥

II. 13. 18. औदुम्बरीणाꣳ समिधामभ्याधान इति ॥ सूत्रं शालीकेर्चो ह स्माह बौधायन एकामेव समिधं पञ्चर्चेनाभ्यादध्यात्तदेव राचोप्तꣳ स्यादिति ॥

II. 15. 14. अग्नपतीयायै समिधोऽभ्याधान इति ॥ सूत्रꣳ शालीकेर्चो ह स्माह बौधायनोऽग्नपतीयां प्रतिसमेधनीयां वैष्णवीमित्येता अभ्यादध्यादिति ॥

II. 16. 2. वात्सप्रविष्णुक्रमयोः संनिपात इति ॥ अहरहः संनिपातयेदिति बौधायन ॥ आदितस्त्वान्ततस्त्वेति शालीकिः ॥

उक्थ्य उद्गाते प्रायश्चित्तकरण[5] इति ॥ स ह स्माह बौधा-

१ Thus G U C' and the Ms : कृत्वैकाह्निकं B Bu ; कृत्वैकाहं Be.

२ According to the vivaraṇa of this dvaidham, given in Ms., the इति, which is missing in all the MSS., ought to be inserted before ऐकाह्निकस्त्वे० ।

३ Thus U (sec. m.) C'. ०स्याभ्याधान the other MSS.

४ Thus B Be C' Bu G (sec. m.) U (sec. m.); ०मादध्या० G (pr. m.) and the Ms.

५ प्रायश्चित्तस्य करण G (sec. m.) U

यन्तः प्रवृज्य परिहायाकाङ्क्षतिभिरभिजुहुयाद्येतरत्कर्माहृता कुर्यादित्यन्यो ह स्माह शालीकिः प्रवृज्य परिहायाकाङ्क्षतिभिरभिजुहुयाच्च चेतरत्कर्माहृता कुर्यादिति ॥

1. 16. 12. प्रयाण इति ॥ स ह स्माह बौधायन उभयेन प्रयायादाध्वरिकेण चाग्निकेन चेत्याग्निकेनैवेति शालीकिः ॥

[illegible]. 15. अथ यद्यपर्याणा[1] अप उपाधिगच्छतीति ॥ सूत्रं शालीकेरन्यो ह स्माह बौधायनो यद्येवापर्याणा अप उपाधिगच्छेत्तद्भस्म प्रवेशयेच्च विगर्भां तां कुर्याद्यावन्मात्रं चादाय प्रत्यवदध्यात्प्रसव्य भस्मना योनिमित्यथेतरत्स्थालीषु वा चतेषु वानुनिधापयेदिति ॥

17. 13. देवयजनस्याध्यवसान इति ॥ स ह स्माह बौधायन उभयेनाध्यवस्येदाध्वरिकेण चाग्निकेन चेत्याग्निकेनैवेति शालीकिः ॥ ३ ॥

18. 11. संभाराणां निवपन इति ॥ सूत्रं शालीकेरन्यो ह स्माह बौधायनो भस्म चैवोषांश्च मन्त्रेण निवपेत्तूष्णीमितरौ संभाराविति ॥

19. 4. गार्हपत्यचिताविति ॥ सूत्रं शालीकेरन्यो ह स्माह बौधायनोऽग्निग्रहणं स्वयंचितिं चेतहृष्णयोरभिमर्शनमधिद्रवणमवद्रवणमिति[2] सर्वमेवैतत्कर्माहृता कुर्यादिति ॥

१ Thus here and infra all

२ Thus Be C and cp. XXIII. 15 °धिद्रवणावद्रवण इति B °धिद्रवणीवद्रवणं इति C (see m.) Ms. °धिद्रवणमिति Bu G C (pr. m.).

साहस्रं चिन्वीत प्रथमं चिन्वानः पञ्चचितीकं चेति ॥ स ह स्माह बौधायनः समाप्यैतांश्चतुर्थं चिन्वानो जानुदघ्नं चात ऊर्ध्वं प्रत्याददीत पञ्चचितीकं चेत्य॥थो ह स्माह शालीकिः समाप्यैतांश्चतुर्थं चिन्वानो ग्रीवदघ्नं चैवात ऊर्ध्वं प्रत्याददीतैकचितीकं चेति । ॥

वात्सप्रविष्णुक्रमयोः संनिपात इति ॥ स ह स्माह बौधायनो यद्यह[1] वात्सप्रमुपवसथे संपद्येत वात्सप्रेणोपस्थाय संनिवपेताथ यदि विष्णुक्रमा उपवसथे संपद्येरन्विष्णुक्रमैः क्रमित्वा वात्सप्रेणोपस्थाय संनिवापेन प्रक्रामेदित्य॥थो ह स्माह शालीकिर्यद्यह[1] वात्सप्रमुपवसथे संपद्येत वात्सप्रेणोपस्थाय श्वो भूते संनिवपेताथ यदि विष्णुक्रमा उपवसथे संपद्येरन्विष्णुक्रमैः क्रमित्वा वात्सप्रेणोपस्थाय श्वो भूते[1] संनिवापेनैव प्रक्रामेदिति । ॥

II. 20. 3. तस्यामन्यचावेक्षमाणो दधिद्रप्सान्प्रास्यत्यमुं ते शुचि दधामीति वा तूष्णीं वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः । ॥

II. 20. 5 अथैनाꣳ सिकताभिः पूरयित्वा दर्भोपरिष्टात्संप्रच्छादयेति ॥ सूत्रं बौधायनस्य ॥ सिकताभिरेवैनां[2] पूरयित्वोत्तरे शालाखण्डे निदध्यादिति शालीकिः । ॥

१ Thus Bu U G (sec. m.) Be C ; यदिह B G (pr. m.) ; यदि Ms.
२ °रेवैनां Bu Be C ; °रेवैनाः B G U Ms.

II. 20. 7. स्फ्यस्यादान इति ॥ मन्त्रेणाददीतेति बौधायनस्तूष्णीमिति शालीकिः ॥

I. 20. 15. नैर्ऋतीनामुपस्थान[1] इति ॥ कुर्वीताच तथादेवतमुद्दोषधे[2] इति[2] बौधायनो न कुर्वीतेति शालीकिः ॥

I. 20. 17. उदपात्रस्योपनिनयन इति ॥ प्रदक्षिणमुपनिनयेदिति बौधायनो यथोपपादमिति शालीकिः ॥

II. 21. 1. गार्हपत्यस्योपस्थान इति । सूक्तं बौधायनस्त्वाहवनीयमेवैतेन यजुषोपतिष्ठेरन्निति शालीकिः ॥ ४ ॥ द्वितीयः ॥

I. 21. 13. स्तम्बयजुषो हरण इति ॥ सूक्तं बौधायनस्त्वपरवकाशादध्यत्राग्नीध्रो हरेदिति शालीकिः ॥

II. 57. 4. आख्यातं चात्वालस्य परिलेखनम् ॥

II. 57. 7. आख्यातं लोकाग्नीनाꣳ हरणम् ॥

II. 94. 5. आख्यातꣳ स्फ्यविघनानामुपस्थानम् ॥

I. 21. 17. कार्ष्णाजिनीनामुपमोचन इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

II. 22. 6. वज्रिणीनामुपधान इति ॥ सूक्तꣳ शालीकेरथो ह स्माह बौधायनो ऽग्रेण यूपावटीयꣳ शङ्कुं तिष्ठन्ननुरधिज्यं कृत्वा प्राञ्चं बाणं प्रविध्येत्तमनुद्रुत्यास्मानमुपदध्यादेवं दक्षिणत एवं पश्चादेवमुत्तरत इति ॥

1 ॰मुपधान most of the MSS.

2 Thus B G; ॰दोषधे इति Bu; ॰दोषध इति Be ॰दोषधाविति C (sec. m.); Ms; C uncertain

II. 23. 2. ऐन्द्रिया[१] उपधान इति ॥ सूत्रं बौधायनस्य " पुच्छ ऐन्द्रीमुपदध्यादिति शालीकिः ' ॥

II. 23. 8. उदपात्रस्योपनिनय इति ॥ प्रदक्षिणमुपनिनयेदिति बौधायनो " यथोपपादमिति शालीकिः ' ॥

ib. दर्भस्तम्बस्योपधान इति ॥ वाक्या समुद्र उपदधात्विति वा तूष्णीं वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ' ॥

II. 23. 10. दूर्वेष्टकाया उपधान इति ॥ स ह स्माह बौधायनो दूर्वया वा सहोपदध्याद्दूर्वां[२] वैवेति[२] " मन्त्रदूर्वैवैषा स्यादिति शालीकिः ' ॥

II. 23. 13. औदुम्बरं युगलाङ्गलमिति ॥ सूत्रं बौधायनस्य " दार्श्वं वृक्षमेवैनत्कुर्यादिति[३] शालीकिः ॥ पुरुषा एवैतद्युगलाङ्गलं पुरस्तादाददते ऽध्वर्युः पश्चादिति बौधायनः " प्रत्यक्षमेवैतत्संयुज्य कर्षेदिति शालीकिः ' ॥

II. 24. 1 कर्षण इति ॥ संप्रत्याहारं[४] कर्षेदिति बौधायन " आवाजम[५] इति शालीकिः ॥ ५ ॥

१ Thus Be G (pr. m.), ऐन्द्र्या Bu B G (sec. m.); ऐन्द्रियाम्॰ Bu

२ Thus C′; दूर्वांवैवेति B Be G, चैवेति C (sec. m.), वेति C (pr. m.).

३ Thus C′ the Viv. and Ms. ॰दृक्ष॰ the other MSS — ॰मेवैनत्कु॰ G Ms., ॰मेवैनेकु॰ Be C′.

४ Thus Be C′, संप्रत्याहारं Bu G, संप्रत्यमाहारं C, प्रत्याहारं B संप्रत्याहृत्याहृत्य the Viv.

५ Thus B G C and the Viv.; चपाजम Bu, चावाज Be C′. Meaning uncertain

23. 16. गोयुगानामनुमन्त्रण इति ॥ तन्त्रदेवानुमन्त्रयेदिति बौधायनः ॥ सर्वाणि यत्रेति शालीकिः ।॥

I. 24. 10. सर्वौषधस्य वपन इति ॥ अर्धमर्धं वपेदिति बौधायन ॥ सर्वपेति शालीकिः ।॥

I. 24. 14. इतरमितरच्च विपरिहरतीतरमितरच्चेति ॥ सूत्रं बौधायनस्योद्दान एवैनां दिशमभिसंपादयेदिति शालीकि॥ यजुषा यजुर्विपरिहरेदित्यौपमन्यवः ।॥

26. 8. स दर्भपुञ्जीलानि पयःप्रोक्षे ऽवधाय तैः प्रोक्षत्यग्नीभ्यो ऽग्निभ्यो जुष्टाग्प्रोक्षामीति वा तूष्णीं वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ।

II. 27. 5. कुम्भेष्टकानामुपधान इति ॥ सूत्रं बौधायनस्य ॥ पञ्चपञ्चैवैना[1] उपदध्यादिति[1] शालीकिः ।॥

नानामन्त्रास्तु दिशो भजमानाश्चेति ॥ तयादेवतेनानुक्रम्य पारे सूददोहसः कुर्वीतेति बौधायनस्तांतामेवेष्टकां परिनिश्रिष्टेदिति शालीकिः ।॥

इष्टकागणानामुपधान इति ॥ तयादेवतेनानुक्रम्य पारे सूददोहसः कुर्वीतेति बौधायनस्तंतमेवेष्टकागणं परिनिश्रिष्टेदिति शालीकिः ।॥

28. 8-10. अभिमर्शे ऽभिहोम इति ॥ सूत्रमाचार्ययोरथो ह स्माहौ-

---

१ Thus B G U (sec. m.): ॰पुच्छेनैतामप॰ Bu., ॰पुच्छका उप॰ Be C.

पमन्त्रवः पुरस्तादभिमर्शाभिहोमाभ्यां तथादैवतस्ददोहसः[1] कुर्वीतेति ' ॥

II. 28. 15. सर्पशिरस[2] उपधान इति ॥ पूर्वः कल्पो बौधायनस्यो-त्तरः शालीकेः ॥

II. 30. 10. औदुम्बरं चोलूखलमुसलमिति ॥ सूचं बौधायनस्य " दार्वाहलमेवैनत्कुर्यादिति[3] शालीकिः ' ॥ ६ ॥

II. 30. 11. सर्वौषधस्यावहनन इति ॥ मन्त्रेणावहन्यादिति बौधायन-स्तूष्णीमिति शालीकिः ' ॥

II. 30. 17. उख्यानामुपधान इति ॥ सूचं बौधायनस्यैकामेवोख्यां मन्त्रेणोपदध्यात्तूष्णीमितरे इति शालीकिः ' ॥

II. 31. 13 पशुशीर्षाणामुपधान इति ॥ मध्य उपदध्यादिति बौधा-यनो " ऽन्तेषु तस्य व्युदूह्योपदध्यादिति शालीकिः ' ॥

अथर्वशिरस उपधान इति ॥ पुरस्तात्सर्वतोमुखमग्रेण स्वयमातृण्णामथ नवर्चमथर्वशिर उपदध्यादिति बौधायनो " नाथर्वशिर इति शालीकिः ' ॥

II. 33. 12 सर्वतोमुखस्योपधान इति ॥ सूचं बौधायनस्यानुदिशमेव[4] गायत्रीरुपदध्यादिति शालीकिः ' ॥

१ Thus all the MSS.; °दोचो Ms.

२ °शिर MSS. exc. C

३ °हला° MSS. exc. U C' and Ms.; °मेवैन MSS. exc. U.

४ Thus Be C'' U (sec. m.) and the Viv.; the other MSS. om. एव ।

15. यज्ञानामुपधान इति ॥ सूत्रं बौधायनस्य ॥ विज्ञातेष्वेवाङ्गेष्वङ्गान्युपदध्यादिति शालीकिः ॥

14. 2 ऋषभस्योपधान इति ॥ सूत्रं शालीकेरथो ह स्माह बौधायन ईषत्प्रत्यवछतमिवैनमुपदध्याद्यथर्षभो[1] वाग्निमुपतिष्ठतीति[2] ।

अतीतानामिष्टकागणानामुपधान इति ॥ आधिमुपदध्यादिति[3] बौधायनश्चित्यन्त इति शालीकिः ॥

व्रतप्रदान इति ॥ मध्यंदिने व्रतं प्रयच्छेदिति बौधायनश्चित्यन्त इति शालीकिः ॥ ७ ॥ तृतीयः ॥

3. 1.10 पुरीषचितेरुपधान इति ॥ सूत्रं बौधायनस्य ॥ पूर्वेद्युरेव पुरीषचितिं परिनिष्ठेदिति शालीकिः ॥

अश्वावभितस्तिष्ठेतां कृष्ण उत्तरः[4] श्वेतो दक्षिण[5] इति ॥ अथैनाभ्यां तिष्ठद्भ्यां घासमाहारयेदिति बौधायनः ॥ कालेकाल एवैनावुदानयेयुरिति शालीकिः ॥

39. 1. 14 वालखिल्यानामुपधान इति ॥ उपरिष्टाद्वालखिल्या उपदध्यादिति बौधायनः ॥ पार्श्वत इति शालीकिः ॥

१ Thus (प्रत्यवछत°) U G (pr. m.) C and Ms., °प्रत्यवचन° Bu; प्रत्यवमवछत° Be G (sec. m.), प्रत्यवमवचन° B

२ Thus G and Ms.; वाग्निनमुप° or वाग्निनामुप° the other MSS.

३ Thus B G U (sec. m.), Ms and the Viv., अधि° Bu, अधि° Be C' U (pr. m.).

४ उत्तरत G C and the Viv.

५ दक्षिणत B G.

II. 41. 1. ऋष्टीनामायातन[1] इति ॥ अग्रेण स्वयमातृण्णामुदीचीरेना आयातयेद्दोत्तरस्मात्पक्षसंधेः सर्वतो[2] वेति[2] ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः । ॥

II. 41. 5. व्युष्टीनामुपधान इति ॥ सूत्रं शालीकेरथो ह स्माह बौधायनः पुरस्तादेनाः प्रतीचीरुपदध्यात्पुरस्ताद्धि प्रतीची रात्रिर्व्युच्छतीति । ॥

II. 42. 18. तासां पुरीषवतीं मध्य उपदधातीति ॥ स ह स्माह बौधायनः पुरीषेण वा सहोपदध्यात्पुरीषं[3] वैवेति[3] । मन्त्र-पुरीषैवैषा स्यादिति शालीकिः । ॥

II. 42. 20 वैराजानामुपधान इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः । ॥

II. 43. 9. याज्ञसेनीनामुपधान इति ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥

II. 43. 21. घृतेष्टकानामुपधान इति ॥ स ह स्माह बौधायनो घृतेन वा सहोपदध्याद्धृतेन वाभ्यज्येति ॥ मन्त्रघृता एवैताः स्युरिति शालीकिर्घृतपिण्डामेवाचोपदध्यादित्यौपमन्यवः । ॥

१ Thus C' (sec. m.), Ms., the Viv. (one copy); °मायतन the other MSS.

२ Thus Ms. and the Viv., सर्वत इति वेति Bu B G U (pr. m.), सर्वत एवेति U (sec. m.) Be C'.

३ Thus G; °षंचैवेति B Be Bu, षंचनिवेति U, °षंचैववेति C': °षमेववेति the Ms.

इष्टकानामावपस्थानं इति ॥ अन्तरेण ज्योतिष्मतीश्च भूतेष्टकाश्चैतदिष्टकानामावपस्थानं भवतीति ॥ स ह स्माह बौधायनः संवेशनयजुः प्रभूयजुः प्रयाणयजुरपर्यायजुः सामिधेनीराग्नीरतीताꣳश्चेष्टकागणानथोपदध्यादित्यथो[1] ह स्माह शालीकिर्नानिष्टकं मन्त्रमिष्टकावदापादयेदतीतानेवेष्टकागणानथोपदध्यादिति[2] ॥

15. 1. पौर्णमास्या उपधान इति ॥ सूत्रं बौधायनस्योत्तर एवाꣳसे पौर्णमासीमुपदध्यादिति शालीकिः ॥

15. 6 नक्षत्रेष्टकानामुपधान इति ॥ सूत्रꣳ शालीकेरथो ह स्माह बौधायनः प्रतितारकं चेष्टका उपदध्यात्तथा स रोचयेदिति ॥

15. 15 सर्वतोमुखस्योपधान० इति ॥ सूत्रꣳ शालीकेरथो ह स्माह बौधायनो व्यवेतं[3] यस्मिदं हस्ताभ्यामभिमर्शनेन[4] भवति सर्वतोमुखमुपधायाक्षतमन्त्रमभिमृशेदिति ॥

1. 16. 3. 14 वर्धनेष्विति ॥ सूत्रꣳ शालीकेरथो ह स्माह बौधायनो

१ Before चथोपदध्या० Bu Be C' G (pr. m.) U (sec. m.) ms. इतरेष or इतद्द here and l. 6; B G (sec. m.) and the Ms. om. these words.

२ ०पातवेदितिता० some.

३ व्यवेतं Be U (sec. m.) Ms. (= व्यवहितं), चवेतं B G, व्यवेतं C' चपोवेतं Bu.

४ ०मर्शनं the Ms.

यावन्ति वर्धनानि समाने ऽहनि संनिपतेयुः सर्वेषां पारे तथादेवतसूद्दोहमः कुर्वीतेति ' ॥ ८ ॥ चतुर्थः ॥

II. 47. 9. अथ प्रोक्षणीषु हिरण्यमस्याग्प्रत्यस्यत्यूर्ध्वं[1] हिभ्यो ऽपरिमितानिति सहस्रमिति प्रोक्तं ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ' ॥

II. 48. 9. शतवद्रीयस्य होम इति ॥ सूत्रमाचार्ययोः " पूर्वस्मिन्नेवाग्नीके जुहुयादिति गौतमः ' ॥

II. 49. 8. नमस्कारैरुपस्थान इति ॥ स ह स्माह बौधायनः सधमुख एवोपतिष्ठतोत्तरस्या एव दिश आवृत्यैतेनैव यथेतमेत्य पश्चात्प्राङ् तिष्ठन्नूर्ध्वामुपतिष्ठेतेत्य"थो[2] ह स्माह शालीकिर्दक्षिणैव धनुरुपतिष्ठेतैतस्यै चैव दिश आवृत्यैतेनैव यथेतमेत्य पश्चात्प्राङ् तिष्ठन्नूर्ध्वामुपतिष्ठेतेति[2] ' ॥

II. 49. 10. परिषिच्यमाने यजमानं वाचयतीति ॥ सूत्रं शालीकेर्"थो ' ह स्माह बौधायनः परिषिच्यपरिषिच्यैवास्मिन्कुम्भं निदध्यादस्मिंस्ते सुदमं ते सुग्टच्छत्वित्यभिनिर्दिशेद्दिद्यादिति ' ॥

II. 50. 3 विकर्षण इति ॥ अर्धर्चशो विकर्षेदिति बौधायन " ऋचर्चेति शालीकिः ' ॥

१ वाचयति instead of शतवति Be C'.

२ Thus (अर्थांद्) Be C and the Viv.; अर्थम् all the other MSS. and the Ms.

52. 3. स्रुचमाख्याये आघारण इति ॥ स्रुचं बौधायनस्याग्निचतुरश्रामेनां आघारयेदिति शालीकिः ॥

53. 4. वैश्वानरमारुतानां मन्त्रामन्त्र इति ॥ मन्त्रवन्तः स्युरिति बौधायनस्तूष्णीका इति शालीकिर्वैश्वानर एव मन्त्रवान्स्यात्तूष्णीका मारुता इत्यौपमन्यवः ॥

53. 6. आनीकवतस्य होम इति ॥ स्रुचं बौधायनस्याहवनीय एवानीकवतं जुहुयादिति शालीकिः ॥

54. 4. अथैनꣳ संचितमाज्यप्रोक्षेण प्रोक्षतीति ॥ सूचꣳ शालीकेरथो ह स्माह बौधायनो मन्त्रानुदिशं चैनं प्रोक्षन्मन्त्रानुलोकं चेति ॥

54. 15. इध्मस्य निधान इति ॥ स ह स्माह बौधायन उभयेनेध्मं निदध्यादाध्वरिकेण चाग्निकेन चेत्याग्निकेनैवेति शालीकिः ॥ ९ ॥

II. 55. 1. शाकलैः परिधान इति ॥ आहवनीयं परिदध्यादिति बौधायनः पुच्छमेवेति शालीकिः ॥

II. 55. 5. स्रुवाहुत्योः करण इति ॥ कुर्यादिति बौधायनो न कुर्यादिति शालीकिः ॥

II. 55. 7. पूर्णाहुत्यै[1] करण इति ॥ कुर्यादिति बौधायनो न कुर्यादिति शालीकिः ॥

II. 55. 8. अथ जुह्वानमा दिशो ध्यायेदिति[2] ॥ दिग्भ्यो ऽवमग्नि-

---

१ Thus Ms. only : पूर्णाहुत्योः the MSS. : पर्णाहुतिकरण the Viv.

२ इति om. all exc. Ms.

मभि[1]संभराणीति वा तूष्णीं वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ' ॥

II. 56. 8. प्रषेकस्यायातन[2] इति ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥

II. 56. 10. तस्मिंश्चतुर उपस्तृणान आहेति ॥ सूत्रं बौधायनस्य " नोपस्तृणीतेति शालीकिः ' ॥

II. 56. 12. प्रषेकस्यानुप्रहरण इति ॥ अनुप्रहरेदिति बौधायनो " नानुप्रहरेदिति शालीकिः ' ॥

II. 56. 13. ब्रह्मौदनस्य श्रपण इति ॥ अन्वाधेयवच्छ्रपयेदिति बौधायन " एतस्मिन्नेवेति शालीकिः ' ॥

II. 56. 14. ब्रह्मौदनस्य प्राशन इति ॥ उत्तरे ओदनं प्राश्नीयुरिति बौधायनः " पुष्कमेवाभित इति शालीकिः ' ॥

II. 57. 4. वातनामानां होम इति ॥ सूत्रं बौधायनस्य " वातमयपाञ्जलिना जुहुयादिति शालीकिः " कृष्णाजिनपुटेन जुहुयादित्यौपमन्यवः ' ॥

II. 57. 9 प्राकृतानामनुप्रहरण इति ॥ अनुप्रहरेदिति बौधायनो " नानुप्रहरेदिति शालीकिः ' ॥ १० ॥ पञ्चमः ॥

II. 57. 12. अग्निधिष्ण्यानामुपधान इति ॥ सूत्रं बौधायनस्य " सर्वा एव वानुषीरुपदध्यादिति शालीकिः ' ॥

१ The two akṣaras षम effaced in G.

२ °यतन MSS. exc. Be C'.

58. 2. नानाबीजानां निर्वपण इति ॥ निर्वपणेनानुसमेत्य[1] अभिमृशेदिति[1] बौधायनस्तदेव हविः परिनिलिखेदिति शालीकिः ॥

तेषां व्रीहिष्वेव हविष्कृतमुद्वादयत्युपोप्यन्ते यवानिति ॥ सूत्रं शालीकेरथो ह स्माह बौधायन आवपनप्रभृति यवेषु मन्त्रकर्माभ्यावर्तेत तन्त्रं तु हविष्कृत्[2] स्यादिति ॥

आप्यनिनयन इति ॥ जघनेन गार्हपत्यमाप्येभ्यो निनये-दिति बौधायनोऽग्रेणातिहायेति शालीकिरपरेण वा जघ-नेन वेत्यौपमन्यवः ॥

सपत्नपशुपुरोडाशा[3] एवैतरेषां हविषामिडा अवद्येद्-भ्यर्धादिति[4] सपशुपुरोडाशानां वेति ॥ पूर्वः कल्पो बौधा-यनस्योत्तरः शालीकेः ॥

58. 7. अत्याक्रमण इति ॥ सूत्रं बौधायनस्य सह शिष्टकृता-त्याक्रामेदिति[5] शालीकिः ॥

60. 10. अभिषेक इति ॥ सूत्रमाचार्ययोरथो ह स्माहौपमन्यवः

१ •समेत्याभिमृशेदिति U (sec. m.).

२ Thus G (sec. m.) Bu Be C′ Ms; •कृत B G (pr. m.) U; cp. XXI. 4: 75. 7, XXI. 16: 99. 16.

३ •पशु• om. B G U (pr. m.) the Viv.— •डाश B Bu G U (pr. m.) the Viv.; •डाशा Be C′ U (sec. m.).

४ Thus (and cp. II. 71. 5) B G B; •द्यर्धादिति Be C′ •द्यर्धेदिति Bu.

५ Thus U (pr. m.) C′, the Viv.; शिष्टकमना• the other MSS.

पुरस्तात्तिष्ठन्तो यावद्वाजातेनाभिषिञ्चेयाथ कृष्णाजिनं न दक्षौ[1] न पार्थानि भवन्ति कुम्भानेव सर्वसौर्यं तेष्वेनमभिषिञ्चेदिति' ॥

II. 58. 18; 59. 8. योगे विमोक इति ॥ अहरहर्युञ्ज्यादहरहर्विमुञ्चेदिति बौधायनो "ऽहरहर्युञ्ज्यादन्ते विमुञ्चेदिति शालीकिर्"आदित एव युञ्ज्यादन्ते विमुञ्चेदित्यौपमन्यवः' ॥

II. 59. 11. ऋतुकरण इति ॥ सूत्रं बौधायनस्य "यथाकल्पेवास्य ऋतुकरणानि कुर्यादिति शालीकिः' ॥

II. 59. 13. ऐकादशिनानां[2] पशूनामुपाकरण इति ॥ सूत्रं बौधायनस्यै"कयूप एवैकादशिनान्पशूनुपाकुर्यादिति शालीकिः' ॥ ११ ॥

II. 59. 17. वपानां परिहोम इति ॥ तांतां परिजुहुयादिति बौधायन "आदितश्चान्ततश्चेति शालीकिः' ॥

II. 60. 3. चमसानामवघ्रापण इति ॥ सूत्रं बौधायनस्य "माध्यंदिन एव सवने ऽथमवघ्रापयेदिति शालीकिः' ॥

पशूनामासादन इति ॥ पशुंपशुं पशुहोत्रासादयेदिति बौधायनो "मुख्यमेवेति शालीकिः' ॥

हृदयशूलानामुद्वासन इति ॥ एकैकश उद्वासयेदिति बौधायनः "सर्वान्सहेति शालीकिः' ॥

---

१ Thus Be C' U (sec. m.); दक्ष' the other MSS.

२ C' and the Viv. एका० ।

62. 1. आमिक्षायै मन्त्रामन्त्र इति ॥ मन्त्रवती च स्यादध्वर्युदानीया चेति बौधायनस्तू" ष्णीका च स्यादध्वर्युदानीया चेति शालीकि''र्मन्त्रवती च स्यान्मन्त्रहरया चैनया निरूढया यजेतेत्यौपमन्यवः' ॥

62. 6.४ देविकाहविषां करण इति ॥ कुर्यादिति बौधायनो" न कुर्यादिति शालीकिः' ॥ १० ॥ षष्ठः ॥

अथातो वाजपेयं व्याख्यास्यामः ॥

चिन्वीत वाजपेयेऽग्निमिति बौधायनो" न चिन्वीतेति शालीकिः' ॥

63. 3.१० औदुम्बरं रथचक्रं सप्तदशारमिति ॥ सूत्रं बौधायनस्य" दार्व्वदचमेवैनत्कुर्यादिति[1] शालीकिः' ॥

63. 12. खादिरौ विदर्वौ[2] बभ्रैर्धूतासुपकल्पयत[3] इति ॥ सूत्रं बौधायनस्य" बस्ताजिनं चैवात्रोपकल्पयीत शतमानं च हिरण्यमिति शालीकिः' ॥

63. 13.१४ स योऽस्य जघन्याहःसु पुरस्तादाषाढ्यै पौर्णमास्यै दीक्षेत इति ॥ सूत्रं बौधायनस्य" शरदि वाजपेयेन यजेतेति शालीकिः' ॥

१ ०दच० G (sec. m.).— ०मेवैनत् G (pr. m.) U, ०मेवैनत् the other MSS.

२ Thus G and the Viv.; विकवि Bu, विदूर्वौ B, विदूर्व्वौ U, विकर्वा Be, विकर्वौ C′ (pr. m.), विकर्वौ (sec. m.).

३ Thus G, बभ्रैर्धू० Be, बभ्रैरधू० C′, बंभैर्धू० Bu, बाभ्रैरधूं० U, बभ्रधूं० B, बभ्रैरधूं० the Viv. (one copy), बभ्रैर० (another).

II. 64. 4; 65. 10. आविष्याणाꣳ होम इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

II. 64. 12. वाजपेयिकायै सुरायै संधान इति ॥ सूत्रमाचार्ययोर्'' यो ह स्माहौपमन्यवो यथैव सुरा स्यात्तत आहारयेदिति ' ॥

II. 65. 4. यो ऽरत्निमात्रेऽरत्निमात्रे वा विधृणाति धनुर्वेष्टीर्वा प्रवेष्टयतीति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

II. 65. 5. गौधूमं[1] चषालमिति ॥ सूत्रं बौधायनस्य '' गोधूमपिष्टानामपि कुर्यादिति शालीकिः ' ॥

II. 66. 2. दुन्दुभीनामाघ्नन इति ॥ सूत्रं द्वैधमेवैतद्भवति ॥

II. 66. 14. क्रतुकरण इति ॥ सूत्रꣳ शालीकेर्'' यो ह स्माह बौधायनो ऽतिरात्रमप्यप्य क्रतुमुपेयात्समानपक्षे येनꣳ संतिष्ठापयिषेदिति[2] ॥ १३ ॥

II. 66. 16. षडैन्द्रानतिग्राह्यान्गृह्णातीति ॥ सूत्रं बौधायनस्य '' सर्व एवैते[3] सोपयामा[4] गृहीतव्या[4] भवन्तीति शालीकिः ' ॥

II. 67. 10. सुरापात्राणां ग्रहण इति ॥ सूत्रं बौधायनस्य '' यजुष्टान्यरिमृज्य[5] सादयेदिति शालीकिः ' ॥

---

१ Thus G and the Viv. (one copy), गौधवं Bu; गोधूमं the other MSS.

२ Thus Be C′ U (sec. m.); संतिपतिषेदिति B G; संतिष्ठपयिषेदिति Bu.

३ Thus G C′; हवैते U, हवैतः B Be; Bu defective.

४ सोपयामावगृहीतो• U.

५ Thus Be C′; यजुष्टा• Bu U, यजुष्ट्या• B G.

7. 12. द्विग्रेषि[1] वा त्रिग्रेषि[1] वोद्गीव आयातयतीति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

68. 1. षड्रशना आदाय यूपमभिप्रेयादिति बौधायनः ॥ पञ्च रशना आदाय यूपमभिप्रेयादिति शालीकिस्तिस्रो रशना आदाय यूपमभिप्रेयादित्यौपमन्यव ॥ एकामेव रशनामादाय यूपमभिप्रेयादित्यौपमन्यवीपुत्रो ॥ ऽग्नीषोमीयरशनायामेव नियुञ्ज्यादित्याश्मौगविः । ॥

68. 2. वाजपेयिकानां पशूनामुपाकरण इति ॥ ऐकादशिनानुपाकृत्य[2] वाजपेयिकानुपाकुर्यादिति बौधायनो ॥ वाजपेयिकानेव नैकादशिनानिति शालीकिः । ॥

प्राजापत्यानामुपाकरण इति ॥ एकैकश उपाकुर्यादिति बौधायनः ॥ सर्वान्सहेति शालीकिः । ॥

70. 3. वपानां परिहोम इति ॥ तांतां परिजुहुयादिति बौधायन ॥ आदितश्चान्ततश्चेति शालीकिः । ॥

हृदयशूलानामुदासन इति ॥ एकैकश उदासयेदिति बौधायनः ॥ सर्वान्सहेति शालीकिः । ॥

72. 15; 15. रथानामभियोजन इति ॥ सूत्रं शालीकेरथो ह स्माह बौधायनो ह एवैष समवक्षेपणो मन्त्रवत् प्रथममभियोजनानां कुर्यादथ तूष्णीमथान्यमवक्षिपेदिति । ॥

. 76. 5. काष्ठागमन इति ॥ स ह स्माह बौधायनः प्रदक्षिण-

---

१ द्विग्रे° and त्रिग्रे° G (sec. m.).

२ एका° the Viv.

माहृत्यैतां[1] काष्ठां गच्छेयुरथामुतो ऽपयशैरावर्तेरन्नित्य॥यो, ह आह शालीकिरपयशैराहृत्यैतां[1] काष्ठां गच्छेयुरथामुतः प्रदक्षिणमावर्तेरन्निति ' ॥ १४ ॥

II. 79. 14. अथ यजमानं तार्प्यं परिधापयतीति ॥ सूत्रं बौधायन-स्योभे एवैते यजमानं परिधापयेदिति शालीकिः ' ॥

II. 80. 2. श्रित्या आयातन[2] इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

II. 80. 5. तां दशभिः कल्पै[3] रोहतीति[3] ॥ सूत्रं बौधायनस्य॥तैरेव मन्त्रैः प्रत्यवरोहेदिति शालीकिः ' ॥

II. 81. 2. अथास्मै प्रत्यवरोहणत[4] आसन्दीं निदधातीति[5] ॥ सूत्रं बौधायनस्य॥ बस्ताजिनं चैवास्याच[6] प्रत्यवरोहेच्छतमानं[7] च हिरण्यमिति शालीकिः ' ॥

---

१ Thus both times C′ only; °हत्येतः both times G and B the second time; हंत्येत B the first time; all the MSS. (exc. C′) °त्य°, not त्यै°।

२ Thus B G, चायतन the Viv, चातन Bu, चायान Be C′.

३ Thus G U C′ (sec. m.) and the Viv.; °ल्पोरोह° Bu, °ल्पैरारोह° B Be.

४ Thus only the Viv., प्रत्यवरोहन the MSS.

५ Thus the Viv., निनिनोतीति Be, निनोतीति C′, प्रत्यवदधातीति B Bu G U.

६ Thus B U G; चैवाचच Bu; च only Be C; चच seems superfluous.

७ Before शतमानं B Bu U G ins. इति।

.81.5. अथैनमेतयासन्द्या सह आवहन्त्या वा प्रजतीति[1] ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

.81.8. अतिग्राह्याणां भक्षण इति ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥

.83.10. प्राजापत्यानां भक्षण इति ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥

.84.2. गुदहृतीयेष्विति ॥ द्वे अथ गुदहृतीये उपयष्टोपयजेदिति बौधायनो ऽपच्छेदमिति शालीकिः समस्तान्येवैतान्यनुप्रहृत्य सर्वैर्मन्त्रैरनुमन्त्रयेतेत्यौपमन्यवः ॥ १५ ॥ सप्तमः ॥

II.85.1. अथातो राजसूयं व्याख्यास्यामः ॥

चिन्वीत राजसूये ऽग्निमिति बौधायनो न चिन्वीतेति शालीकिः ॥

.85.9. पुनरभ्युप्य पिष्टानि कृत्वाहारयेदिति बौधायनस्तथा-भ्युप्तान्येवैतानि[2] स्युरिति शालीकिः ॥

85.10. नैर्ऋतस्य मन्त्रामन्त्र इति ॥ मन्त्रवान्स्यादिति बौधायनस्तूष्णीक इति शालीकिः ॥

II.85.12. एकोल्मुकस्य हरण इति ॥ अन्वाहार्यपचनाद्धरेदिति बौधायनो धामाग्नेरिति शालीकिः ॥

II.86.1. नैर्ऋतस्य होम इति ॥ स्रुवं बौधायनस्य विशष्विकाकाष्ठाभ्यासेनं परिमृज्य जुहुयादिति शालीकिः ॥

---

1 प्रजतीति G B, हविनीति Bu; U Be C' corrupt.

2 Thus G; °भ्युप्ताने° U, °भुयन्ये° B, °भ्यप्रान्ये° Be C'.

II. 86. 3. दक्षिणानां दान इति ॥ अहरहर्दद्यादिति बौधायन॥ आदितश्चान्ततश्चेति शालीकिः ॥

II. 86. 3. उदपात्रस्योपनिनयन इति ॥ प्रदक्षिणमुपनिनयेदिति बौधायनो॥ यथोपपादमिति शालीकिः ॥

II. 86. 5. स्वाहा नमो य इदं चकारेति ॥ सूत्रं बौधायनस्त्वान्त-मध्यच स्वाहाकारं परिणयेदिति शालीकिः ॥

II. 87. 1. संततीनामनुप्रयोग इति ॥ स ह स्माह बौधायनो यदह-रिष्ट्या वा पशुना वा यजेतापि तदहः संतती[1] प्रयुञ्जीतेत्यथो ह स्माह शालीकिरहरहराश्रावणार्थे स्मृते दृष्टे भवतो यदहरिष्ट्या वा पशुना वा यजेत न तदहः संतती प्रयुञ्जीतेति ॥

ib. चातुर्मास्यानामनुप्रयोग इति ॥ स ह स्माह बौधायनो यदहश्चातुर्मास्यानि प्रयुञ्जीतापि तदहः संतती प्रयुञ्जीतेत्यथो ह स्माह शालीकिरहरहराश्रावणार्थे स्मृते दृष्टे भवतो यदहश्चातुर्मास्यानि प्रयुञ्जीत न तदहः संतती प्रयुञ्जीतेति ॥

I. 88. 17. व्याख्यातं पशोभीषस्य करणम् ॥ १६ ॥

II. 89. 3. अथोपवेषेणाङ्गारान्समूहतीति ॥ सूत्रं शालीकेरथो ह स्माह बौधायनस्तूष्णीमङ्गारान्समूह्यापेनाञ्जुवाङ्गतिभिरभिजु-हुयादग्नये[2] रक्षोघ्ने स्वाहेति पञ्चभिरेव प्रष्टिवाहिनं रथं दद्यादिति ॥

[1] Here and infra some of the MSS. read संततीः (संतती).
[2] जुहुयात्° Be U' C', जुहुयाद्° Bu.

89. 11. अपामार्गसक्तूनाꣳ होम इति ॥ स्रुचꣳ शालीकेरेवो ह स्माह बौधायनः समस्तेनैवास्मै मन्त्रेणापामार्गसक्तुशुच्या-न्तूष्णीꣳ स्रुवमनुप्रहरेत्तूष्णीमुपोषिष्ठेदिति[1] ॥

89. 15. देविकाहविषां करण इति ॥ स्रुचं बौधायनस्य सोमꣳसोममनुवर्तेरन्निति शालीकिर्नै देविकाहविर्भिर्यजे-दित्याश्मीगविः ॥

91. 3. अग्निभिः प्रत्यवसान इति ॥ अजस्रैः प्रत्यवस्येदिति बौधा-यनो ऽरण्योः समारोह्येति शालीकिः ॥

पयसः समासेचन इति ॥ दृती वा विनाडे[2] वा समा-सिञ्चेदिति बौधायनो नवायां कुम्भ्यामिति शालीकिः ॥

92. 14. स्वयंकृतेष्विति ॥ स्रुचꣳ शालीकेरेवो ह स्माह बौधा-यनो गोन्यासप्रमृदितानां[3] कुशानां बर्हिः संनद्धोत्स्वयंपति-तानां काष्ठानामिध्मं यदेव वेद्यै रूपꣳ सा वेदिकृतिं वा विनाडं[4] वा रथ आधाय परिवहेयुस्तत्र नवनीतमुत्पौदे-त्तद्राज्यꣳ स्यादिति ॥

II. 93. 2. मैत्रावार्हस्पत्यस्य निर्वपण इति ॥ समानपात्रमुष्टौ श्याता-

---

१ °मुपोषिष्ठेदिति G U C′. °मुपतिष्ठेदिति B Bu Be; probably II. 89. 12 उपोषितिष्ठति is the correct reading.

२ विनाडे G U C′. विनाळे the other MSS. and the Viv.

३ Thus Be C′ and comp. the Viv.: यथा गोपदविलक्षणेन मार्दितानां कुशानां; गोन्यासप्रम° G B Bu, वेन्यासप्रम° U

४ विनाडं or विनाळं MSS.

मिति बौधायनो ॥ नानाचतुर्मुष्टौ स्यातामिति शालीकिः ।

॥ १७ ॥ अष्टमः ॥

II. 94. 2. रोहिते चर्मणीति ॥ सूत्रं बौधायनस्याप्यरोहितꣳ स्यादिति शालीकिः ।॥

सोमक्रयणेषूपेते[1] नित्याः शते स्युरिति बौधायन ॥ एत एव शततमाः स्युरिति शालीकिः ।॥

II. 94. 8. वसतीवरीणां ग्रहण इति ॥ सूत्रं बौधायनस्य ॥ सारस्वतीरप्यत्र वसतीवरीर्गृह्णीयादिति शालीकिः ।॥

II. 94. 18. आग्नेयस्यैन्द्राग्न उपालम्भ्यो भवतीति ॥ सूत्रं बौधायनस्य ॥ ऐन्द्राग्न एव सवनीयः स्यादिति शालीकिः ।॥

पात्राणां करण इति ॥ यथानिर्भेदं पात्राणि कारयेदिति बौधायनः ॥ प्राकृतान्येवैतानि स्युरिति शालीकिः ।॥

II. 98. 1. सारस्वतीनामभिहोम इति ॥ सूत्रꣳ शालीकेरन्यो ह स्माह बौधायनो याभ्यामेतदृग्भ्यां वसन्तीरभिजुहुयात्ताभ्यां पदेपदे जुहुयादथ तूष्णीꣳ सारस्वतीरभिजुहुयादिति ।॥

II. 98. 7. अभिषेचनीयानां ग्रहाणां ग्रहण इति ॥ सूत्रमाचार्ययोरन्यो ह स्माहौपमन्यवः पुरस्तादुदञ्चो ऽभिषेचनीयान्ग्रहान्गृह्णीयादिति ।॥

II. 99. 16; 102. 9. धनुषः प्रदान इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

---

१ Thus B G U (pr. m.). °षूपचिते Be C′ U (sec. m.). °क्रयेण Bu

100. 9 मारुतस्यैकविंशतिकपालस्य कपालोपधान इति ॥ ऐष्टिकैरुपधाय गणैरुपदध्यादिति बौधायनो गणैरेवेति शालीकिः ॥

100. 9 आमिक्षायै मन्त्रामन्त्र इति ॥ मन्त्रवती स्यादिति बौधायनस्त्वमन्त्रकेति शालीकिः ॥ १८ ॥

101. 2. क्लीबस्य स्थान इति ॥ अन्तर्वेदि तिष्ठेदिति बौधायनो बहिर्वेदीति शालीकिः ॥

106. 7. मणीनां करण इति ॥ औदुम्बर औदुम्बरेण कोशेन प्रच्छन्नः स्यादिति बौधायन औदुम्बर एवेति शालीकिः ॥

. 107. 4. तस्मिन्सह संग्रहीत्रा रथवाहने रथमादधातीति ॥ सूत्रं बौधायनस्याधाहरणामेवैकः[1] संग्रहीता स्यादिति शालीकिः ॥

108. 14. स्फ्यस्य प्रदान इति ॥ सूत्रं शालीकेरथो ह स्माह बौधायनो यजमानस्यैवैकस्य मन्त्रेण संप्रयच्छेत्तूष्णीमितरे संप्रयच्छेरन्निति[2] ॥

. 109. 1. अक्षाणां करण इति ॥ सौवर्णाः स्युरिति बौधायनो राजता इति शालीकिर्नागदन्ता[3] इत्यौपमन्यवो वैभीतका इत्यौपमन्यवीपुत्रः ॥

ib. अथास्मै पञ्चाक्षानपच्छिद्य प्रयच्छतीति ॥ सूत्रं शाली-

१ Thus G: •स्याधातृणामे• C', •स्याधाहरणामे• U, •स्य यथाहरणामे• B Be; in Bu this dvandva is missing.

२ •च्छेरंन्निति G U C'.

३ Thus G B Bu U: •दंता Be C'.

वेरंभो ह स्माह बौधायनो येनाख्यानुपपन्नꣳ स्यात्तं तथाग्नि-
ष्वेहिमो ऽभ्ययꣳ राजाभूदिति ।॥

II. 111. 8. अथ विषुवति दर्भस्तम्बे जुहोतीति ॥ सूत्रं बौधा-
यनस्य ॥ यथैव दर्भस्तम्बः स्यात्तद्गच्छेदिति[1] शालीकिः ।
॥ १९ ॥ नवमः ॥

II. 111. 14. अग्नीनांꣳ हरण इति ॥ अजस्रान्हरेदिति बौधायनो ।
ऽरण्योः समारोप्येति शालीकिः । ॥

ib. वेद्यै करण इति ॥ सूत्रं बौधायनस्य ॥ पूर्वांपूर्वां वेदि-
र्भवतीति शालीकिः । ॥

II. 112. 10. अथैनं तीर्थादानीय पवयित्वा पुष्करस्रजिनमुदानी- १०
येति ॥ स ह स्माह बौधायन उभयानि पुष्करिकाणि
कारयेत्सौवर्णानि च नादेयानि चेति ॥ नादेयान्येवेति
शालीकिः । ॥

II. 112. 13. निदधत्यस्मा एतद्धविरुच्छिष्टं व्रतभाजनमिति ॥ सूत्रं
बौधायनस्य ॥ नात्र हविरुच्छिष्टं व्रतभाजनं निदध्यादिति ११
शालीकिः । ॥

II. 112. 17. सोमक्रयणेषूपेते[2] नित्याः स्युरिति बौधायन ॥ एत एव
स्युरिति शालीकिः । ॥

१ नव instead of नत् Be C'.

२ Thus B G I' (pr. m.); °षुपंते Bu; °षूपस्थिते Be C' I' (sec. m.).

औपसदाꣳ[1] हविषां मन्त्रामन्त्र इति ॥ मन्त्रवन्ति[2] स्युरिति बौधायनस्तूष्णीकानीति[3] शालीकिः' ॥

3. 14. आग्नेयस्य प्राजापत्यस्यापर उपालम्भ्यो भवतीति ॥ सूर्यं बौधायनस्य" प्राजापत्य एव यवनीयः स्यादिति शालीकिः' ॥

4. 11. भार्गवो होता भवतीति ॥ आदित एव भार्गवꣳ होतारं वृणीतेति बौधायनो" दशपेय एव भार्गवो होता स्यादिति शालीकिः' ॥

शतं ब्राह्मणाः पिबन्तीति[4] ॥ यजमान[5] एकशततमः स्यादिति बौधायनो" यजमान एव शततमः स्यादिति शालीकिः' ॥

114. 7. दक्षिणानां दान इति ॥ एता एव ब्राह्मणाभिविहिता[6] दक्षिणा दद्यादिति बौधायन" एतन्मुखꣳ सहस्रमिति शालीकिः' ॥ २० ॥

I. 115. 1. तेषामुत्थानेष्विति ॥ गच्छेयुरावभृथादिति बौधायनो" ऽप्युषोमान्ता इति शालीकिर्ध्रुवान्ता इत्यौपमन्यवः' ॥

I. 115. 8. हविषोहविष इष्ट्वा बार्हस्पत्यमभिघारयतीति ॥ बार्ह-

१ Thus G B and the Viv.; उपसदि C, औपसदानां C′. औपसदों Bu; Be defective.

२ •वंत MSS.

३ Thus G and C (pr. m.): तूष्णीका इति B G (sec. m.). तूष्णीकेति C′. तूष्णीकानिति Bu.

४ cp. T Br. I. 8. 2. 2.

५ Before यजमान G B ins. वो, C वे ।

६ •विहिता Be C′.

स्पत्यश्चापीष्टा[1] बार्हस्पत्यमभिघारयेदिति बौधायन ॥ इत-रेषामेव हविषां न बार्हस्पत्यस्येति शालीकिः । ॥

II. 115. 13. उच्चैरादित्याया आश्रावयत्युपांश्वा[2] मारुत्या इति ॥ आदित्याश्रावणप्रभृत्युपांश्वथेतरदुच्चैरिति[3] बौधायन ॥ आ मारुत्याश्रावणप्रभृत्युपांश्वथेतरदुच्चैरिति शालीकिः ॥ सर्वैवो-च्चैरादित्या सर्वोपांश्वा मारुतीत्यौपमन्यवः । ॥

II. 115. 15. घात्यदूतेष्विति ॥ सूत्रं बौधायनस्य ॥ मं[4] ते[4] ऽग्नौ[4] प्राद्वेषो-दित्येव ब्रूयादिति शालीकिः । ॥

II. 117. 14. विराच इति ॥ सूत्रं बौधायनस्य ॥ यजनीये[5] ऽहन्पूर्व-मर्धंभवत्युत्तरस्मिन्नुत्तरमिति शालीकिः । ॥

II. 118. 5. देविकाहविषां करण इति ॥ कुर्यादिति बौधा-यनो ॥ न कुर्यादिति शालीकिर्न कुर्यादिति शालीकिः[6] ।
॥ २१ ॥ दशमः ॥

॥ इति द्वाविंशः प्रश्नः ॥

१ Thus G and the Viv.: •श्चापीष्टा B, श्चपिष्टा U. C′ Be corrupt. Bu defective.

२ Thus G, all the other MSS. more or less corrupt

३ Here and infra all the MSS. इतर instead of इतरद् ।

४ Emended; •ग्नमांवेषो Be C′ U (sec. m.), •ग्नमंवेषो Bu, •ग्नमंवेषे G, •ग्नमंवषै B; cp. XXIII. 2 and T Br. I. 8. 3. 4: कृताग्नयविषोति ।

५ Thus all.

६ In the MSS. no repetition of the final words.

9. 1. °अथात इष्टिकल्पं व्याख्यास्यामः ॥

स ह स्माह बौधायनः पञ्चदशसामिधेनीकाः स्युर्मन्त्रावाज्यभागावुच्चैर्देवता इत्यथो ह स्माह शालीकिः सप्तदशसामिधेनीकाः स्युरर्धमन्त्रावाज्यभागावुपांशुदेवता इति । ॥

याजमानस्य करण इति ॥ सर्वविहृमिष्टिपथे[1] याजमानं कुर्यादिति बौधायनः । कुर्याद्यथावकाशं याजमानमिति शालीकिः । ॥

21. 3. अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेद्यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वातिपादयेदिति ॥

स ह स्माह बौधायनः पाथिकृतं निरुप्य वैश्वानरं द्वादशकपालमनुनिर्वपेद्यातिपन्नां प्रतियजेदित्यथो ह स्माह शालीकिः पाथिकृतं निरुप्य वैश्वानरं द्वादशकपालꣳ समानतन्त्रमनुनिर्वपेन्न चातिपन्नां प्रतियजेदित्यन्यतरेणैव यद्यातिपन्नां प्रतियजेदित्यौपमन्यवो ऽथो ह स्माहाश्मौगविर्वा एतस्य यज्ञश्छिद्यते यस्य तन्त्रे प्रतते ऽन्यत्तन्त्रं[2] प्रतायते । य एवैषो[3] ऽच्युत[3] आग्नेयो ऽष्टाकपालस्तमेव पौर्णमास्यां वामावास्यायां वा पाथिकृतं कुर्यान्न चातिपन्नां प्रतियजेदिति । ॥

21. 7. अग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेद्य आहि-

१ °विवजिहिपथे G, °विवजिहिपथी B. °विविजिहिपथी U. विविमिहपथी Bu, °विवजिहपथी Be C′.

२ न्तन्त्रं MSS.

३ Thus C′. एवैषोच्युत U. एवैषोच्यत B G Be, एवैषाच्युत Bu.

ताभिः समानत्यमिव चरेदिति ॥ आधानप्रभृत्येवैतदुक्तं भवतीति बौधायनो ॥ ऽन्वाहितेषु चैवोपसमाहितेषु चाग्निष्विति शालीकिः । ॥

II. 121. 9. अग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपेद्यꣳ रक्षाꣳसि सचेरन्निति ॥ हुत्वाग्निहोत्रमिष्टिꣳ सꣳस्थापयेदिति बौधायनः ॥ सꣳस्थितायामिष्ट्यामग्निहोत्रं जुहुयादिति शालीकिः । ॥

II. 121. 17. अग्नये रुद्रवते पुरोडाशमष्टाकपालं निर्वपेदभिचरन्निति ॥ स ह स्माह बौधायनो लोहितोष्णीषा लोहितवाससश्चर्त्विजः प्रचरेयुरिति ॥ याज्यापुरोऽनुवाक्याभ्यामेवैतदुक्तं भवतीति शालीकिः । ॥

II. 121. 18. अग्नये सुरभिमते पुरोडाशमष्टाकपालं निर्वपेद्यस्य गावो वा पुरुषा वा प्रमीयेरन्यो वा बिभीयादिति ॥ स ह स्माह बौधायनः प्रोक्षणीषु च गन्धानावपेयुर्गन्धवन्तश्चर्त्विजः प्रचरेयुरिति ॥ याज्यापुरोऽनुवाक्याभ्यामेवैतदुक्तं भवतीति शालीकिः । ॥

II. 122. 7. अग्नये कामाय पुरोडाशमष्टाकपालं निर्वपेद्यं कामो नोपनमेदिति ॥ स ह स्माह बौधायनो या नवाम्नाता स्यात्तां चेन्निर्वपतः कामो न समृध्येताथैवं[1] कुर्यादित्यथैवं सार्वकामिकी स्यादिति शालीकिः ॥ कामेकाम एषा[2] स्यादित्यौपमन्यवः । ॥

II. 124. 1. अग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्नि-

१ ॰थैवं G U Be: थैवं B C. थैव Bu.

२ एषा G, एषैषा U, all the other MSS. एष ।

हुतो ऽग्नौ ऽग्निहोत्रं जुहुयादिति ॥ सूयच्च ग्रामीणं यो ह आह बौधायनो मन्थनमभिमन्थनमुपसमिन्धनमित्येतानन्ना-न्विगदेदिति । ॥

124. 17 वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जात इति ॥ स ह आह बौधायन उत्थितायां निर्दशायां वैश्वानरं द्वादश-कपालं निर्वपेदन्वारभ्य च कुमारं प्रवेशयेदिति ॥ जात-मेव विदित्वेति शालीकिर्न च अन्वारभ्य कुमारं प्रवेशये-दित्यन्तरे पर्वणीत्यौपमन्यवः[१] । ॥ १ ॥

125. 2 विपर्यस्तद्विवीति ॥ मारुतः[२] प्रथमं मन्थकर्म[३] लभेतेति १० बौधायनो ॥ ऽवदानत इति शालीकिः ॥ प्रदानत इत्यौप-मन्यवस्तांतुल्याभ्यादित्यौपमन्यवीपुत्रः । ॥

125. 9. वैश्वानरं द्वादशकपालं निर्वपेदायतनं गत्वेति ॥ यथैव यतिष्यमाणः स्यात्तदायतनं । तद्गत्वा वैश्वानरं द्वादशकपालं निर्वपेदिति बौधायनः ॥ स्वस्मान्नेत्येवाग्निष्विति शालीकिः । ॥

126. 3. १५ यथा रक्षोघ्नमां गामालभेदिति ॥ सूयं बौधायनश्चे मां ते ऽसौ पाशेषौ दित्येव[४] ब्रूयादिति शालीकिः । ॥

१ The words after प्रवेशयेदिति only in C and U (sec. m.): Be has of them only बौपमन्यवो. the other MSS. omit the opinion of Aupamanyava.

२ मारुतं Bu.

३ सर्वं Be C (pr. m.)

४ Thus C U (sec. m.). प्रवौपौ° the other MSS.: cp. XXII. 21 and XIII. 10: 126. 5.

II. 127. 10. यद्यजामनपीये संनह्येदिति ॥ सूत्रं बौधायनस्य ॥ यद्य-जामामप्यत्र बर्हिः संनद्धं भवतीति शालीकिः ॥

II. 128. 7. आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन्निति ॥ सूत्रं बौधायनस्य ॥ प्रत्यभिचरन्तमेव विद्विषेति शालीकिः ॥

ib. सारस्वतमाज्यमिति ॥ मन्त्रनिवप्तमेतद्धृतं[१] स्यादिति बौधायनस्य ॥ व्यौकमिति शालीकिः ॥ कालेकाल एवैनद्ध्रुवा-ज्याद्गृह्णीयादित्यौपमन्यवः[२] ॥

II. 128. 17. अध्वरकल्पायामिति ॥ स ह स्माह बौधायन इडान्तं प्रथमं तन्त्रं कुर्यादेवं द्वितीयं तृतीयेन सहावभृथं वर्तयेदि-त्यथो ह स्माह शालीकिरा प्रणीताभ्यः प्रथमस्य[३] तन्त्रस्य परि-श्रापयेदेवं[४] द्वितीयमेवं[५] तृतीयं[५] ॥ तृतीयेन सहावभृथं वर्तये-दिति ॥ अपूर्वपात्रविप्रक्रमा[६] इत्यौपमन्यवः[६] ॥

II. 129. 7. यो ब्रह्मवर्चसकामः स्यात्तस्मा एतं सोमारौद्रं चरुं

१ मंचनिवप्त° B G; मंचेनिवप्त° U, मंचंनिकपत° Bu; मंचभिनवप्त° Be, मंचनिवप्त° C'.

२ ध्रुवाज्यात्गृह्ण° G U (sec. m.); ध्रुवाज्याज्यात्गृह्ण° B U (pr. m.); ध्रुवा-ज्यांगृह्ण° Be C'; ध्रवाद्गृह्ण° Bu.

३ Thus Be C' U; प्रणीताप्र° B G (pr. m.), प्रणीताप्र प्र° G (sec. m); Bu defective.

४ Thus G B; कुर्यादेवं U Be C'; Bu defective

५ एवं तृतीयं om. B G.

६ °क्रमादित्यौ° C' U (sec. m.).

तिष्यापूर्णमासे निर्वपेदिति ॥ उपवसथीये ऽहनि निर्वपेदिति बौधायनो यजनीये ऽहनीति शालीकिः ॥

9. 14. आज्यं प्रोक्षणमाज्येन मार्जयन्त इति ॥ उदकुम्भ आज्यस्रुवं प्रत्यस्येदिति बौधायनः प्रोक्षणं चैव मार्जनं चाज्येन[1] कुर्यादथेतरदद्भिः कुर्यादिति शालीकिर्यत्किं चाद्भिः कार्यꣳ स्यात्सर्वं तदाज्येन कुर्यादित्यौपमन्यवः ॥

16. यदि बिभीयाद्दुश्चर्मा भविष्यामीति सोमापौष्णं चरुं निर्वपेदिति ॥ विज्ञातेषु रूपेषु निर्वपेदिति बौधायनः पुरस्तादेव यक्ष्यमाण इति शालीकिः ॥

30. 7. अर्धेष्विति ॥ सꣳश्रितायामिष्टायामर्धानभ्यादध्यादिति बौधायनो ऽत्रैव परिश्रयीरन्निति शालीकिः ॥ २ ॥ प्रथमः ॥

30. 15. विपर्यस्तहविषीति ॥ मारुतः प्रथमं मन्त्रकर्म लभेतेति बौधायनो ऽवदानत इति शालीकिः प्रदानत इत्यौपमन्यवस्तांतुष्प्राप्यादित्यौपमन्यवीपुत्रः ॥

30. 17. मारुतीभ्याꣳ होता यजतीति ॥ स ह स्माह बौधायन आदित एव होता मरुत आवाहयेदनुवाचयतो ऽध्वर्युरिति याज्यापुरोऽनुवाक्याभ्यामेवैतदुक्तं भवतीति शालीकिः ॥

31. 19. आदित्येभ्यो भुवद्वद्भ्यश्चरुं निर्वपेद्भूतिकाम इति ॥ स्रुचꣳ शालीकेरथो ह स्माह बौधायनः सर्वाः सपदाः सर्वाः सप्राविधाः सर्वाः समयूखेषा इति ॥

132. 2. पदपाꣳसूनाꣳ हरण इति ॥ स्रुचꣳ शालीकेरथो ह

१ चाज्येन B Be.

आह बौधायनः समस्तेनैवास्य[1] मन्त्रेण पदपांसूनस्योत्तर-वर्त्म्यं[2] आवपेदथ तूष्णीमुरस्यनुमिनयेदिति । ॥

II. 133. 16 अतष्ठ सुवर्णानि कृष्णानि भवन्तीति ॥ सूत्रं बौधा-यनस्यौपश्रतान्येवैतानि[3] स्युरिति शालीकिः परिहारवे-वैषामिति[4] । ॥

II. 134. 3 चत्वारिचत्वारि कृष्णान्यवद्यति चतुरवत्तस्याप्त्या इति ॥ स ह स्माह बौधायनो यान्यवत्तानि स्युर्जुहुयादेव तान्यथ यानि अवार्याणि स्युरप्यवगृहीतान्येव[5] तानि स्युरथेतराणि समावपन्तो विभजेरन्नित्यथो ह स्माह शालीकिर्यान्यवत्तानि स्युर्जुहुयादेव तान्यथ यानि अवार्याणि स्युरप्यवगृहीतान्येव[5] तानि स्युरथेतराणि प्राशित्रहरणे कृत्य ब्रह्मणे परिहारये-दिति । ॥

II. 137. 21. यः पापयक्ष्मगृहीतः स्यात्तस्मा एतमादित्यं चरुममा-वास्यायां निर्वपेदिति ॥ उपवसथीयेऽहन्निर्वपेदिति[6] बौधा-यनो यजनीयेऽहन्निति[6] शालीकिः । ॥

१ °स्य Be C' U (sec. m.). °स्यै Bu U (pr. m.). °स्मिन् G B.

२ Thus (and cp. vol. II. 104. 2) G, °वर्त्मे the other MSS

३ बौधायनस्यौपश्रता° G U, °नस्य औपश° B, °धायनस्यौपश्रुतान्य Be, °धायनस्यौपश्रुतान्येवैतानि C', but cp. the Viv. उपश्रुतेन तानि भवन्तीति । प्रत्यक्षेण कृतानि नाधिकानि वैति ।

४ Thus the Viv. (अक्षं to be understood), प्रतिहार° the MSS.

५ Thus G ; स्युरप्यव° the other MSS.

६ Instead of ऽहन् (thus B G Bu) the other MSS. अनि ।

0. 9. वायव्ये परिधिष्विति ॥ ऐष्टिकैः परिधाय पौरोडाशिकैः परिदध्यादिति बौधायन ऐष्टिकैरेवेति शालीकिः ॥

11. आहुतीनाꣳ होम इति ॥ सूपꣳ शालीकेरन्यो ह स्माह बौधायन औदुम्बरैः पात्रैरेता आहुतीर्जुहुयाद्धुत्वा चैतानि पात्राण्यग्नावेवानुप्रहरेदिति ॥

4. 1. आज्यस्यावेक्षण इति ॥ सूत्रं बौधायनस्य यजमानमेवाव-गौतममवदित्येतैरेवाज्यमवेक्षितमुत्पुनुयादिति[1] शालीकिः ॥ ३ ॥

12. यावतो ऽश्वान्प्रतिगृह्णीयात्तावतो वारुणाꣳश्चतुष्कपाला-न्निर्वपेदेकातिरिक्तानिति ॥ स ह स्माह बौधायनो वैश्वानरे-णैकं[2] प्रतिगृह्णीयादेवं[3] द्वौ[4] गणं[5] तु प्रतिगृह्य कुर्वीत बहुषु[6] वारुणानेकातिरिक्तानित्यन्यो ह स्माह शालीकि-र्वैश्वानरेणैकं प्रतिगृह्णीयान्न तु द्वौ[7] गणं[7] तु प्रतिगृह्य कुर्वीत न[8] तु द्वयोर्बहुषु वा वारुणानेकातिरिक्तानिति ॥

१ पुनुयाद् again all

२ About the correct reading and the meaning of this dvaidha I am uncertain; °चैकं B C Bu, °णैकं Be G, °चैक C'.

३ सर्वं C' U. एव the other MSS.

४ द्वौ मर्च Be B G. द्वौगुणं C', द्वामर्च B. द्वौगुणं U (sec. m.)

५ MSS. exc. Be C' ins. तु. U (sec. m.) गणं तु।

६ वा ins. Bu.

७ U again द्वौगुणं; मर्च the other MSS., गुणं C'.

८ न given by Be C' U (sec. m.), not by B Bu G U (pr. m.).

II. 143. 2. आमिक्षायै मन्त्रामन्त्र इति ॥ मन्त्रवती स्यादिति बौधायनस्″तूष्णीकेति शालीकिः ′॥

II. 143. 15. पुनः समूहति समूह्यावद्यतीति ॥ सूत्रं बौधायन″स्तैरेव मन्त्रैः प्रतिसमूह्यावद्येदिति शालीकिः ′॥

II. 144. 7. त्रयस्त्रिंशत्कपालं पुरोडाशं निर्वपतीति ॥ सूत्रं बौधायनस्य ″ संदिग्धपुरोडाश एवैष स्यादिति शालीकिः ′॥

II. 146. 3. (147. 17). वर्षाहूस्तम्बस्याभिहोम इति ॥ सूत्रं बौधायनस्य ″ यथैव वर्षाहूस्तम्बः स्यात्तद्गच्छेदिति शालीकिः ′॥

II. 148. 4. कृष्णाजिनस्यावधवन[1] इति ॥ अन्तर्वेदि तिष्ठन्कृष्णाजिनमवधुनुयादिति बौधायनो ″ बहिर्वेदीति शालीकिः ′॥

II. 148. 6. अन्तःसदकारीयं करण इति ॥ कुर्यादिति बौधायनो ″ न कुर्यादिति शालीकिः ′॥

II. 151. 1. संसर्गे[2] प्रायश्चित्तकरण इति ॥ सूत्रमाचार्ययोर्″यो ह्याहौपमन्यवो यो नु खल्वाहवनीयो ऽत्र एत्रैव उद्धृतो भवति ′ यामयोनिरन्वाहार्यपचनसंचतश्[3] नास्ति प्रायश्चित्तं ′ प्रमत्तो हि द्वयाग्निसंसर्ग इति ′॥

इतीक्ता[4] इमा द्वैध्यो व्याख्याताः ॥ ४ ॥ द्वितीयः ॥

---

१ Thus G, °स्यावधवन C, °स्यावधाय Bu Be C′. °स्यावधव B, °स्याव-वन the Viv.

२ संवर्गे B Bu G.

३ सचना Be C′.

४ इतीच्चा B C′ Be.

5. अभिक्रामं जुहोतीति ॥ कियति नु खल्वेतद्दूरं भवतीति ॥ पञ्च प्रक्रमा इति बौधायनो ॥ यत्राप्नुयात् प्रक्रमा इति शालीकिः ॥

16. यदि पश्वोरवदानं नश्येदाज्यस्य प्रत्याम्नायमवद्येदिति ॥ स ह स्माह बौधायनो यदि पश्वोरवदानं नश्येदेकं यदि द्वे आज्यस्य[1] प्रत्याम्नायमिष्ट्वा तत्कृत्वा[2] पुनर्यजेतेत्यथो ह स्माह शालीकिर्यदि पश्वोरवदानं नश्येदेकं यदि द्वे आज्यस्य[1] प्रत्याम्नायमिष्ट्वा तत्कृत्वा[3] कृतमेव मन्येताथ यदि भूयो ऽप्येवं कुर्यादिति ॥

2. संप्लव इति ॥ यत्र क्व च नाव्या[4] वा[4] नद्यो[4] स्यादन्तरेणोदयन्त्यावतो[5] वासंप्लवस्तत्रेति बौधायनो ॥ यत्र क्व च प्रत्यक्षा न संसृज्येरन्नसंप्लवस्तत्रेति शालीकिर्यत्र क्वचनान्तरेणोदकं संप्लवस्तत्रेत्यौपमन्यवः[6] ॥ प्रत्यक्षयोरेव जनपदयोरसं-

---

[1] Some of the MSS. आज्यस्यैव ।

[2] न ins. B.

[3] After कृत्वा G B ins. न पुनर्यजेत (or ॰तेति), but cp. infra XXIII. 8.

[4] Thus G B (नाव्या नावो the Viv.): नावाया नद्यैव Bu U (pr. m.). नावयावानद्यो U (sec. m.): नाव्यायां नद्यो C′: नाव्यायाया नद्यो Be.

[5] Thus G and B (the latter only ॰ति); ॰रेणोदयन्त्यावति Bu U; ॰रेणोद.न्तो Be C′ (pr. m.). ॰रेणोदायन्तो C′ (sec. m.). The Vivaraṇa: उदकयन्त्यो (?) आपः यन्तो वापः । उदकवाहयन्तौ ।

[6] Thus B G Bu U (pr. m.); क्वचनोदकमन्तरेणैवाद॰ U (sec. m.); क्वचनोदकमन्तरेणाद॰ C′, ॰नोदकमन्तरेणाद॰ Be; but in the Vivaraṇa there is no mention made of water; यत्रान्तरमकृताचमनादा मर्यादेति ।

भवत्वपेत्यौपमन्यवीपुत्रो ॥ नाविदिषाणयोः सद्भवो विद्यत इति छागलेयब्राह्मणं[1] भवतीत्याश्मगविः ॥

II. 157. 3 अभिभूतीनाꣳ होम इति ॥ आध्वरा हुत्वा सान्नायणिका[1] जुहुयादिति बौधायनः ॥ सान्नायणिका[2] एवेति शालीकिः ॥

II. 162. 18 दीर्घप्रसृतेष्विति ॥ सूत्रꣳ शालीकेर्ग्रो ह स्माह बौधायनो याभ्यामेतद्गृभ्णां[3] पूतभृदाधवनीययोर्जुहुयात्ताभ्यां[4] षडेषडे जुहुयादथ तूष्णीꣳ सꣳस्रावमवनयेदिति ॥

II. 167. 6. नित्ये वरणे वैष्णवीमृचमनुवर्तयतीति ॥ सूत्रं बौधायनस्य ॥ पृषदाज्य एवैषानुवर्तयितव्या भवतीति शालीकिः ॥

II. 169. 5. स उक्थमुक्थं त्वेव प्रतिगीर्याध्वर्यो इत्याह सवनꣳसवनं वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

II. 171. 8 (172. 14). पृष्ठ्यषडहानां ग्रहण इति ॥ सूत्रꣳ शालीकेर्ग्रो ह स्माह बौधायनो यत्र कर्षेतान्यहानि संगच्छेयुर्न्यूनीयादेव तत्र पृष्ठ्यषडहानिति ॥ संवत्सर एवैते दृष्टा भवन्ति । संवत्सर एवैनान्न्यूनीयादित्यौपमन्यवः[5] ॥

१ Thus B G Be C. °छागं° Bu. °वैयाघ्र° U (pr. m.). °बाभ्र° U (sec. m.). °वैदिक° the Vivarana.

२ सायन° the MSS

३ Thus (and cp. infra p. 157, 8) G Bu U (pr. m.). °आमेषक° Be U (sec. m.). °आमेषतृ° B. यथामेषक° C.

४ पूतभृदाधवनीयेषु° U (sec. m.). पूतभृदाधवनीयेषु° G B U (pr. m.)

५ हवैकंस्र° all.

1. 16. पृषदाज्यग्रहाणां ग्रहण इति ॥ स ह स्माह बौधायनो ऽनुसवनमभ्यस्येत्[१] चैवैनानभ्यस्येदित्येन चेति ॥ नित्येनैवेति शालीकिः ॥

173. 7. अंशूनां प्रवृश्चण[२] इति ॥ एकैकशः प्रवृश्चेदिति[३] बौधायनः ॥ सर्वान्वृश्चेति शालीकिः ॥ ५ ॥

73. 12. आधवन[४] इति ॥ व्यतिषारमाधुनुयादिति बौधायनो ॥ यथाधविषमिति शालीकि ॥ मैचयेदित्यौपमन्यवः ॥

174. 9. अंशोर्होम इति ॥ सूचं शालीकेर्यो ह स्माह बौधायनो याभ्यामेतदृग्भ्यामुपस्पृशेत्ताभ्यामेनं जुहुयादंत तूष्णी-मुपस्पृशेदिति ॥

175. 1. पृश्निग्रहाणां ग्रहण इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

76. 13. तेन कक्षमुपोषतीति ॥ सूचं बौधायनस्यापूपेनैवाप्यन कक्षमुपोषेदिति शालीकिः ॥

76. 16. ऋषभो गोषु जीर्यतीति ॥ सूचं शालीकेर्यो ह स्माह बौधायनो यमप्यन्यं बहिस्तान्नात्पशुमालभेत तथाप्येतानि कुर्यादुपाकरणीययोर्वपायां देवतास्विति ॥

---

१ नुसवनंभजेच B G U (pr. m.): नुसवनभचच Bu, नुसवनभचचेनैवैना॰ U (sec. m.) C'; Be corrupt.

२ Thus (cp. XIV. 12: 173. 7) B Bu G and the Viv., प्रवंचच Be, प्रवचच U C'.

३ प्रवचे॰ or प्रवचवे॰ the MSS. exc. G.

४ चधावयन Bu.

II. 178. 9. अष्टापद्यै गर्भस्य वपाहोम इति ॥ सूत्रं बौधायनस्य " न गर्भस्य वपाहोमं जुहुयादिति शालीकि"र्नं च गर्भस्य वपाहोमं जुहुयान्नेतां न स्विष्टकृतमित्यौपमन्यवः ' ॥ ६ ॥ तृतीयः ॥

II. 179. 9. अजवशाया उपाकरण इति ॥ सूत्रं बौधायनस्य " वायव्यैवैनामुपाकुर्यादिति शालीकि"र्नो ह स्माह व्यायाम्कात्यायनो यथाप्युपाकरण उपाकरणं लुप्त एवमेवाप्युत्तरे मन्त्रा लुप्येरन्निति ' ॥

II. 180. 5. यदाऽन्यायामभ्रो भवतीति ॥ स ह स्माह बौधायनो यद्यवान्तश्रिता[1] अल्पश्या मेघाः स्युः सञ्स्थापयेदेवाथ चेत्तमश्याः स्युरथैवं कुर्यादित्य"नो ह स्माह शालीकिर्यद्यह नादित्यमन्तर्दध्युः[2] सञ्स्थापयेदेवाथ चेदेनमन्तर्दध्युरथैवं[3] कुर्यादिति " नाऽन्यायामसञ्स्थापनं[4] विद्यत इति गौतमः ' ॥

II. 180. 17. अर्धेष्विति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः " ॥

II. 181. 15, 16. अभ्यातानेष्विति ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्यापो ह स्माहौपमन्यवोऽभ्यातानाञ्जुहुयादाग्रभृत इति स्रुवाहुतीरेवैता जुहुयाद्गृह्णीयुश्च दर्शपूर्णमासावभ्यातानाञ्जुहुयादाग्रभृत इति ' ॥

---

१ ? यद्यवान्ताश्रिता Be C', यद्यवान्तश्रिता B G U, यद्दिवान्तश्रिता Bu.

२ Thus U, यद्यन्तर्दध्यु B G Be C', यद्यन्तर्दध्यु॰ Bu.

३ Thus Be C' U (sec. m.); एवम् om. B Bu G U (pr. m.), ॰चैवंकुर्यु॰ C'.

४ नाऽन्या॰ G U.— ॰थासंस्थापनं Bu, but the Viv. has असंस्थापनम् ।

2. 2. अन्वापरिधिष्विति[1] ॥ अन्वेव अन्वापरिधीन्कुर्यादिति[2] बौधायनः ॥ प्राकृता एवैताः[3] स्युरिति शालीकिः । ॥

2. 7. द्विःस्वाहाकारꣳ राष्ट्रभृतो जुहोतीति ॥ विग्राहं जुहुयादिति बौधायन ॥ द्वे द्वे स्रुवाहुती इति शालीकिः । ॥

182. sqq. अधिदेवने जुहोति रथमुखे जुहोति रथनाभ्यां[4] जुहोतीति ॥ सूत्रं बौधायनस्य ॥ तदग्नीन्येवैतानि[5] स्युरिति शालीकिः । ॥

3. 15. नैयग्रोध औदुम्बर आश्वत्थः प्लाक्ष इतीध्मो भवतीति ॥ सूत्रं बौधायनस्य ॥ पृथगेवैतानीध्मान्यभ्याधाय पृथगभ्यादध्यादिति शालीकिः । ॥

84. 2.१० यदाह क्रूरं तेन वषट्करोतीति ॥ सूत्रꣳ शालीकेर् ॥ यो ह स्माह बौधायन उदश्वित्वारमिममर्कपर्णेन[6] सह[7] जुहुयाज्जुहोति वा कश्चिति न वषट्कुर्यादिति । ॥

---

१ Thus Bu C′ and the Viv.: अन्वा॰ प॰ the other MSS.

२ Conjecturally (Viv.: अन्वीक्षणं अन्वाकाराः); अन्वापे अन्वाप्परि॰ B G U, अन्वयेव अन्वाप्परि॰ Bu: अन्वापे परि॰ Be C′

३ एवैता all.

४ नाभ्यां Bu U C′.

५ Thus C′ U (sec. m.); ॰तदपित्यव Be: ॰तदग्न्यंवे॰ B Bu G U (pr. m.). The Viv.: एव (r. एत) दग्नौन्ये (r. न्ये) व । एतेऽग्नय एवेमाः । नात्रापियजनमिति ।

६ Emended; उदश्वित्वा॰ Be, उदश्विदत्वा॰ C′. दुदश्वत्वा॰ B G, दश्वि॰ त्वा॰ Bu, उश्विदत्वा॰ U.

७ om. Be C′.

II. 187. 8. प्रधव इति ॥ स ह स्माह बौधायन उभयेन प्रसीयादाग्निहोत्रीयाभिश्च सावित्रेण चेति ॥ सावित्रेणैवेति शालीकिः ॥ ७ ॥

II. 187. 16 sqq. अतिक्रामेष्विति[1] ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

II. 188. 10 sqq. अतीमोक्षेष्विति[2] ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥

II. 191. 2. प्राणपक्षाणां ग्रहण इति ॥ सूत्रं बौधायनस्य ॥ संवत्सर एवैते दृष्टा भवन्ति । संवत्सर एवैनाम्नष्टश्नीयादिति शालीकिः ॥

II. 192. 10. तां दुग्ध्वा ब्राह्मणाय दद्याद्यस्यान्नं नाद्यादिति ॥ सूत्रꣳ शालीकेरथो ह स्माह बौधायनः प्राक् चेद्दिजिज्ञासायै[3] निषीदेदथैवं कुर्यादिति ॥

II. 195. 3. यस्याहवनीयेऽनुद्वाते गार्हपत्य उद्वायेदिति ॥ सूत्रꣳ शालीकेरथो ह स्माह बौधायनः समस्तमेतमग्निꣳ सते समुप्य दक्षिणेन विहारं पर्याहृत्य गार्हपत्यस्यायतनाद्भस्मोद्वाप्य शकृत्पिण्डेन परिलिप्य न्युप्योपसमाधाय ज्वलन्तमाहवनीयमुद्धृत्याहवनीयस्यायतनाद्भस्मोद्वाप्य शकृत्पिण्डेन परिलिप्य न्युप्योपसमाधाय समिद्वत्याहवनीये षट् स्रुवाहुतीर्जुहुयाद्बुध्यस्वाग्ने

---

१ Thus G (sec. m.) and the Viv.; •क्रमे• the other MSS. Vol. II. 187. 15 is to be corrected ऽतिक्रामाणा• ।

२ •ती• Be C' and the Viv., •ति• the other MSS.

३ Thus B G and the Viv., प्राक्चेद्जिज्ञासायै Bu, प्राक्चेज्जिज्ञासायै C', प्राक्वजिज्ञासायै U.

त्वमग्ने सप्रथा असि मनो ज्योतिर्जुषतां तन्तुं तन्वन्नुह त्वं चित्रमिति ' ॥

II. 196. 2 sqq. अतिरिक्तसोमेष्विति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

198. 1.५ ध्रुवे परिक्षीणे प्रायश्चित्तकरण इति ॥ स ह स्माह बौधायनः प्राक् चेदवभृथाच्छन्दोगबह्वृचेषु सभेरन्नभ्यावर्तयेयु स्तुतशस्त्राणि स्युस्तत्कृत्वा पुनर्यजेतेत्यथो ह स्माह शालीकिः प्राक् चेदवभृथाच्छन्दोगबह्वृचेषु सभेरन्नभ्यावर्तयेयु स्तुतशस्त्राणि स्युस्तत्कृत्वा क्रतमेव मन्येतेति ' ॥

199. 6.१० अक्तां ग्रहण इति ॥ सूत्रं बौधायनस्य " यदेवानन्तरमद्यः स्यात्तस्मिन्नेवावहणायाम्यहाम्यदनीरन्निति शालीकिः ' ॥

200. 3. यूपे विरूढे प्रायश्चित्तकरण इति ॥ सूत्रं बौधायनस्या' -न्तस्तन्त्रमेव यूपे विरूढे प्रायश्चित्तं कुर्यादिति शालीकिः ' ॥

201. 11. यस्य सोम उपदस्येत्सुवर्णं हिरण्यं द्वेधा विच्छिद्यर्जीषेऽन्यदाधुनुयाज्जुहुयादन्यदिति ॥ सूत्रं बौधायनस्य " सहिरण्या एवास्यात ऊर्ध्वं सुत्याःसमया 'द्ध्येरन्नभ्युत्तीयेरन्निति' शालीकिः ' ॥

201. 19. आदारसोमेष्विति ॥ सूत्रं बौधायनस्यादारसोमेनैवाप्य-न्यमागमयेरन्निति[२] शालीकिः ' ॥

---

१ Corrected; °भिचरन्निति B G Bu U (pr. m.), °भ्युत्तीरन्निति or °रन्निति Be C' U (sec. m.).

२ Thus B G; °नयाप्यन्यमान° Bu, नैवाप्योऽन्यमान° Be C' U (sec. m.).

II. 203. 4. चाग्निःष्विति ॥[१] चाग्निषो ऽनुवर्तेरन्निति बौधायन
एता[२] एवाग्निषः स्युरिति शालीकिः ॥ ८ ॥ चतुर्थः ॥

II. 245. 1 sqq. अथातो द्वादशाहं व्याख्यास्यामः ॥

II. 247. 4. चिन्वीत द्वादशाहे ऽग्निमिति बौधायनो न चिन्वीतेति शालीकिः ॥

अतिपाद्य[३] इति ॥ स ह स्माह बौधायनो गृहपतिरेवारण्योः[४] समारोपयेदेतदतिपाद्यस्य रूपं भवतीत्यथो ह स्माह शालीकिः पृथगेवारणीषु समारोपयेरन्गृहपतेरेव प्रथमस्य मथित्वा ज्वलत्सु ज्वलतो ऽपि[५] विसृजेरन्नित्येतदतिपाद्यस्य[५] रूपं भवतीति ॥

II. 245. 7. संनिवाप[६] इति ॥ स ह स्माह बौधायनः संनिवप्स्यन्तो ऽग्नये ब्रह्मण्वते पुरोडाशमष्टाकपालं निर्वपेयुरग्नये यवते ऽग्नये यपभृत इत्यथो ह स्माह शालीकिरग्निसंयोजनो[७] स्वस्थेष्टिभि-

---

१ Before चाग्निषो U has (rightly?) चाग्नौ चैव (r? चाग्निः चैव,) C' reads; चाग्नौ चैवाग्नौ ष्विताग्निषो।

२ Thus B U C', the Viv.; एत the other MSS.

३ Thus U (sec. m.) and C' originally; अतिपाद the other MSS.

४ Thus G B, गृहपतेरेवा° Bu Be C', गृहपतिना° U.

५ Thus B Bu G, °तोऽपि° Be, ज्वलत्सु ज्वलतोऽपि° U (sec. m.).

६ Thus B G and cp. XXVI. 12; संनिवापन U (sec. m.) C' Be, संनिवाप Bu.

७ Thus B Be; °यजना Bu G U C'.

वति ' यथैवाग्निं चेष्यमाणः स्यात्तथैनां निर्वपेदिति " प्राजापत्यं[1] पशुपुरोडाशमनुवर्तयेतेत्यौपमन्यवः[2] ' ॥

245. 11. पशव इति ॥ एकैकश एवैनान्प्रवयित्वैकैकश उदानयेयुरिति बौधायनः " सकृदेवैनान्प्रवयित्वैकैकश उदानयेयुरिति शालीकिः " सकृदेवैनान्प्रवयित्वा सर्वान्सहोदानयेयुरित्यौपमन्यवः ' ।

246. 6. आर्षेयवरण इति ॥ स ह स्माह बौधायनो ये केचन समानगोत्रा अव्यवेता अन्यथागोत्राः[3] स्युरेकस्यार्षेयस्य[4] वरण[4] एव तेषां वरणꣳ स्यादित्यथो ह स्माह शालीकिर्यदि चैव व्यवेता यदि[5] वाव्यवेताः[5] समानगोत्रा एकस्यार्षेयवरण[6] एव तेषां वरणꣳ स्यादिति ' ॥

46 13. व्रतधुक्ष्विति ॥ समानत्र समावत्सो विभजेरन्निति बौधायनः " पृथगेवैषां[7] व्रतदुघः स्युरिति शालीकिः ' ॥

१ प्राजापत्यश्च the MSS.

२ Thus U (sec. m.), ॰नुवर्तयेत्यौ॰ B G U Be, ॰नुनिर्वपेवेत्यौ॰ C′, ॰नुवर्तेतत्यौ॰ Bu.

३ ? अन्यथागोत्रा Be, अन्यगोत्रोत्रा C′, अन्यथागोत्रात्रा Bu, अन्यथा गोत्रात्रा U, अन्येव गोत्रा G B; अन्यथागोत्राः the Viv. (one copy), अन्यथावगोत्राः (another copy).

४ स्युरेक चार्षेयसंवरण C′, स्युरेक चार्षेयताः समानगोत्रा एकार्षेयं वरण Be.

५ Only in C′ B and U (sec. m.).

६ ॰र्षेयंवरण or वरण U Be C′. On the whole difficult passage cp. Ap. XXI. 3. 4.

७ एव om. G and the Viv.

II. 247. 1. षष्ठ्यामुपसद्युत्तरवेदिꣳ संनिवपन्तीति सूत्रमाचार्ययोरपि[1] वैकादश्यामिति विधिः[2] । ॥

II. 247. 7. वसतीवरीणामभिग्रहण[3] इति ॥ सूत्रꣳ शालीकेर्यो ह स्माह बौधायनो यदि सातिशेषः कलशः स्यात्तूष्णीमवनयेद्यद्यु वै सर्वश एव लेपः समवनीतः स्यादथैवं[4] कुर्यादिति शालीकिः । ॥

II. 247. 12. सो ऽथ[5] वैव[5] यज्ञस्य पुनरालम्भं जपति यज्ञायज्ञीयस्य वा स्तोत्रे शंयुवाके वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकिः । ॥

II. 248. 1. विवर्तयन्ति परिधीननुप्रहरति[6] प्रस्तरमिति ॥ सूत्रं बौधायनस्यानुप्रहरेदेवाथ प्रस्तरपरिधीनिति शालीकिः । ॥ ९ ॥

II. 248. 5. निमीलन्नाध्वर्युरुपाꣳशु[7] जुहोतीति । सूत्रं बौधायनस्योन्मीलमान एव जुहुयादिति शालीकिः । ॥

१ Before अपि Be ins. अपीदमाचार्योपमन्यवो, C' अपी॰ वो, U अपीदमाच बौधायनो । cp. XXVI. 12

२ Thus B G; ॰मिति वाधिः Bu; मिति वाभिः U. ॰मितवर्त्तं Be C'.

३ Thus the Viv. and cp. XXVI. 12; ॰मधिग्रहण Be C', ॰मिति· ग्रहण the other MSS.

४ Thus Be G, ॰दथैव C', ॰दथैवं Bu B U.

५ Thus B U G Bu the Viv. (one copy); चैव Be C' the Viv. (another copy).

६ ॰हरति Be G Bu U; ॰हरंति Be C'.

७ Read ॰पाꣳशुं?

48. ग्रिव्यैरुपाकरण इति ॥ स ह स्माह बौधायन उभयेनोपाकुर्याद्बर्हिर्भ्यां च ग्रिव्यैश्चेति ग्रिव्यैरेवेति शालीकिः ॥

48. 15. न्यूब्जन इति ॥ विराजां[1] वा प्रतिपत्सु न्यूब्जयति[2] मन्त्रे[3] वेति[3] ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

249. 4. निर्मन्थ्यस्य मन्त्रामन्त्र इति ॥ मन्त्रवान्स्यादिति बौधायनस्तूष्णीक इति शालीकिः ॥

दाक्षिणानाᳲ होम इति ॥ स ह स्माह बौधायनो जुहुयादेवाहुतीर्जपेत्प्रत्ययमन्त्रानित्यथो ह स्माह शालीकिर्जुहुयादेवाहुतीर्न तु[4] प्रत्ययमन्त्राञ्जपेदिति ये केच दक्षिणायुक्ता मन्त्राः स्युर्नैवैनानाद्रियेतेत्यौपमन्यवः ॥ १० ॥

पञ्चमः ॥

252. 6. अविवाक्य इति ॥ अविवाक्यमेतदहर्भवतीति बौधायनो विब्रूयादेवेति[5] शालीकिः ॥

252. 11. ऋचामुद्धरण इति ॥ सूत्रं बौधायनस्य यथाप्रकृतिमेवाध्वर्युः कुर्याच्छन्दोगवद्बह्वृचा एव प्रतिकुर्वीरन्निति[6] शालीकिः ॥

१ विराजां G C', विराजा Be Bu, विरजां U, विचजां B.

२ °यंति all exc. C'.

३ मन्त्रैर्वेति all.

४ Found in Be C' U G (sec. m.), the other MSS. om

५ Thus corrected; जिब्रू° B G, तिब्रू° Bu, गुब्रू° Be C' U (sec. m.), जिर्ब्रू° U (pr. m.).

६ प्रतिविकु° B G U (pr. m.).

II. 255. 13. सर्पण इति ॥ कृष्णाजिनान्तैः सर्पन्त उत्तरेण हविर्धान-मुपस्पृशेयुरिति बौधायनो ' नोपस्पृशेयुरिति शालीकिः ' ॥

II. 257. 4 sqq. आग्रयणाग्रेष्विति ॥ वाचंयमो ऽध्वर्युः पूर्वान्ग्रहान् गृह्णीयादिति[1] बौधायनो " विसृष्टवागिति शालीकिः ' ॥

स[2] शुक्रं गृहीत्वा धारयति यावदितरौ ग्रहौ गृह्णातीति ॥ सूत्रं बौधायनस्य " यंयं गृह्णीयात्तं परिमृज्य सादयेदिति शालीकिः ' ॥

ग्रहाधानेष्वनुसंभज्याया[3] इति ॥ अनुसंभजेदिति बौधायनो " नानुसंभजेदिति शालीकिः ' ॥

II. 258. 1. पशुकल्पेष्विति ॥ सर्वे कल्पा बौधायनस्य " आग्नेयपशून्येवा-हीनरात्रिसत्त्राणि भवन्तीति शालीकिः ' ॥

II. 261. 2. तेषां यानि समस्ताग्नतानि तानि साग्निचित्यान्यथेत-राण्यौत्तरवेदिकानि स्युरिति बौधायन " ऐकाहिकस्त्वेवाग्नि-रिति शालीकिः ' ॥

II. 262. 12. आचीयेष्विति[4] ॥ अभिजिद्विषुवान्विश्वजिद्ग्रममहर्मेधा-

---

१ ग्रहणानाम्य॰ B.

२ स given only by U (sec. m.) C' and the Viv.

३ Thus B G (sec. m.) C' (sec. m.) U; आयोजनाधानेषु॰ Be, ग्रहणानेषु॰ Bu; the Viv. ग्रहा आधीयन्ते इष्विति।

४ Thus (heteroclitic locative? from आचीयत्) Be C' U (cp. Āp. XXIII. 9. 6 आचयन्ति); आचीयेष्विति B G the Viv.; आचीये-ष्विति Bu.

सतमित्येतान्याश्वीयन्ति[1] भवन्तीति बौधायनो ॥ यान्यन्यानि पृष्ठ्याभिप्लवेभ्य इति शालीकिर्यानि यान्यानि पृष्ठ्याभिप्लवेभ्यो द्वादशाहाच्च इत्यौपमन्यवः ॥ प्रायणीयारम्भणीयावभिजिद्विषुवान्विश्वजिद्दशममहर्महाव्रतमुदयनीयो ऽतिरात्र इत्येतान्यश्वीयन्ति[2] भवन्तीति गौतमः । ॥

पशुकल्पेष्विति॥ सर्वे कल्पा बौधायनस्यैकादशिनपशून्येव सांवत्सरिकाणि सत्राणि भवन्तीति शालीकिः । ॥

वाणः सततन्तुर्भवतीति ॥ सूत्रं बौधायनस्य ॥ बौर्णवैणा[3] तन्त्रीभिः[4] सततमा[5] स्यादिति शालीकिः । ॥

अहर्गणे माहाव्रतिकानाङ्[6] शिल्पानां करण इति ॥ कुर्यादिति बौधायनो ॥ न कुर्यादिति शालीकिः । ॥

अहर्गणे शिक्यानामनुप्रवपण इति ॥ अनुप्रवपेरन्निति बौधायनो ॥ नानुप्रवपेरन्निति शालीकिः । ॥ ११ ॥ षष्ठः ॥

---

१ ॰तान्याश्वीयंती Bu, ॰तान्याश्वीयन्ति B G; the other MSS. wholly corrupt; cp. XXVI. 17

२ ॰हाविश्वियंति U. ॰हावश्वीया Be, ॰हावश्वीय C′, ॰हावश्वीयन्ति B G, ॰हावाश्वियंती Bu.

३ वार्णवैणा C′, बौर्णवैणां Be, U (sec. m.), बौर्णवैणां G, बौर्णवैणां Bu B, बौर्णवैणा U (pr. m.).

४ Thus G U C′; तंत्राभिः Bu, तौभिः Be, तंत्रं भिः B.

५ Uncertain; ससतमा B Bu G U (pr. m.) C′ (sec. m.); सततंतु Be U (sec. m.), सततंतुर C′ (pr. m.).

६ Thus B G Be, नशा॰ or नश॰ Bu U C′ and the Vir.

II. 269. 10. द्विरात्र इति ॥ सूत्रं बौधायनस्य" यजनीये ऽहन्यपूर्वमग्न्य- भवत्युत्तरस्मिन्नुत्तरमिति शालीकिः' ॥

II. 270. 5. तस्मिन्नुन्नतो वेदद्दामन इति भवन्तीति ॥ उपैवेते[1] नित्याः महत्से स्युरिति बौधायन" एत[2] एव[2] महत्तमाः[3] स्युरिति शालीकिः' ॥

II. 271. 10. द्रोणकलशस्यावघ्रापण इति ॥ अन्तःपरिध्यवघ्रापयेदिति बौधायनो" बहिःपरिधीति शालीकिः' ॥

II. 272. 3. रूपाणाꣳ होम इति ॥ सूत्रं बौधायनस्या'श्वमेधिका- न्यपच[4] रूपाणि जुहुयादिति शालीकिः' ॥

II. 274. 1. उद्वत्स्तोमेष्विति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः' ॥

II. 274. 9. औपसदानां पुरोडाशानां मन्त्रामन्त्र इति ॥ मन्त्रवन्तः स्युरिति बौधायन"स्तूष्णीका इति शालीकि'राग्नेया एक- कपालाः स्रुवाहुत्या येनान्सह सहाञ्जुहुयादित्यौपमन्यवः' ॥

II. 275. 8. द्वयोर्गा उपकल्पयन्त इति ॥ सूत्रं बौधायनस्या'जा अथोपकल्पयेरन्निति[5] शालीकिः' ॥

---

१ Thus G B; उपैवेति Bu, उपैवे U, उतवैते Be, चंतवेते C'.

२ Thus B G U (pr. m.) एता एव Be C' U (sec. m.), एतमेव Bu.

३ महत्तमा MSS.; omitted by Be C' (pr. m.).

४ Uncertain and partially emended; °नस्याश्वमेधिकस्यापच C', °नस्य चाश्वमेधिकस्यापच Be U; °नस्य चाश्वमेधिकायनस्य चाश्वमेधिकान्यपच B G, °नस्याश्वमेधिकायनस्याश्वमेधिकान्यपच Bu.

५ °कल्पयेर° C', अथ om. Be.

उदूखलबुध्नो यूपो भवतीति ॥ सर्वाङ्काराङ्कुर्यादिति[1] बौधायनः ॥ प्रोच्यैनमुच्छ्रयेदिति शालीकिः ॥ प्रोच्योपाच्य[2] यूपशकलमुच्छ्रयेदित्यौपमन्यवः । ॥

पांसूनामनुसंहरण इति ॥ धिष्णियेभ्य औदुम्बर्या अवटादुपरवेभ्य उत्करादुत्तरवेद्यै पांसूननुसंहरेदिति बौधायनो ॥ नानुसंहरेदिति शालीकिः । ॥

अथ यदि दीक्षोपसत्सु प्रत्ययमापद्येरन्संप्रकीर्योदवसानीयाभिरिष्टिभिरिष्ट्वोत्तिष्ठेयुरिति[3] बौधायन ॥ एकाहं[4] सुत्वोत्तिष्ठेयुरिति[4] शालीकि॥र्नासंस्थाप्य पृष्ठ्यं षडहमुत्तिष्ठेयुरित्यौपमन्यवः । ॥ १२ ॥

तेषामुत्थानेष्विति ॥ गच्छेयुरावभृथादिति बौधायनो ॥ ऽग्नीषोमान्ता इति शालीकि॥र्भुवान्ता इत्यौपमन्यवः । ॥

जनकसप्तरात्रो[5] ऽतिरात्रः पृष्ठ्यः षडह इति बौधायनः ॥ पृष्ठ्यः षडहो ऽतिरात्र इति शालीकिः । ॥

१ सर्वंकाराङ्कु° Be, सर्वांकाराङ्कु° C′. सर्वाङ्कामाङ्कु° B G U, सर्वाराङ्कु° Bu; the Viv : सर्वाङ्काराम्। क्रियन्त इति काराः : कर्मणाः संस्काराः।

२ Thus Be C′; °प्रोच्योपाच्य Bu, प्रोच्यावाच्य G, प्रोच्यवाच्य B, प्रोच्यपाचया U

३ इष्टिभिर् found only in G U C′.

४ Thus G Bu and the Viv.; एकांसुत्वो° U. एकाहसुत्वो° B, एका स्व सुत्वो° Be C′.

५ °रात्रो G Bu and the Viv.; °रात्रे B Be, °रात्रः C′ (omitting ऽतिरात्रः).

II. 277. 14. दशरात्राय दीक्षिष्यमाणो दशहोतारं हुत्वा दशरात्राय दीक्षत इति ॥ सूत्रं बौधायनस्य" सप्तहोतारं हुत्वा दशहोतारं जुहुयादिति शालीकिः" ॥ इति नु ब्राह्मणवान् ॥

अथ गोसवदशरात्रो ऽतिरात्रः पृष्ठ्यः षडहो वाजपेयो महाव्रतं अतिरात्रस्तस्याष्टमे[1] ऽह्नि[1] वाजपेयः[1] ॥ तत्र[1] देवसुवां हविषां करण इति ॥ कुर्यादिति बौधायनो" न कुर्यादिति शालीकिस्तं" यस्मिंस्तस्य पशुपुरोडाशमनुवर्तेरन्नित्यौपमन्यवः[2]' ॥

विलुप्यमाने पृष्ठ्ये षडहे शिल्पानां करण इति ॥ कुर्यादिति बौधायनो" न कुर्यादिति शालीकिः' ॥

II. 281. 16. एकषष्टिरात्रे वैश्वकर्मणादित्ययोर्ग्रहण[3] इति ॥ उत्तरे त्रिंशद्रात्रे गृह्णीयादिति बौधायनः" संवत्सर एवैतौ दृष्टौ भवतः' संवत्सर एवैनौ गृह्णीयादिति शालीकिः' ॥

II. 283. 2. औदुम्बरं षोडशिपात्रमिति ॥ सूत्रं बौधायनस्य" खादिरमेवेति शालीकिः' ॥

II. 283. 15 अतिरात्रपशूनामुपाकरण इति ॥ सूत्रं बौधायनस्य" सारस्वतीमेवोपाकुर्यादिति शालीकिः' ॥

---

१ Thus U C′; •ष्टमो भवतीति वाजपेयश्च Bu; ष्टमेवाजपेयश्च B G Be.

२ •पशु• om. B Be G.

३ Thus G U C′ and the Viv ; आदित्यग्रहयोर्ग्रहण B Bu ; •योरादित्ययो- ग्रहण Be.

षोडशिवतां चमसानां भक्षण इति ॥ व्यक्ताभक्षयेदिति[1] बौधायन॥ इन्द्रपीतानिति शालीकिः। ॥

रात्रिपर्यायेषु मुख्यानां चमसानामभिमर्शन इति ॥ सूचयन् शालीकेर्॥चो ह स्माह बौधायन इन्द्राय त्वापिशर्वरायेत्येव मुख्यंमुख्यं चमसमभिमृशेदिति। ॥

आश्विनस्य मन्त्रामन्त्र इति ॥ मन्त्रवाञ्स्यादिति बौधायनस्तू॥ष्णीक इति शालीकिः। ॥

आश्विनस्य चर्याया इति ॥ सूचं शालीकेर्॥चो ह स्माह बौधायनः पुरस्तात्तिरोअह्नियाणां[2] चमसानां चर्याया[3] अनुवाश्विनेन[3] चरेदिति। ॥

तिरोअह्नियाणां[2] चमसानां भक्षण इति ॥ अनुष्टुप्छन्दसा भक्षयेदिति बौधायनो॥ जगतीछन्दसेति शालीकिः। ॥

गृहपतीयेष्विति ॥ एकादशधा हुत्वोपयष्टोपयजेदिति बौधायनो॥ ऽपच्छेदमिति शालीकिः॥ समस्तान्येवैनान्यनुप्रवृत्य सर्वैर्मन्त्रैरनुमन्त्रयेतेत्यौपमन्यवः। ॥ १३ ॥ सप्तमः ॥

एकादशिन्यै संप्रदान इति ॥ सूचयन् शालीकेर्॥चो ह

---

१ Thus Bu Be C′ and the Viv.; सुव्यक्ताभ्य॰ B G U.

२ Thus Bu and Viv.; ॰अह्न्यानां or ॰अह्नियां the other MSS.

३ Thus G only; चर्याया इत्यश्वि॰ C′ U (sec. m.), चर्यायामुश्वि॰ the other MSS.; चर्याया also the Vivaraṇa.

स्माह बौधायन एकादशाग्नीषोमीया एकादश सवनीया एकादशानूबन्ध्या[1] इति । ॥

II. 292. 2. उपशयस्य मन्त्रामन्त्र इति ॥ लभेत ग्रामे नारण्य इति बौधायनो ॥ लभेतारण्ये न ग्राम इति शालीकिर् ॥ नैव ग्रामे नारण्य इत्यौपमन्यवः । ॥

II. 294, 16. उपशयस्योपासन इति ॥ सूचं बौधायनस्यो ॥ चैवोत्तरत[2] उपास्येदिति शालीकिः । ॥

II. 296, 4. पात्नीवतस्य परिलेखन इति ॥ शालामुखीयꣳ प्रक्रमभिपरिलिखेदिति बौधायन ॥ उत्तरत एकादशिन्यै पात्नीवतं मिनुयादिति शालीकिः । ॥

II. 296. 5. त्वाष्ट्रस्य मन्त्रामन्त्र इति ॥ मन्त्रवाक्स्यादिति बौधायनस्तू ॥ ष्णीक इति शालीकिः । ॥

II. 296. 6. त्वाष्ट्रस्योत्सर्ग इति ॥ सूचꣳ शालीकेर् ॥ यो ह स्माह बौधायनो ऽभिपर्यग्निकृतमेनमन्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रमय्याग्निरमुष्य[3] यजमानस्याजाखपिसृजेदिति । ॥

II. 296. 11. त्वाष्ट्रस्य चर्याया इति ॥ उपांशु चरेदिति बौधायन ॥ उच्चैरिति शालीकिः । ॥

II. 297. 4. पुनश्चिताविति ॥ सूचꣳ शालीकेर् ॥ यो ह स्माह बौधा-

१ ॰शानुबंध्या MSS.

२ Thus G U and a citation in the Ms.; उत्तर the other MSS.

३ Thus B Bo C′ G U (sec. m.); ॰निष्क्रमय्या॰ U (pr. m.), ॰निष्क्रमर्या॰ Bu; ॰निष्क्रमय्या॰ a citation in the Ms.

यतो यमप्यग्निं चिन्वानोऽपजानीयात्तस्मिन्नुपरि[1] पुनश्चितिं चिनुयादुत्तरतश्च यूपाद्यूपं मिनुयादिति । ॥

कौण्डपायिनीयादिष्टिष्विति । अग्न्यन्वाधानप्रतिपत्का इडान्ताः संतिष्ठेरन्निति बौधायन ॥ आज्यभागप्रतिपत्का इडान्ता इति शालीकिः ॥ सपूर्णपात्रविष्णुक्रमा इत्यौपमन्यवः । ॥

पिण्डपितृयज्ञस्य दान इति ॥ अहरहर्दद्यादिति बौधायन ॥ आदित अन्ततश्च मासस्येति शालीकिः । ॥ १४ ॥

होतॄणां व्याख्यान इति ॥ सग्रहानृतेस्वाहाकारानित्येकमन्तेग्रहानन्तःस्वाहाकारानित्येकम्[2] सर्वानित्येकं ॥ पूर्वः कल्पो बौधायनस्योत्तरौ शालीकेः । ॥

स पौर्णमासीषुपौर्णमासीषु जुहुयादथ कृत्स्नः संवत्सरे जुहुयादित्येतदेकममावास्यापौर्णमासीष्वित्येतदेकम् । सर्वास्वित्येतदेकम् ॥ पूर्वः कल्पो बौधायनस्योत्तरौ[3] शालीकेः । ॥

त्रयस्त्रिंशश्चिताविति[4] ॥ सूत्रं शालीकेर् ॥ चो ह

---

१ Doubtful. G and the Viv. read as given in our text; चिन्वानोपजा° C′, चिन्वानेवजा° U; चिन्वानोपजा° the other MSS. We expect an optative derived from the root ज्ञा. cp. जानानः XVII. 17: 297. 5. The Viv. periphrases by बोधः only.

२ °अंतस्वाहाकारा° MSS., but cp. XX. 5 : 5. 5.

३ ऋत्वौ ins. B Be G (sec. m.).

४ Thus C′, G U (sec. m.) the Viv. and a citation in the Ms.; °स्त्रिंशच्चिता° B Be, °स्त्रिंशाच्चिता° Bu.

आह बौधायनो ऽग्निग्रहणꣳ स्वयंचितिꣳ श्वेतकृष्ण-योरभिमर्शनमधिद्रवणमवद्रवणमिति[1] सर्वमेवैतत्कर्मावृता कुर्यादिति[।] ॥

II. 303. 5. अहरहश्चिताविति ॥ सूत्रꣳ शालीकेरुचो ह स्माह बौधायनो ऽग्निग्रहणꣳ स्वयंचितिꣳ श्वेतकृष्णयोरभिमर्शनम-धिद्रवणमवद्रवणमिति[1] सर्वमेवैतत्कर्मावृता कुर्यादिति[।] ॥

II. 307. 13. रथचक्रचितौ पुरीषस्योपधान इति ॥ पुरीषस्यान्तात्कु-र्यादिति[2] बौधायन[॥] इष्टकास्वेव पुरीषस्यान्तं[3] गच्छेदिति[3] शालीकिः[।] ॥ १५ ॥ अष्टमः ॥

II. 310. 2. रोहिते चर्मणीति ॥ सूत्रं बौधायनस्यापरोहितꣳ स्यादिति शालीकिः[।] ॥

उभयनीतस्य करण इति ॥ उभे[4] ऋचौ[4] द्विरभ्यावर्तये-दिति बौधायनः[॥] सकृदेव ब्रुवन्द्विर्ब्रूयादिति[5] शालीकिः[।] ॥

---

१ Thus B G Be Bu and a citation in the Ms. (cp also XXII. 4: 121. 18); C' reads °मर्शनाधिद्रविणमि°, U. om. °मवद्रवण°।

२ Thus G Be; पुरीषस्यांतस्यात्कुर्या° U. पुरीषस्यांतस्यांतात्कुर्या° B, पुरीषस्योतत्कुर्या° C'; Bu defective.

३ Hesitatingly corrected; पुरीषस्यान्तङ्ग° G. पुरीषंस्थानच्छे° Be, पुरीषंस्थानङ्ग° C'. पुरीषंस्थानङ्ग° U.

४ उभौ ऋचौ B G. उभन्न ऋचौ Be C'', उभयौ ऋचौ Bu, उभवै ऋचौ U (sec. m.). The two ṛks are, according to the Vir.: वायुः पूतः... प्राङ् सोमः etc., and वायुः पूतः... प्रत्यङ् सोमः etc., T Br II. 6. 2. 2-3.

५ ब्रुवन om Be C' U G (pr. m.): ब्रुवन् नद्विर्° Bu

प्राङ् सोमः प्रत्यङ् सोमः । प्रत्यङ् सोमः प्राङ् सोम[१] इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

सौत्रामणिकायै सुरायै संधान इति ॥ सूत्रमाचार्ययोर् ॥ श्वो ह स्माहौपमन्यवो यत्रैव सुरा स्यात्तत एवाहारयेदिति । ॥

सुराग्रहाणां ग्रहण इति ॥ सूत्रं बौधायनस्य ॥ पयोग्रहानप्यत्र गृह्णीयादिति शालीकिः । ॥

ताञ्जघनेन स्रुग्दण्डान्प्राचो वोदीचो वायातयतीति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

सुरासोमस्य संचर इति ॥ दक्षिणेन हृत्वोत्तरेणावनयेदिति बौधायन ॥ उत्तरेण हृत्वा दक्षिणेनावनयेदिति शालीकि ॥ यत एवैनꣳ हरेत्तत एवैनमवनयेदित्यौपमन्यवः । ॥

पावमानीभिरुपस्थान इति ॥ पावमानीभिरुपस्थाय पितॄणां याज्यानुवाक्याभिरुपतिष्ठेरन्निति बौधायनः ॥ पितॄणामेव याज्यानुवाक्याभिर्न पावमानीभिरिति शालीकिः । ॥

अवभृथ इति ॥ सूत्रमाचार्ययोर् ॥ श्वो ह स्माहौपमन्यवः शूलैश्च मासरेण चावभृथमवेयादिति । ॥

आख्यातमुदकान्तस्य प्रत्यसनम्[१] ॥

आख्यातमासंवनम्[२] ॥

आख्यातꣳ समिधां करणम् ॥

१ Thus G only; प्राक् सोमः प्रत्यक् सोमः प्राक् सोम B, प्रत्यक् सोम प्राक् सोम Be C′ U, प्राक्सोम Bu.

२ See remark on XXI. 3: 73. 5, 6

II. 327. 15. वैमृधस्यानुनिर्वपण इति ॥ सूत्रं बौधायनस्य ॥ नानिष्ट्वा प्रथमसोमेनानुनिर्वपेदिति शालीकिः। ॥ १६ ॥

II. 328. 12. पौर्णमासीमेव यजेत भ्रातृव्यवानामावास्यामिति ॥ उभयत्र पौर्णमासहविर्भिर्यजेतेति[१] बौधायनो ॥ नामावास्यायां किंचन यज्ञरूपं कुर्यादिति शालीकिः ॥ पिण्डपितृयज्ञेन चरेदित्यौपमन्यवः। ॥

II. 328. 15. साकंप्रस्थायीयेन यजेत पशुकाम इति ॥ सूत्रꣳ शालीकेर॥चो ह स्माह बौधायनः स्रुग्भ्यामेव पुरोडाशं जुहुयाच्चमसेन सांनाय्यमिति। ॥

II. 329. 11. नागतश्रीर्महेन्द्रं यजेत। त्रयो वै गतश्रियः शुश्रुवाग्रामणी राजन्यस्तेषां महेन्द्रो देवतेति ॥ स यो ऽन्य एतेभ्यो महेन्द्रमियक्षेत[२] स संवत्सरमिन्द्रमिष्ट्वा महेन्द्रेज्यां[३] लभेतेति बौधायनो ॥ ऽत एवापि संवत्सरमिन्द्रमिष्ट्वा महेन्द्रेज्यां[३] लभेतेति शालीकिः। ॥

II. 329. 16. संवत्सरमिन्द्रं यजेत। संवत्सरꣳ हि व्रतं नातीति ॥ सूत्रꣳ शालीकेर॥चो ह स्माह बौधायनो यस्याममावास्याया-

१ Thus B Bu, पौर्णमासौ॰ Be U G; C′ injured.

२ Thus (इयक्षेत and cp. XVII. 49: 329 13: इयक्षेत) the Vivarana only; महेन्द्रं यियक्षेत G (sec. m.) B; महेन्द्रमियक्षेत Bu. ॰न्द्रं यजेत Be C′, ॰न्द्रं यजेत U (pr. m.).

३ Thus B Bu G C′; महेन्द्रयाज्यां Be U.

मादित इन्द्रं यष्टुं प्रक्रामेत्संवत्सरे[1] पर्यवेते तस्यां महेन्द्रं यजेत । सो ऽत ऊर्ध्वं महेन्द्रयाज्येव स्यादित्यथो ह स्माहौपमन्यवो ऽभ्यारूढः खल्वस्यैव[2] संवत्सरो भवति यस्याममावास्यायामादित इन्द्रं यष्टुं प्रक्रामेत्संवत्सरे[1] पर्यवेते या ततः पूर्वामावास्या स्यात्तस्यां[3] महेन्द्रं यजेत । सो ऽत ऊर्ध्वं महेन्द्रयाज्येव स्यादिति । ॥

7. दाक्षायणयज्ञेन सुवर्गकामो यजेत । पूर्णमासे संनयेन्मै-
त्रावरुण्यामिक्षयामावास्यायां[4] यजेतेति ॥ सूत्रं बौधायनस्य ॥
वैमृधमप्यत्रानुनिर्वपेदिति शालीकिः । ॥

14.१० सांनाय्यस्य भक्षण इति ॥ सूत्रं शालीकेरथो ह स्माह
बौधायनो यजमान एवैतमर्धमासमनुनिधाय सांनाय्यं भक्षये-
दिति । ॥

1. आमिक्षायै मन्त्रामन्त्र इति ॥ मन्त्रवती स्यादिति
बौधायनस्तूष्णीकेति शालीकिः । ॥

6,१५ 3. इडादधे चतुष्कम उपांशुयाजस्य करण इति ॥ कुर्या-
दिति बौधायनो ॥ न कुर्यादिति शालीकिः । ॥ १७ ॥

नवमः ॥

1. बृहस्पतिसवे दाक्षिणानां होम इति ॥ अनुसवनं दाक्षिणानि

---

१ Thus (प्रक्रामेत्) C′ U and a citation by Sāyaṇa; प्रक्रामेत G (sec. m.), प्रक्रमेत् Bu Be, प्रक्रमेत B G (sec. m.).

२ Thus U C′, खल्वस्यै B, खल्वेवंस्यैव Bu, खल्वस्य G; Be is defective.

३ स्यात् given only by Sāyaṇa in his citation.

४ वा ins. Be B U.

जुहुयादिति बौधायनो माध्यंदिन एव सवने दाक्षिणानि जुहुयाद्दामीत्येवेतरयोः[1] सवनयोर्ब्रूयादिति शालीकिः। ॥

II. 346. 8. हिरण्येन घृतमुत्पुनातीति ॥ मन्त्रनिरुप्तमेतद् घृतꣳ स्यादिति बौधायनस्तूष्णीकमिति[2] शालीकिः। ॥

II. 349. 6. अनुद्रुते[3] वेद्यै दक्षिणत आहवनीयस्य द्वृत सोमं प्रत्यभिषिञ्चतीति ॥ सूत्रं बौधायनस्य ॥ कृष्णाजिनमध्यवास्तृत्याभिषिञ्चेदिति शालीकिः। ॥

II. 350. 2. माषैः पूर्णं कमण्डलुमिति ॥ सौवर्णः सौवर्णैर्माषैः पूर्णः स्यादिति बौधायनो ॥ मार्त्तिक[4] एव धान्यमाषैरिति शालीकिः। ॥

II. 354. 16. सप्तदश मारुतीः पृश्नीर्वत्सतरीरालभत इति ॥ पृथगेवासां मनोताः स्युः पृथक् पशुपुरोडाश इति बौधायनः ॥ पृथगेवासां मनोता स्युरेकः पशुपुरोडाश इति शालीकिरे॥कैवासां मनोता स्यादेकः पशुपुरोडाश इत्यौपमन्यवः। ॥

II. 356. 3.
II. 358. 9. अग्निष्टुतीन्द्रस्तुतीति ॥ सूत्रं बौधायनस्य यथाप्रकृतिमेवाध्वर्युः कुर्याच्छन्दोगवकृपा एव प्रतिविकुर्वीरन्निति शालीकिः। ॥

II. 360. 10. अतिरिक्तस्तोत्रेष्विति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

---

१ Thus B G Bu and the Viv.; इदामी॰ Be U C′.

२ Thus G B; तूष्णीक इति B, तूष्णीमिति Be C′ U.

३ Thus the Viv.; ॰द्रुते U G, ॰द्रवे Be C′, ॰द्रुत B.

४ मार्त्तिक G U C′ Be and Viv.; वार्त्तिक B. वात्तीक Bu.

3, धनुषः प्रदान इति ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥

एकाहानामन्त इति ॥ सूत्रं बौधायनस्य । सुत्युपवासान्त इति शालीकिः । ॥

3. निदधत्यस्मा एतद्धविरुच्छिष्टं व्रतभाजनमिति[१] ॥ सूत्रं बौधायनस्य ॥ नात्र हविरुच्छिष्टं व्रतभाजनं[१] निदध्यादिति शालीकिः । ॥

4. 9. अथास्याꣳ सद्यस्क्रियामनुक्रियां परिक्रियामतिक्रियां प्रवर्ग्यस्य करण इति ॥ कुर्यादिति बौधायनो ॥ न कुर्यादिति शालीकिः । ॥

10. ग्रावाणसो ऽधिषवणे फलके पुरुषास्यस्य वृषणाविति ॥ सूत्रं बौधायनस्य ॥ ग्रावाणसो ऽप्यचारणौ कुर्यादिति शालीकिः । ॥

2. स यं कं च[२] ग्रहं गृह्णात्येवमेवैनं गृह्णाति । यदु किं च पात्रꣳ सादयत्येवमेवैनत्सादयतीति ॥ सूत्रं बौधायनस्य ॥ यंयं ग्रहं गृह्णीयात्तंतं परिमृज्य सादयेदिति शालीकिः । ॥

8, श्वेतमश्वं ददाति । श्वेतां वडवां ददात्यश्वमसितं ददाति ।
14; गर्भिणीं वडवां ललामीं ददात्यनडुत्कृतं[३] ददाति । चय-

१ Thus B Bu G (sec. m.); •भोजन• Be C' U G (pr. m.).

२ चन G (sec. m.) and the Viv., चनं B.

३ Thus C' only (sec. m.), all the other MSS. corrupt (•त्वनडुहं-वर्चं ददाति; •त्वनडुहं ददाति, •त्वनडुहं ददाति वर्चं ददाति).

II. 379. 11; 382. 11; 388. 9; 406. 8, 9. षट्शतं निष्कान्ददाति¹ । सोमचमसं ददाति । हिरण्मयं चमसं ददाति । राश्मिशतं² धान्यं ददाति । मरायशतं धान्यं ददातीति³ ॥ एतानि च नित्यानि च दद्यादिति बौधायन एतान्येवेति शालीकिः⁴ । ॥ १८ ॥

⁵अथातः सर्वतोमुखं व्याख्यास्यामः ॥

चिन्वीत सर्वतोमुखेऽग्निमिति बौधायनो न चिन्वीतेति शालीकिरथो ह स्माह मौद्गल्यः पूर्वस्मिन्नेवाग्निचय इतरेषु साविधाः स्युरित्येतदपि न कुर्यादित्याश्मीगविः । ॥

अरण्योः समारोपण⁶ इति ॥ सूत्रमाचार्ययोरथो ह स्माह गौतमो गृहपतिरेव प्रथममरण्योः⁷ समारोपयेत⁸ इतरे यत्र इति । ॥

---

१ निष्कं ददाति MSS., but cp. XVIII. 38: 388. 9.

२ Thus Be C′ Bu U, राश्मौ° B G (sec. m.).

३ इति found in C′ only.

४ The words एतान्येवेति शालीकिः are repeated in Be Bu U W C′, indicating the end of a praśna.

५ This kaṇḍikā is not found in Be C′ Bu W U; in U it is given on a loose page. The text of this, doubtless later added, chapter is given according to B G (where it is given secunda manu), a complete citation in Keśavasvāmins prayogasāra (K) and a ditto (I) in a MS. belonging to the India Office (Catologue by Eggeling Vol. I, p. 87). The Vivaraṇa of this chapter is missing equally.

६ °रोपण G B.

७ प्रथमम् om. K.

८ °रोपयेयाता G B, °रोपयंत K.

प्राशाया इति ॥ प्राकृतेन[१] प्रक्रमेण मौयाम्मध्ये गार्हपत्य इति ॥ सूत्रं बौधायनस्यांचो ह स्माह शालीकिः विपरीतेन प्रक्रमेण सर्वत इति । ॥

चित्यायां दिशि भवति पञ्चदशो दक्षिणतः सप्तदशः पश्चादेकविंशश्च उत्तरतः । सर्वतो वा ज्योतिष्टोमः[२] सर्वं[३] ज्योतिष्टोमदक्षिणा इति ॥

प्रवर्ग्यस्य करण[४] इति ॥ सूत्रं बौधायनस्य ॥ गोक्ष्ये[५] प्रवृञ्ज्यादिति शालीकिः । ॥

याजमान इति ॥ अभौनामं[६] याजमानं कुर्यादिति बौधायनः ॥ कुर्याद्यथावकाशं याजमानमिति शालीकिर्यं ऽग्निसंस्कारा:[७] कृत्स्नाम्कामभितरत्नम्बेणत्यौपमन्यवः[८] । ॥

अन्वाधान इति ॥ सूत्रं बौधायनस्यांचो ह स्माह शालीकिर्गार्हपत्यः[९] सकृदन्वाहितः स्याद्गामयोनिरन्वाहार्य-

---

१ प्रक्र० U K I.

२ ०मः B G, ०माः U K I.

३ Thus I, सर्वं K, सर्वतो U, सर्वता वा B G.

४ प्रकरणे U K I.

५ गोक्ष्ये B G.

६ अभिनाम B G, but cp. XX. 18: 39. 11, the other MSS. om. this word.

७ ०संस्कारार्थं U.

८ नाम om. B G; instead of नाम्कामम् U : नक्षामम् ।

पचन आहवनीयꣳ[1] सकृदभ्याधाय ततो यथार्थं गच्छेदिति[2] ' ॥

भक्षण इति ॥ सूत्रं बौधायनस्य '' सर्वꣳ समवधाय सकृदेव[3] भक्षयेदिति[2] शालीकिः ' ॥

मार्जन इति ॥ सूत्रं बौधायनस्य[4] '' सकृदेकस्मिन्निति शालीकिः ' ॥

लोकाग्नीनाꣳ हरण इति ॥ सूत्रमाचार्ययोर्''नो ह स्माह दीर्घवात्स्यः[5] पूर्वस्मिन्नेव याजमानꣳ स्यादिति ' ॥

क्रतुपशूनां करण इति ॥ सूत्रं बौधायनस्य '' क्रतुपशव ऐकादशिनाश्च विकल्पन्त इति शालीकिः ' ॥

समञ्जन इति ॥ सूत्रमौपमन्यवीपुत्रस्य '' यावन्त स्तोमास्तावत्कृत्वः प्रचरणा समनक्तीति बौधायनः[6] ' ॥

दधिपय इति ॥ सूत्रं मौद्गल्यस्य '' पयसा वाज्येन[7] वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ' ॥

अꣳशदाभ्ययोर्ग्रहण इति ॥ सूत्रं बौधायनस्यांनो ह स्माह

१ After °नीयं G ins. तंतं. B तं; U K I om. पाम° ...नीयं and read स्वानं सकृद° (thus K I), स्वाहसकृद° (thus L).

२ इति inserted by me.

३ सकृदेव om B; न G instead of these words;—भक्षयेयुर U.

४ मौद्गल्यस्य U K I.

५ दीर्घ° U K I.

६ शालीकिर U K I.

७ U K I om. the first वा।

शालीकिर्वाजपेये द्वादशाहे सत्त्रे ताण्ड्यानामयन उद्भिदि वलभिदीति तस्य स्यादित्येवमेव पृश्निग्रहैः प्राणग्रहैरिति[1] । ॥

षोडशिग्रहाणां[2] ग्रहण इति ॥ सूत्रं बौधायनस्य ॥ अनुसवनं गृह्णीयुरिति शालीकिः । ॥

अतिग्राह्याणाꣳ होम इति ॥ सूत्रं बौधायनस्य[3] ॥ माहेन्द्रस्यानुवषट्कारमुपजुहुयुरिति शालीकिः[4] । ॥

षोडशिना स्तोत्रमुपाकरोतीति ॥ सूत्रं बौधायनस्य ॥ येन केन चिदिति शालीकिः । ॥

हृदयशूलानामुद्वासन इति ॥ एकैकश उद्वासयेदिति बौधायनः ॥ सर्वान्सहेति शालीकिः । ॥

अवभृथ इति ॥ सूत्रं बौधायनस्य[5] ॥ प्राञ्च एवावभृथमवेयुरिति[6] शालीकिः[7] ।० ॥

१ The reconstruction of the text of this dvandha is wholly uncertain. I have given the reading presented by B which, however, has उद्भिद्वलभिदिति and adds शालीकिः at the end. Thus also G. U K I have तांड्यानामयने ॥ तांड्यानामयन indicating the beginning of a new kaṇḍikā; moreover the following words run thus in U: उद्भिद्वलभिदित्येवमेव पृश्नि॰ in K: उद्भिदि वलभिदि।मित्यवमेव पृ॰, in I: उद्भिदि वलभिदि स्यादित्येवमेव पृश्निमितिशाध्यामित्येवमेव पृ॰ ।

२ षोडशिनां ग्र॰ B G.

३ शालीकिर् U K I.

४ औपमन्यवः U K I.

५ शालीके: U K I.

६ Thus G, ॰अवभृथमवेयु॰ U K I, ॰अवभृथमवेति B.

७ औलको U K I.

अरण्योः समारोपण[1] इति ॥ सूत्रमाचार्ययोरन्यो[2] ह स्माह गौतमो[3] गृहपतिरेवारण्योः समारोपयेत्तत[4] इतर इति[5] ॥ १९ ॥ दशमः ॥

॥ इति त्रयोविंशः प्रश्नः ॥

१ Thus K I, समारोपण U, समारोप्य B G.

२ सूत्रं माशौकिरयो U K I.

३ बौधायनो U K I.

४ ॰रोपये॰ B G.

५ Thus B G, तत इतरे यथार्थं मन्येयुर्भवेयुः U K I.

## कर्मान्तसूत्रम् ॥

पञ्चतयेन कल्पमवेक्षेत छन्दसा ब्राह्मणेन प्रत्ययेन न्यायेन सꣳस्थावयेनेति । छन्दसेति यद्वोचाम यथाम्नायप्रणिधीदं पूर्वमिदमुत्तरमित्यथापि मन्त्र एव स्वयं कर्म ब्रूते । कर्मानुवादो भवति । यथैतद्भवति प्रेयमगाद्धिषणा बर्हिरच्छोर्वन्तरिक्षमन्विहि देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामीति । यच्छन्दसा न शक्नुयात्कल्पयितुं ब्राह्मणेन तद्विकल्पयिषेद्ब्राह्मणमु हैवैनाम्मन्त्रानप्रख्यातान्विदधातीदमनेन करोतीदमनेनेति । यथैतद्भवतीषे त्वोर्जे त्वेति शाखामाच्छिनत्ति वायव स्थोपायव स्थेति वत्सानपाकरोतीत्यथाप्यमन्त्राणि कर्माणि विदधाति । यथैतद्भवत्यष्टासु प्रक्रमेषु ब्राह्मणो ऽग्निमादधीतैकादशसु राजन्यो द्वादशसु वैश्य इत्येवं व्यवस्थावर्णसंयोगाद्यथो एतत्प्रत्ययेनेति छन्दोगबह्वृचाध्वर्युप्रत्ययेनेति । यथो एतन्न्यायेनेति प्राकृते तन्त्रे प्राकृतं[1] न्यायमनधिगच्छन्न्यामन्यायं प्रतीयादयमिहार्थंताꣳ समारभ इति । यथो एतत्सꣳस्थावयेनेति सोमे ऽपवृक्त आदाराꣳश्च फाल्गुनानि चाभिषुणुयादिति । चतुष्टयेन मन्त्रा वर्तन्ते स्तुत्या निर्देशेनाशिषा नैव स्तुत्या नाशिषा न निर्देशेनेति चतुर्थमथैके । पञ्च हविराकारा औषधं पयः पशुः सोम आज्यमिति । ॥१॥

तेषां पृथक्पृथग्धर्माः पृथगधिकरणानि । यथाधिकरणं

---

१ प्राकृत all exc. D.

मन्त्रा दृष्टास्तांश्च मिथः सꣳसादयेदनादेशाद्येनयेन[1] यजुर्भिः सꣳसिध्येत्तेनतेन तत्कुर्यात्तस्याधिकरणमुक्तान्यधिकरणानि । यज्ञ इति । किमुपज्ञो यज्ञः अङ्गोपज्ञो माङ्गल[2] इति । क उ खलु यज्ञ इति । पुरुष इति । का उ खलु देवता होत्रेति । वागिति । का उ खलु पथ्या स्वस्तिरिति । [3]वागेवेति । का उ खल्वेकाक्षरा गायत्रीति । वागेवेति । क उ खलु यज्ञस्यारम्भः क्व प्रतिष्ठेति । विज्ञायते[4] स्वाहा यज्ञं मनसा स्वाहा द्यावापृथिवीभ्याꣳ स्वाहोरोरन्तरिक्षात्स्वाहा यज्ञं वातादारभ इति । वात एव यज्ञस्यारम्भो वातः प्रतिष्ठेति । ॥ २ ॥ प्रथमः ॥

कथमु खल्वेतज्जानीयादिदं तन्त्रमयमावाप इत्यन्वाधानप्रभृति तन्त्रमाज्यभागाभ्यामन्यत्रौषधास्तस्मिꣳस्तन्त्रे सत्यावापस्थानानि भवन्ति यथैतद्धेनूनां दोहनं कपालानामुपधानꣳ सान्नाय्यजुषो हरणमाज्यपदा[5] इति यच्च किंचाभिनिवपत्यूर्ध्व-

---

१ Thus H Ben G U D C Vt, Vc, the Viv. (one copy); संसाधये° Be, the Viv. (another copy). The meaning, according to Vc., of न मिथः संसादयेत् is: न मिश्रयेत् ।

२ Thus C U H G (pr. m.) Vt Vc and the Viv.; मांगलक Ben Be, मांगलिक G (sec. m.), पांगल D.

३ वा ins. G U (pr. m.) H.

४ In TS. I. 2, 2, 3.

५ °पदा Be G U, °पाशा Ben D (sec. m.), °पाशाः H, पदप D (pr. m.), °पद C, पाद Vt.

माज्यभागाभ्यामेष मध्यत आवापो भवति । यस्मिन्नेतद्धवीꣳष्योप्यन्ते तस्मिन्नेवावापजानि[1] तन्त्रस्थानं[2] भजन्ते यथैतदाग्नेयं यजमानभागमाज्यभागौ स्विष्टकृदिडा चेत्यवदानत आवापो भवति तन्त्रं तु प्रदानतः । क उ खलु तन्त्रमावापभूयं गच्छत्यावापो वा तन्त्रभूयमिति । नैवावाहयत्ये ऽप्यन्यस्मिꣳस्तन्त्रस्तु ह निर्वपणतो भवत्यावाप उ प्रदानतो । ऽथ वारुणीषु[3] च संज्ञानीष्वां[4] चावापो ह निर्वपणतो भवति तन्त्रं तु प्रदानतो । ऽनूयाजप्रभृति तन्त्रमा समिष्टयजुषो होमात्किंदेवत्या उ खल्वनूयाजा भवन्तीत्याग्नेया इत्येवं ब्रूयादिन्द्रायते तं देवा आहुतीभिरनूयाजेष्वन्वविन्दन्यदनूयाजान्यजत्यग्निमेव तत्समिन्द्ध इत्यृतुदेवता उ खलु प्रयाजा भवन्तीति । ॥ २ ॥
द्वितीयः ॥

कियत्यः पाकयज्ञसꣳस्थाः कियत्यो हविर्यज्ञसꣳस्थाः कियत्यः सोमसꣳस्था इति । हुतः प्रहुत आहुतः शूलगवो बलिहरणं प्रत्यवरोहणमष्टकाहोम इति सप्त पाकयज्ञसꣳस्था इत्यपरिमिता उ हैके ब्रुवते । यच्च किं चान्यत्र विहाराद्धूयते सर्वास्ताः पाकयज्ञसꣳस्था इत्यथ हविर्यज्ञसꣳस्था अग्न्याधेय-

१ एव om. H G U (pr. m.) C ;— ०जानीति G (sec. m.) U (pr. m.)

२ Ben Be ins. पंच ।

३ Thus (sc. इष्टिषु) D and C only ; वारुणेषु the other MSS.

४ Thus Ben C and Vc.; संज्ञानीपूर्व्वीं D; the other MSS. and the Viv. (one copy) and Vt. संज्ञान्येष्टां ; संज्ञानेष्टां the Viv. (another copy).

मग्निहोत्रं दर्शपूर्णमासावाग्रयणं चातुर्मास्यानि दाक्षायणयज्ञः कौण्डपायिन्य[1] इति । सौत्रामणिमु हैके ब्रुवते । ऽथ सोमसꣳस्था । अग्निष्टोमो ऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयो ऽतिरात्रो ऽप्तोर्याम इति सप्त सोमसꣳस्था । यदग्निष्टोमस्य क्रतुकरणं तदत्यग्निष्टोमस्य । यदुक्थ्यस्य तत् षोडशिवाजपेययोर्यदतिरात्रस्य तदप्तोर्यामस्येति । सप्तानाꣳ सोमसꣳस्थानां द्वे सत्त्राणि न गच्छतो वाजपेयश्चाप्तोर्यामश्चेति । ॥ ४ ॥

कथमु खल्वेतज्जानीयादियं पूर्वा ततिरियमुत्तरेति । या प्रकृतिः सा पूर्वा ततिरथ यद्विदधाति सोत्तरा ततिरग्न्याधेयं पूर्वा ततिः पुनराधेयमुत्तरा ततिर्दर्शपूर्णमासाविष्टीनां पूर्वा ततिः सर्वाः काम्या इष्टय उत्तरा ततिरैन्द्राग्नो निरूढपशुबन्धानां पूर्वा ततिः सर्वे काम्याः पशव उत्तरा ततिर्ज्योतिष्टोमः सोमानां पूर्वा ततिः सर्वे सोमा उत्तरा ततिः । श्येनचिदग्नीनां पूर्वा ततिः सर्वे काम्या अग्नय उत्तरा ततिर्द्विरात्रो ऽहीनानां पूर्वा ततिः सर्वे ऽहीना उत्तरा ततिर्द्वादशाहो ऽहर्गणानां पूर्वा ततिः सर्वे ऽहर्गणा उत्तरा ततिर्गवामयनꣳ सांवत्सरिकाणाꣳ सत्त्राणां पूर्वा ततिः सर्वाणि सांवत्सरिकाणि सत्त्राण्युत्तरा ततिः । कियन्ति नु खलु गवामयनानि भवन्तीति । विज्ञायते[2] यथैतस्यापि पृष्ठमुत्तमे

---

१ कुण्डपायिन्य Be, कौण्डपायिनस् the Viv. (one copy), कौण्डपायिनाम् D.
२ om. M Ben U (pr. m.) D C Vt.

मासि सत्यपृष्ठान्युपेयुर्दशमास्यं तृतीयꣳ । सप्त ग्राम्या ओषधयः सप्तारण्याः । सप्त ग्राम्याः पशवः सप्तारण्याः । सप्त छन्दाꣳसि चतुरुत्तराणीति । सप्त ग्राम्या ओषधयस्तिलमाषव्रीहियवाः प्रियङ्गवो ऽणवो गोधूमाः सप्तमे । कुलत्थान्[1] हैके ब्रुवते । सप्तारण्याः श्यामाकाश्च नीवाराश्च जर्तिलाश्च गवीधुकाश्च गार्मुताश्च वास्तानि[2] च वेणुयवाश्च सप्तमे । कुरुविन्दान् हैके ब्रुवते । सप्त ग्राम्याः पशवो गोऽश्वमजाविकं पुरुषश्च गर्दभश्चोष्ट्रश्च सप्तमे । ऽश्वतरम् हैके ब्रुवते । सप्तारण्या द्विखुराश्च श्वापदानि च पक्षिणश्च सरीसृपाणि च हस्ती च मर्कटश्च नादेया सप्तमे । सप्त छन्दाꣳसि चतुरुत्तराणीति गायत्र्युष्णिगनुष्टुब्[3] बृहती पङ्क्तिस्त्रिष्टुब्जगतीति । ॥ ५ ॥ तृतीयः ॥

अथेदं त्रयं भवति कर्माभ्यावर्ति देवताभ्यावर्ति संख्याभ्यावर्तीति । सावित्रं नु खल्विदं कर्माभ्यावर्ति भवत्यथ देवताभ्यावर्ति ध्रुवाज्यं द्रोणकलशः सर्वपृष्ठेत्यथ[4] संख्याभ्यावर्ति चित्रः पृच्छति शतꣳ हवीꣳः शमितरित्यथापि राज्ञो मासं । क्व नु खलु सन्तमन्तरितं कल्पयेत्स्थानाद्वा स्थानं प्रजिज्ञासीताभिरूप्येण[5] वा प्रौढेन वेति । स्थानात्स्थानमिति यद्वोचाम

१ Thus M Be Ben; कुलित्थान् H G (sec. m.) U D C. कुलुत्थान् Vt.

२ वास्तानि G (sec. m.), वास्तानि D C. According to the Viv. वास्तुकम् (Chenopodium) is meant.

३ °ष्टुम् M only.

४ i.e. सर्वपृष्ठाया काम्येष्टिः (Vc), cp. TS. II. 3, 7, 1.

५ प्रजिज्ञासीत U, °सित Vt Vc Ben.

यो ऽनन्तरो मन्त्र आम्नातः स्यात्तेनैनꣳ सह कल्पयेत्पूर्वकालेन वोत्तरकालेन वेति । यथो एतदाभिरूप्येणेति यथैतद्भवत्याम्नानः सुवीर्यꣳ रायस्पोषꣳ स्वभियम् । बृहस्पतिना राया स्वगाकृतो मह्यं यजमानाय तिष्ठेति । यथो एतन्मौहेणेत्यभिकल्पः अव्ययमिष्टकाभूयान्समाम्नातस्तत्र[1] यो मन्त्रो ऽन्तरितः स्यादिष्टकाभूयमेनमापादयेत् । ॥ ६ ॥

अथायमश्वमेध आकृतिभूयान्समाम्नातस्तत्र यो मन्त्रो ऽन्तरितः स्यादाकृतिभूयमेनमापादयेन्नाप्रक्रान्तं प्रक्रमयेन्न प्रक्रान्तं कर्म तूष्णीं कर्मणाभिपूरयिषेदिति । नाप्रक्रान्तमिति यद्वोचाम बर्हिर्लवनः अव्ययꣳ ह्रस्वो मन्त्र आम्नातो भवति दीर्घन्तु कर्म । न कर्मणो हेतोर्मन्त्रो ऽभिनिवर्तेताथायं पशोर्विशसनो ह्रस्वो मन्त्र आम्नातो भवति दीर्घन्तु कर्म । न कर्मणो हेतोर्मन्त्रो ऽभिनिवर्तेताथास्याꣳ स्वयमातृण्णायां दीर्घो ह मन्त्र आम्नातो भवति ह्रस्वन्तु कर्म । न कर्मणो हेतोर्मन्त्रो विरम्येद्यथो[2] एतन्नियजुषा सकृत्तूष्णीमिति । लोकाग्नीꣳश्च तेषामुपसृत्य सम्नयजुषेति । यथो एतत्पञ्चकृत्वो यजुषा

---

१ अव्यय given by Ben D C U (pr. m.) Vt, om. by H Be G U (sec. m).—On इष्टकाभूयान् V comments: इष्टकाभिर्भूयान् बहुलः इष्टकोपधानप्रचुर इति यावत् ।

२ Thus Be G U Vt Vc, विरम्येतयथो Ben C D, विरम्येत यथो H; V. comments: न विरमेत् न विरमेत् विच्छेदयन्न्यायतस्याद्व्यः ।

पञ्चकृत्वस्तूष्णीमिति राज्ञस्तेषां मामनुपगत्येति । [1]यद्यो एतत्सकृद्यजुषा सकृत्तूष्णीमिति राज्ञ एव[2] तेषां[2] मामनुपगत्येति[1] । यद्यो एतच्चतुरो मुष्टीन्व्रीहीणां निर्वपतीति द्वौ देवतायै स्विष्टकृते तृतीय इडायै चतुर्थ इति[3] सर्वं एवैतेषां ब्राह्मणवन्तः । ॥ ७ ॥ चतुर्थः ॥

अथात आदेशकारितानि व्याख्यास्यामो । ऽनादिष्टो ऽग्निरपि तु यद्येतद्भवत्यधिदेवने जुहोति रथमुखे जुहोति रथनाभ्यां जुहोति चतुष्पथे जुहोति वर्त्मनोर्जुहोत्यायतने जुहोति पदे जुहोत्यजायां जुहोत्यजस्य दक्षिणे कर्णे जुहोत्यजस्य दक्षिणे शृङ्गे जुहोति ब्राह्मणस्य दक्षिणे हस्ते जुहोति दर्भस्तम्बे जुहोत्यप्सु जुहोत्यौदुम्बर्यां जुहोति वल्मीकवपायां जुहोत्यौपासने जुहोत्युत्तपनीये जुहोति शामित्रे जुहोत्याग्नीध्रीये जुहोत्यन्वाहार्यपचने जुहोति गार्हपत्ये जुहोतीत्यनादिष्ट[4] आहवनीय एव होतव्यमनादिष्टो ऽध्वर्युरपि तु यद्येतद्भवत्युन्नेता जुहोति प्रतिप्रस्थाता जुहोतीत्यनादिष्टे[4] ऽध्वर्युणैव होतव्यमनादिष्टं पात्रमपि तु यद्येतद्भवत्यञ्जलिना जुहोति

---

१...१ This clause is found in D U Be G (sec. m.) only; it is commented upon by Bhavasvāmin.

२ Thus D; स्वेषां U Be G; some of the MSS. here and supra instead of उपगत्य read उपमित्य, which is perhaps the preferable reading, but cp. Vc: उपगत्य समीपे गतिं कृत्वा ।

३ इति supplied by me.

४ इति found in G only.

शूर्पेण जुहोति कृष्णाजिनपुटेन जुहोति मध्यमेन पर्णेन जुहोत्यन्तमेन पर्णेन जुहोत्यर्कपर्णेन जुहोति पर्णमयेन स्रुवेण जुहोत्यौदुम्बरेण स्रुवेण जुहोत्यङ्गुष्ठाभ्यां जुहोति विस्रꣳसिकाकाण्डाभ्यां जुहोति गोमृगकण्ठेन जुहोत्यश्वशफेन जुहोत्ययस्मयेन कमण्डलुना जुहोतीत्यनादिष्टे[1] स्रुचैव होतव्यमनादिष्टा समिदादेशादेव समिधं जानीयाद्विज्ञायते नासमिद्धे जुहुयादसमिद्धे[2] जुहुयाद्यथाग्निके ऽन्नं दद्यात्तादृक्तत्स्यात्समिद्धत्येव होतव्यमनादिष्ट उपसमाधायैव होतव्यम् । ॥ ८ ॥

अथातो ऽवदानकल्पंसंतुक्रमयति चतुरवत्तं भवतीत्यनादिष्ट उपहत्यैव होतव्यमनादिष्टꣳ हविरादेशादेवान्यद्व्रीहियवेभ्यो जानीयादपि तु नु खलु क्षिप्रसꣳस्कारतममाज्यं भवते । ऽनादिष्टः पशुरादेशादेवान्यमजाज्जानीयादैन्द्राग्नाद्यदभिहारं तन्नꣳ स्यात्तदभिहारं कुर्यादन्यभिहारौ दर्शपूर्णमासौ । सोम इन्द्राभिहारः । सावित्रमौषधस्य निर्वपणं दृष्टं भवति । किꣳ[3] स्वित्सांनाय्यस्य पशो राज्ञ इति । दोहनꣳ सांनाय्यस्योपाकरणं पशोर्यदुपाꣳश्वसवनमभि मिमीते तद्राज्ञः । प्रज्ञातमन्येषाꣳ हविषां पर्यग्निकरणं । किꣳ स्विद्राज्ञ इति । यदेवादो वसतीवरीः परिहरति तद्राज्ञ इति । ॥ ९ ॥

पञ्चमः ॥

---

१ इति missing in G H U D.
२ Thus U Ben G D C; जुहुयाद्यथा° Vt, °याद्यदिव° Be, °यादय° H.
३ Thus Be, the Viv. and V.; स्वित D C, स्विदु H Ben G'U D.

अथातः पुरोडाशान्व्याख्यास्यामः । सर्व एवाग्नेया अष्टाकपाला अन्यत्र पौनराधेयिकात्सर्व एवैन्द्राग्ना एकादशकपाला अन्यत्राग्रयणाच्च शुनासीरीयाच्च । सर्व एवैन्द्रा एकादशकपाला अन्यत्र शुनासीरीयात्सर्व एवाग्नीषोमीया एकादशकपाला अन्यत्र श्यामाकात्सर्व एव पशुपुरोडाशा एकादशकपाला अन्यत्र वायव्याद्यद्देवत्यः पशुस्तद्देवत्यः पशुपुरोडाशो ऽन्यत्र वायव्याद्भवति । सर्व एवाग्नावैष्णवा एकादशकपाला अन्यत्राध्वरकल्पायै । तत्रैवाष्टाकपालश्च[1] द्वादशकपालश्च भवतः । सर्व एव सावित्रा द्वादशकपाला अन्यत्राश्वमेधिकेभ्यस्तत्रैवाष्टाकपालस्त्वेकादशकपालश्च भवतः सावित्रो ऽष्टाकपाल इति च । सर्व एव मारुताः सप्तकपाला अन्यत्राश्वमेधिकानां चातुर्मास्यपशूनां पशुपुरोडाशेभ्यो मारुतादेकविंशतिकपालादन्यत्र राजसूयिकात्पञ्चशारदीयानां च पशूनां पशुपुरोडाशेभ्यः । किमनुख्यानि नु[2] खलु ते[3] विलेख्यानि कपालानि भवन्तीति । विज्ञायते[4] वैश्वानरं द्वादशकपालं मृगाखरे भूमिकपालं निर्वपेदित्येतदनुख्यानि भवन्तीत्यथ पूर्वसंख्याः । पञ्चप्रयाजश्च

---

1 Thus C Ben U (pr. m.): ॰कपालो H Be G U (sec. m.).

2 नु H D C V, तु Ben Be G U.

3 om. H G (sec. m.), found in Ben Be U D C G (pr. m.) V. According to Vc it stands for खलु. Is the word to be cancelled? The Vivaraṇa makes no mention of it.

4 Cp. T Br. III, 9, 17, 3.

नवप्रयाजश्चैकादशप्रयाजश्चेति प्रयाजाः पूर्वसꣳख्याः । पर्यग्निकरणं पशोरुपाꣳश्वभिषवो ऽग्निष्टोमे गवामयने चतुर्विꣳशमहस्तदपि विज्ञायते तस्य त्रीणि च शतानि षष्टिश्च स्तोत्रीयास्तावतीः संवत्सरस्य रात्रय इति । ॥ १० ॥

अथ राजयज्ञा । राजसूयो ऽश्वमेधः पुरुषमेधः सर्वमेधः सोमसवः पृथिसवो[1] मृत्युसवः कानान्धयज्ञः शुनस्कर्णयज्ञ इति चाथादितिदेवता । अग्न्याधेये त्वेव प्रथमश्चरुश्चातुर्मास्येषु द्वितीयः । प्रायणीयोदयनीययोरग्निदीक्षणीयायां । त्रयो राजसूये रत्निमानेषु[2] च प्रायुजेषु चादित्यां मल्हां गर्भिणीमालभत इति चैक इष्टिकल्प । एको व्रात्यस्तोमे । चत्वारो ऽश्वमेधे ऽदित्यै विष्णुपत्न्यै चरुरदित्यै हꣳससाचिरदित्यै त्रयो रोहितैतास्तिस्रो मेष्य आदित्या । द्वौ सौत्रामण्यामादित्याविवंशा । षष्ठो ऽष्टादश इति च । त्रीणि तन्त्राणि यज्ञमन्वायत्तानि भवन्ति पञ्चप्रयाजं नवप्रयाजमेकादशप्रयाजमिति । पञ्चप्रयाजेन दर्शपूर्णमासौ काम्या इष्टय इति वर्तन्ते । नवप्रयाजेन चातुर्मास्यान्येकादशप्रयाजेन पशुः सोम इति । सत्रिमानि सर्वकल्पे सर्वाभिप्रायिकाणि भवन्ति । यत्रैतदग्न्याधेय-

१ पृथिवीसवो or पृथिविसवो all, cp. XVIII 6.

२ Thus H Ben D C V, रत्निनेषु G Be U the Viv. (one copy), रत्निनिषु the Viv. (another copy). Read probably रत्निनीषु (sc. रत्निषु).

मग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोम इति । तदपि विज्ञायते ऽथ यदस्याग्निमुद्धरति सहस्रं तेन कामदुघा[1] अवरुन्द्धे[1] । ऽथ यदग्निहोत्रं जुहोति सहस्रं तेन । या वै वैश्वदेवस्य मात्रै । तद्वा एतेषामवममंतो ऽतो •वा उत्तराणि श्रेयाꣳसि भवन्ति[2] । सर्वान्लोकान्पशुमन्त्यथाज्यभिजयत्येकस्मै[3] वै कामायान्ये यज्ञक्रतव आलभ्यन्ते । सर्वेभ्यः कामेभ्यः पशुः सोम इति । ॥ ११ ॥ षष्ठः ॥

अग्नीनाधास्यमानः प्रज्यमात्मानं कुर्वीत । येनास्याकुशलꣳ[4] स्यात्तेन कुशलं कुर्वीत । यान्यृणान्युत्थितकालानि स्युस्तानि व्यवहरेदनुज्ञापयीत वाथाप्यग्न्याधेय एवलिंगां वरणं प्रथममुदाहरामस्तस्य चेत्पूर्वंपुरुषैर्वृताः स्युस्तानेव नातिवृणीताव्यवच्छिन्नास्तेत्कौलेनाध्ययनेन मानुषेण शीलवृत्ताभ्याꣳ स्युरिति । किंगत उ खल्वतिवरणं वावरणं वा भवतीति । स्येयमचारौ-

1 Thus Be G (sec. m.). °दुघोवरु° C D C H V, दुघावरु° Ben G (pr. m.).

2 भवंतीति C Ben.

3 After °जयति Be and G (sec. m.) ins. इति ।

4 Thus (and cp. XXV. 4 init.) C G D C Be and the Viv. (one copy). येनास्य कुशलं H Ben V and the Viv. (another copy). The Vivaraṇa runs: येनास्याकुशलं स्यात् ऋणादिना तेन साम्यं कुर्वीत, the Bhāṣya of Veṅkaṭeśvara: येनास्य कुशलं स्यात् येन संभारो नास्ति तं संपादयेदित्यर्थः ।

इध्ममङ्ख्याद्याध्यमयाजयत्साहितं[1] कर्म तदु हास्थित[1] इत्येतेषामेकस्मिन्नतिवरणं वावरणं वा भवतीति । तान्त्से-वृणीताध्यापनान्नानेव वृणीत । कं नु खल्वेषां प्रथमं वृणीत । यो ऽस्य सङ्स्तुततमः[2] स्यात्तं प्रथमं वृणीत । तेन सचिवेनान्यानन्विच्छेत । यद्यु वै यथाज्येष्ठं ब्रह्माणं प्रथमं ५
वृणीताथ होतारमथोद्गातारमथाध्वर्युं । ब्रह्मणो वानन्तर-मध्वर्युं । पूर्वं वोत्तरं वा यथाक्रमं चेत्स्यात्स्पृष्टेन धनेनर्त्विजः प्रतिसंश्रयीत । औत्थधिकरणान्यृत्विजां विनापि[3] यक्ष्ये[3]

---

१ Thus (आध्ममङ्ख्यात्) all. I guess this word to be a corruption from an original आध्ममङ्ख्य । The commentaries find the word अम 'sickness' in it. V.: आभिमुख्येन रोगवत् बाधकत्वेन स्थितः । The Viv.: आमार्तं (var. आमोर्तं) जिघांसति । अम रोगे । आभिमुख्येन रोगभूत (var. रोगहत) स्थितिः । अभ्यमंख्या इति शैढ् शिष्यः (var. शैव्यः) रोगत्वेन स्थितः ।— आहितं all the MSS. exc. Be (आर्त), G (sec. m. ओर्द) and U C (अन्कुस्थितं); कुस्थितं, however, seems to be the periphrase of our word in the commentaries; V.: आहितं कुस्थितं कर्म येनाभिचारयजनादि । Perhaps the original reading of our passage has been: सोयमचारी-इध्ममङ्ख्याद्याध्यमयाजयदाहितं कर्म तदु हास्थितेति । हास्थित 3rd sing. root aor. med. from आतिष्ठते । Moreover instead of the impf. अया-जयत् we expect an aorist.

२ संस्तुततमः D and U (sec. m.).

३ Thus (विनापि यक्ष्ये) all (also Vt, Vc). exc. C, which has विना यक्ष्ये; the correct reading (see the Viv. and the Bhāṣya: अनु-मिच्छामि) seems to be either विना यक्ष्ये (see the reading of C) or विनापीयक्ष्ये (इयक्ष्ये for regular इयक्षे, cp. the remark on XXIII, 17: 176, 12).

ऽध्याग्निषि[१] भार्यामक्षपीति । को नु खल्वृत्विक्षु धर्म इति । य आचार्य इति । कथमर्हण इति । ॥ १२ ॥

आगममागम इत्येकमृतुमुखमृतुमुख इत्येकं । संवत्सरस्य पार इत्येकं । यथाधिगम इत्येतदपरं । को नु खल्वृत्विजां धर्म इति । न न्यस्तमार्त्विज्यं कुर्यान्नानुध्यातं । नावक्रीतो याजयेन्नावृतो याजयेन्नातिवृतो याजयेन्नानूद्देश्यं[२] याजयेन्नोतदक्षिणं[३] याजयेन्नापरपक्षे याजयेन्नार्तिं याजयेन्न मृतं याजयेन्न चिकित्सिनं याजयेन्न परिख्यातिकाम्यं[४] याजयेन्नाग्नं

---

१ Thus Be G and U (sec. m.) and both copies of the Viv.; ध्यापिषि U H Ben, Vt. Ve; C corrupt; the Viv.: राजकुलचोरादिभिः इतसर्वस्वो ऽस्मि, the Bhāṣya: राजाद्युपद्रवादिना हृतसर्वस्वो ऽस्मि ॥ On ध्याग्निषि for original ध्यापिषि cp. Indog. Forsch. XVIII. 421, M.S.L. XIV. 192. See also infra XXIV. 18 : 202. 2.

२ Thus G Ben U D G (pr. m.) Vt, and cp. T Br. III. 11. 8. 8 with the remark of Sāyaṇa a. h. l.; नुदेश्यं Be, the Viv. (one copy); ०नुदेश्यं G (sec. m.) C. the Viv. (another copy); नूदेश्यं H. The Viv.: ऋत्विजां यत्र स्वस्थो चोदिश्य करोति, the Bhāṣya: यस्यान्य कुल-मुद्दिश्य स्वयमस्वतन्त्रः सन्यो यजति तम् ।

३ Thus (as Sāṅkh. śrs. V. 1. 10) G C, the Viv.; नोपदक्षिणं (as Āśv. gṛhs. I. 23. 20) the other MSS. The Bhāṣya (दक्षिणानयनात्प्राक् यस्य यस्य चिदृत्विजो ऽनुपपत्तो सत्यां तस्यार्त्विज्यं न कुर्यादित्यर्थः) and the Vivaraṇa (दक्षिणादानोत्तरकालस्य) derive नीत from नयति; it is rather the partic. from व्येति; cp. नीतस्य XVIII 41 : 393 7.

४ परिख्या० Be Ben C D V.

याजयेन्नान्त्यजं[1] याजयेन्नाननूचानं याजयेदपि वैतेषां[2] तं याजयेयः कपालान्युपहन्याद्धुत्तिप्रेप्से वर्तमाने। तदपि ह्याम्नतये विज्ञायते ऽवर्त्या ह्युन आन्त्राणि पेचे न देवेषु विविदे मर्डितारम्। अपश्यं जायाममहीयमानामधा मे श्येनो मध्वाजभारेति। नैतेषामयाज्यः सहस्रदक्षिण इति। ॥ १३ ॥

॥ सप्तमः ॥

I. 53. 3. जघास्य सिकताश्चेति। ये भस्मरा इवोषाः सुक्तानाहा-
I. 53. 4. रयेदारण्यस्य वराहस्य विहतादाहारयेदारण्याखोरुत्करादा-
हारयेद्वा ऽनुपदासी सूदः स्यात्तत आहारयेत्सूदे ऽविद्यमाने
I. 53. 6. कुलीरस्य बिलादाहारयेदग्निहते ऽविद्यमाने शीतहतमाहा-
I. 53. 7. रयेद्वातहतं वा। चिचियस्याश्वत्थस्येति। येन ग्रामो वा नगरं
I. 53. 9. वा नदी वा तीर्थं वा ज्ञायते तत आहारयेदश्वं पूर्ववाह-
मिति। युवानमित्येवेदमुक्तं भवति। चौष्किरण्यग्रस्कानिति[3]।
षडिमाश्कारयेत्सौवर्णा[3] उपासनार्था[4] राजता अतिप्रदानार्था।

---

१ Thus Be, नांत्यजं G D C. Viv., Vt; नाव्यजं H; Ben. om. the word; the Bhāṣya: पूर्वोक्त (sc. शेष) ईमजातम्। शूद्रस्त्रियामुत्पन्नमित्यन्ये।

२ Thus H Be U (sec. m.) the Viv.; चैतेषां Ben G C U (pr. m.) and Vc. (अपि च अपि वेत्यर्थः)।

३ Uncertain reading. H G U (sec. m.) Be (only °ग्रस्कोनिति) and U (sec., only ग्रस्कानिति) read as given in the text; चौष्किरण्य ग्रस्का (ग्रस्का D C) श्कारयेत्सौ° Ben D C; चक्रिरण्यग्रस्काश्कारयेत्सौ° Vt. Are we to correct: चक्रिरण्यग्रस्कानिति। चौष्कौषिमाश्कारयेत् ?

४ Thus Ben C H D G (pr. m.) Vt: सौपास° Be G (sec. m.) the Vivaraṇa.

उभौ मानुषेणालङ्कारेणालङ्कृतौ भवतो ऽहतवाससाविति सर्व एवान्यो मानुषो ऽलङ्कारो ऽन्यत्र नलदादीतीयैवैतदुदाहरन्ति । स्रजमु हैके प्रतिषेधयन्ति । ॥ १४ ॥

ताः संवत्सरे पुरस्तादादध्यादिति । त्र्यहे षडहे द्वादशाहे वा । संवत्सरे ऽपर्यवेत उद्वायति कथं तत्र कुर्यादिति । पुनरेव ब्रह्मौदनꣳ समुत्थापयेदा समिधामभ्याधानात् । न केशश्मश्रु वापयीत । पुरस्तात्त्वेवैतत्संवत्सरꣳ[1] संवसीत । प्रायश्चित्तार्थ एष उक्तो[2] भवति । स यावत्कृत्व उद्वायेदेवमेव कुर्यात्पर्यवेते नोपनमेदेवमेव कुर्यादुपनमत्युपवसथं गविप्रभृति कर्म तायते । द्विब्रह्मौदनमु[3] हैके ब्रुवत उपक्षेपणीयो हेतरः[4] सान्नकरण उत्तरो । ऽथ संभारेषूपान्निवपन्यद्दक्षाद्रमपि शम्यां तत्समनसा ध्यायेत्तदपीहेति । सामानि चेन्न प्रत्यधीयीत योनीर्निगदेदपि वा व्याहृतीभिरपि वा हिंकारेण । प्रणीतालोकेन रथचक्रं प्रवर्तयेत्तस्य चेदादधानस्य पुरस्ताच्चन्द्रमा दृश्येत कथं तत्र कुर्यादिति । यः कर्मान्त आरब्धः स्यात्तं परिनिष्ठाप्य कर्मान्तेनोपरमेच्छ्वो भूते परिनिष्ठितेदित्यथ चेदिमे ऽभ्यासिते

---

१ Thus Be G; ०स्तात्त्वेवैनंसंवत्सरं U (sec. m.); एतत् (एनत्) not found in Ben U (pr. m.) D C Vt.; in H the whole passage is left out.

२ Found in G Be U (sec. m.) only.

३ Thus G Be U Ben; द्विब्र० H G D C, the Viv.

४ Thus Be U (sec. m.) the Viv.; चीतरः Ben H G C U (pr. m.) Vt; चितरः D.

दृश्येत कथं तत्र कुर्यादिति । पूर्णाहुत्यन्तं कर्म कृत्वा कर्मान्ते-
नोपरमेच्छ्वोभूते परितिष्ठेदिति । ॥ १५ ॥ अष्टमः ॥

I. 53. 13. अथात ऋतुनक्षत्राणामेव मीमांसा । ऋतूनेवाग्रे व्याख्या-
स्यामो ऽथ छन्दांसीति । वसन्ते ब्राह्मणो ऽग्निमादधीत ग्रीष्मे
राजन्यः शरदि वैश्यो वर्षासु रथकार इति । सर्वेषां त्वेव
वसन्त आधानं सर्वेषां रोहिण्यां । यथावर्णं त्वेव छन्दां-
स्यपि तु नु खलु कामनियुक्तान्यग्न्याधेयानि भवन्ति । यथै-
तद्भवति कृत्तिकास्वग्निमादधीत रोहिण्यामग्निमादधीत पुनर्व-
स्वोरग्निमादधीत पूर्वयोः फल्गुन्योरुत्तरयोः फल्गुन्योश्चित्राया-
I. 53. 16. मिति । यज्ञकालान्येतानि भवन्ति[1] । ग्रीष्मे राजन्यः शरदि
वैश्य इति नैते यज्ञकाले भवतो । ऽथात आर्तिजान्यग्न्या-
धेयानि व्याख्यास्यामो । विपन्न आपूर्यमाणपक्षे विपन्ने ऽपक्षी-
यमाणपक्ष इति । विपन्न आपूर्यमाणपक्ष आदधानो यावान-
त्रावकाशः[2] स्यात्तमभिविदधीत । पौर्णमास्यां तु[3] यज्ञकालं ।
विपन्ने ऽपक्षीयमाणपक्ष आदधानो[4] नात्रावकाशः[4] कालक्षणाय
विद्यते । सर्वमेवैतदहः यज्ञकालं कुर्याच्चतुर्होतारं सारस्वतो
होमावन्वारभेष्टिमिति । ॥ १६ ॥

---

१ भवंतीति Be.

२ Thus G Be H U (sec. m.), the other MSS. and the Viv. om. त्र ।

३ Found in Be U (sec. m.) only.

४ त्रादधीत नात्रानत्रावकाशः U (sec. m.) only. Are we to read त्रादधाने with Vc?

अथ[1] पौर्णमासवैमृधाभ्यामिष्ट्वामावास्यामेव ततः काङ्क्षेदथ यदमावास्यायाꣳ सद्यस्कालममावास्यान्तमथ सारस्वतौ होमौ जुहुदृचैवर्चमुपसंदध्यादेवं पूर्णदर्वे । एवं वास्तोष्पतीये । कथमु खलु पूर्णाहुतिं जुहुयादग्नये पृथिव्यै वायवेऽन्तरिक्षाय सूर्याय दिवे वरुणायाग्नः स्वाहेति जुहुयादथेदं तूष्णीमग्निहोत्रमग्निसंस्कारार्थं दृष्टं भवति । तदाज्येनैव जुहुयादवाचीनमवमृज्योर्ध्वमुन्मार्ष्ट्युभे एवैते सायंप्रातरग्निहोत्रे प्रतिजुह्वन्नन्यत्र औपवसथिकायै रात्रेः । सामिधेनीरनुवक्ष्यन्ब्रह्महोतारं व्याख्याय व्याहृतीरुक्त्वाथ[1] हिंकुर्यादथानुब्रूयादेतदथानुपूर्व्यं[2] भवति । कथमु खल्वग्न्याधेये सोम इति । पूर्णाहुत्यन्तं कर्म कृत्वा शालामध्यवस्यैद्दीक्षणीयामाग्नेयो ऽष्टाकपालो ऽनुवर्तेत प्रायणीयामैन्द्राग्नस्यादित्यस्य[3] चरुरातिथ्यामग्नये[3] पवमानाय पुरोडाशो ऽष्टाकपालो ऽग्नीषोमीयस्य पशुपुरोडाशमग्नये पावकायाग्नये शुचये प्रातःसवनीयानन्वारम्भेष्टिरपि वा सर्वाण्येवाग्न्याधेयिकानि हवीꣳषि परिनिष्ठाप्य शालामध्यवस्येदुदवसानीयामन्वारम्भेष्टिरिति[4] । ॥ १७ ॥ नवमः ॥

---

१ अथ om Be.

२ ०पूर्वं H.

३ Thus G U (sec. m.) and cp. XX, 19 : 20, 24; ०मैन्द्राग्नस्यादित्यस्य० U Vt. ०मैन्द्राग्न्यादित्यस्य० Be.

४ Thus Be only (sc. अनुवर्तेत), cp. the Viv.: उदवसानीयामन्वारम्भेष्टिः । All the other MSS. and V: उदवसानीयायामन्वा० ।

I. 69. 1. अथेदं पुनराधेयं । कियन्नु खलु पुनराधेयं भवतीत्यग्नीनाधाय पापीयानभूवमभ्यामिषि¹ पुत्रो मे मृत² इत्येतस्मिꣳस्त्वेवैतत्संवत्सरे दृष्टं भवति । कस्मिन्नु खल्वेनत्काले
I. 69. 6. समुत्थापयेदिति । या याषाढ्याः पौर्णमास्याः पुरस्तादमावास्या³ भवति या वसन्तसंवत्सरस्य पुनर्वसुभ्याꣳ संपद्यते तस्यामादधीतेति । तस्या उपवसथेऽरण्योरग्नीन्समारोप्योद्वसाय⁴ मथित्वाग्नीन्विहृत्योद्वासयेद्वाग्नीन्समारोप्य⁵ गच्छेत्पुनरेतदग्न्यगारꣳ⁶ संस्कारयेदन्यद्वा नवं कारयेत्पुनरेतानि यज्ञ-
I. 70. 16. पात्राणि संलेखयेदन्यानि वा नवानि कारयेत्पुनर्निष्कृतो रथो दक्षिणेति पुनःसंस्कृत एवैष उक्तो भवति । पुनरुत्स्यूतं

---

१ Thus again (and cp. XXIV, 12: 197, 1) Ben Be G, the Viv. and Vc (twice); अभ्यासिषि H U Vt and Rudradatta on Āp. V, 26. 3. D and C are defective. Here Bhavasvāmin remarks: अभ्यामिषि अभ्यस्थिषः (Var. अभ्यस्थाःषि)। यमरमनमातां सक् चेति (Pāṇ. VII, 2. 73). स आगमो अभ्यासिषीति भवितव्यं। वर्णव्यत्ययेन सकारस्य मकारः स्यात्। दीर्घो ऽपि धनमरीचादिना।

२ Thus all; probably the original reading was: पुत्रो मे ऽम्रियतेति।

३ Instead of पुरस्तात् G H Be उपरिष्टात्।

४ Thus Be Viv.: ॰समारोप्यो॰ H Ben C Vt.

५ Instead of ॰द्वासये॰ one copy of the Viv. and Vt: ॰द्वासिये॰, another copy of the Viv.: ॰द्वासनै॰। — The reading ॰ग्नीन्समारोप्य is uncertain: thus read H G U C D, ॰ग्नीन्समरोप्य Be, ॰ग्नीरोप्य Ben, ॰ग्नीनरोप्य Vt (pr. m.), ॰ग्नीनवोप्य Vt (sec. m.) Vc. The Viv. gives the periphrase: तथैवाग्नीनुत्कृष्य, cp. Āp. V, 27, 3.

६ Thus Ben U (pr. m.) Vt, पुनरेवाग्न्य॰ G H Be U (sec. m.).

वाय इति पुनःसंस्कृतमेवैतदुक्तं[1] भवति । पुनरुत्सृष्टो ऽनड्वानित्यपशीर्षगव एवैष उक्तो भवत्यथेमान्युपांशुधर्माणि भवन्ति यथैतदग्न्याधेयं पुनराधेयं पितृयज्ञो दीक्षणीया प्रायणीयातिथ्योपसदः प्रातरनुवाकः पत्नीसंयाजा[2] अवभृथ उदयनीयोदवसानीया चितिप्रणयनीयं त्वाष्ट्रो यूपविरोहणीयो ऽष्टापदी[3] गर्भवती[4] च[4] । सहकारिप्रत्यया[5] भवन्ति[5] । यथो एतद्बौधायनस्य कल्पं वेदयन्ते ॥ १८ ॥

. 2. सर्पराज्ञिया[6] अग्निर्गार्हपत्यमादधातीत्यपोद्धृत्य घर्मशिर एतस्य स्थाने सर्पराज्ञीरावपेदित्येनोपस्थाय पौनराधेयिकेनोपतिष्ठेत । विद्धमत ऊर्ध्वमीजानस्य पुनराधानस्य संनये३ न३[7] संनये३दिति[7] । संनयेदित्येक आहुरथ हैक आहुर्न संनयेदिति । शरीरसंस्पर्शी च यज्ञो भवति यदेव[8] पुनर्य-

१ उक्तं supplied by me.

२ Thus Ben U (pr. m.) D C, ॰याजाः अवभृ॰ Vc, ॰याजोऽवभृ॰ G H Be U (sec. m.).

३ ष्टापद्यै G and U (sec. m.) Be.

४ Thus D C U (pr. m.) Vt : गर्भ इति G and U (sec. m.) Be; गर्भवती इति च Ben, गर्भवति च H

५ ॰कारी U (sec. m.) D.— ॰प्रत्ययाद्भव॰ (॰यात् भव॰) Vt Vc. and Be : the word occurs also II. 2 : 35. 16.

६ Thus G U D C Ben V ; ॰राज्ञीया Be, सार्पराज्ञिया H.

७ Plutimark only in Ben U Vt.

८ Thus Ben U D V ; यदेव G H, यदेन Be, यद्वैव C.

I. 70. 12. ञेताश्च संनयेच्छताक्षरा भवन्तीत्यक्षरपङ्क्त्य[1] एतास्तस्य एकैका
I. 71. 12. पञ्चविꣳशत्यक्षरा । तच्छतमथेदं तृतीयाधेयं[2] । कतरत्तु
खल्विदमुपनिश्रयतीत्यग्न्याधेयं वा पुनराधेयं वेत्यग्न्याधेय-
I. 72. 1. मित्येव ब्रूयाद्यथापहृताग्नेर्नष्टारणीकस्य च[3] ब्रह्मौदनेनैव प्रति-
पद्यते । सिद्धमग्न्याधेयम् । ॥ १९ ॥ दशमः ॥

I. 1. 4. अथेमौ दर्शपूर्णमासौ पौर्णमास्युपक्रमावमावास्यासꣳस्था-
वाचार्या[4] ब्रुवते । तत्रोदाहरन्त्यूर्ध्वं मध्यरात्रात्पौर्णमास्यां
चन्द्रमाः पूर्यते । स एतं चापररात्रं पूर्णो भवति सर्वं चाह-
रुत्तरस्याश्च रात्रेरा मध्यरात्राद्यामावास्याया[5] उपवसथीये
ऽहन्यूर्ध्वं मध्यंदिनाच्चन्द्रमसमादित्यो लभते । स एतं चापरात्रं
लब्धो भवति सर्वां च रात्रिमुत्तरस्य चाह्न आ मध्यंदिनात्तꣳ
सन्धिमभि[6]यजेतेति । रात्रिरेव पौर्णमास्याꣳ संधेया भवत्य-
हरमावास्यायां । द्वे पौर्णमास्यौ द्वे अमावास्ये । पूर्वांपूर्वां पौर्ण-
मासीमुत्तरामुत्तराममावास्यां । या पूर्वा पौर्णमासी सानुमति-

---

१ ॰पंक्त्य H Be G Ve; ॰पंक्त्या Ben Vt, ॰पंक्तय U C, पङ्क्तय D; cp. TS. I, 5, 2, 1; the four akṣarapaṅktis are TS. IV, 4, 4, w-z.

२ Thus G Be Ben the Viv. (and thus is to be read also III, 3 : 71, 17 instead of तृतीय चाधान); तृतीयमग्न्याधेयं H U D C V.

३ Found in Ben D G U C only.

४ Thus U G D C Be V and the Viv.; पौर्णमासोप॰ H Ben, see also Pitṛmedhasūtra I, 1 : 16.

५ या found in Be G (sec. m.) U and the Viv.

६ ॰मभितो G and U (sec. m.).

योत्तरा सा राका या पूर्वामावास्या सा सिनीवाली योत्तरा सा कुहूर्गायत्री वा अनुमतिस्त्रिष्टुब्राकेति पौर्णमास्ये नामधेये जगती सिनीवाल्यनुष्टुप् कुहूरित्यमावास्यायै नामधेये । ॥ २० ॥

अथायं चन्द्रमाः षोडशकलस्तस्य[1] पञ्चदशभिः[1] पञ्चो[1]ऽभिविहितो[1] भवति । षोडशी त्वियं कला बहुधा विप्रविष्टा ब्राह्मणेष्वप्स्वोषधीषु वनस्पतिषु पशुष्विति । स यदेतानि यज्ञे क्रियन्ते तेनैषा संभ्रियते । ऽथोपवसथस्थानानि चतुर्दशी पञ्चदशी षोडशी । न तु त्रयोदशी सप्तदशी भवतः । सो ऽयमाहिताग्निरुपवसथीये ऽहन्पुरा प्रातरग्निहोत्रात्पिञ्जूलानुपसादयेदन्वाधानार्थान्व्रतोपायनीयं[2] पाचयीत । तस्याग्नितौ भवतः । सर्पिर्मिश्रं दधिमिश्रमक्षारलवणमपिशितं[3] । सर्वमेवैतदहः[4] कोशीधान्यं[5] वर्जयेदन्यत्र तिलेभ्यस्तस्य ब्राह्मणं प्रति-

---

१ Thus Be H, G and U (sec. m.); ०कलः स षोडशभिर्वपञ्चोभिवि० D C; ०कलः शभिर्वपञ्चोभिवि० Ben; ०कलः स पंचदशभिर्वपञ्चोभिर्वि० Vt; Vc: शुक्लपक्षे स चन्द्रमाः पञ्चदशभिः पञ्चोभिस्तिथिभिः प्रतिपत्प्रभृतिपौर्णमासीपर्यन्तैः विभक्तः कल्पितो भवति ।

२ Thus (पिंजूलान्) U H D C and a citation by Sāyaṇa; पिंजालन् Be Vt Vc, पिंजूलानि the Viv., पिञ्जलान् Ben G. Sāyaṇa: कूर्चकाष्ठविशेषान्, Veṅkateśvara: कूर्चकाष्ठानि, Bhavasvāmin: काष्ठानि कूर्चानि ।

३ Thus (अक्षारलवणम्) Be D and a citation by Sāyaṇa; ०क्षारलव० H, ०क्षारलवण० G U C, Vt, Vc.

४ Thus H G Be U (sec. m.) and a cit. by Sāyaṇa; अह om. Ben D C V.

५ Thus (and cp. II. 20 : 67, 1) G Ben, कोशी(षि)० D C U H V Be and a citation by Sāyaṇa.

प्राश्नीयान्नैतदहः शूद्रायोच्छिष्टं दद्यात्पत्न्या एवैतदहरुच्छिष्टं दद्यान्नासन्द्याꣳ शयीत न स्त्रियमुपेयात्कामं त्वेवोपरि शयीत स्त्रियं त्वेव नोपेयाद्व्रतचारी त्वेव स्याद्यदि केशश्मश्रु वापयिष्यमाणः स्यात्केशश्मश्रु वापयित्वा लोमानि सꣳहृत्य नखानि निकृन्तयीत स्नायादभ्यञ्जीताञ्जीत दीक्षायै रूपं कुर्वीता-

I. 1. 5; III. 3. 4. ग्नीनन्वादध्याद्दपक्षं कृत्वा गार्हपत्यमूर्ध्वमुरन्वाहार्यपचनं प्रक्ष आहवनीयं तिष्ठन्नग्नौ निगदेदिति ॥ २१ ॥ एकादशः ॥

अन्वाहिताश्चेदग्नय उद्वायेयुः सवनीयं गार्हपत्यस्याहवनीय उद्वाते भस्मोद्वाप्य शकृत्पिण्डेन परिलिप्य ज्वलन्तमाहवनीयमुद्धृत्य न्युप्योपसमाधाय पुनरन्वाधाय व्याहृतीभिरुपतिष्ठेताथ यद्यन्वाहार्यपचन[1] उद्वायेदेवमेवैनꣳ हरेदनार्ता ह्येषा देवता यदन्वाहार्यपचन इति पुनरन्वाधाय व्याहृतीभिरुपतिष्ठेताथ

II. 193. 17. sqq. यस्याग्निमनुद्धृतꣳ सूर्यो ऽभ्यस्तमियादभ्युदियाद्वा यथासूत्रं[2] वा कुर्यादपि वा संतनीं[3] जुहुयान्मनो ज्योतिर्जुषतां यच-स्मिन्प्रपन्नत इत्येते स्रुवाहुती हुत्वा व्याहृतीभिरुपतिष्ठेताथाभ्यस्तमिते वारुणीꣳ स्रुवाहुतिꣳ हुत्वा व्याहृतीभिरुपतिष्ठेताथाभ्युदिते मैत्रीꣳ स्रुवाहुतिꣳ हुत्वा व्याहृतीभिरुपतिष्ठेत व्याहृतीभिरेवान्वाहार्यपचनमंधारयोरग्निषु समारूढेष्वात्मनि

---

१ यदन्वा॰ Ben H, यथन्वा॰ B G U, यद् om. C.

२ See XIV, 24 : 193, 19 sqq.

३ Thus (cp. III, 14 : 84, 9) Be G D U; संततिं H, संततीं C, संतति Ben.

वाध्वगते न प्रायश्चित्तमाचार्या ब्रुवते । तथोदाहरन्ति काममात्मनि समारूढेष्वरण्योरुपावरोह्य मन्थेदपि वामात्यं विहृत्य[१] तस्मिन्नुपावरोह्य जुहुयादथारण्योः समारूढेषु मथित्वाग्नीन्विहृत्य जुहुयादपि वामात्यं विहृत्याग्नीनन्तरारण्यौ[२] निधाय जुहुयात् । ॥ २२ ॥

यथा राजविग्राममेवं[३] निर्मन्थ्यो वृथाग्नेस्तस्मिन्नेके[४] ब्रुवते । यावति कृष्णमृग उपविशेत्तावदवरार्ध्यो[५] ऽध्वगतो[५] विहारो । ऽग्नीनन्वादध्याद्धुतमुपेयाद्धुतोपेतस्य पर्णमयामामाचक्षयादेतदया-

१ Ben H U D मथित्वा instead of विहृत्य; विहृत्य मथित्वा Be; G om. pr. m. विहृत्य, sec. m. मथित्वा ।

२ Thus H Be G D U (sec. m.); Ben U (pr. m.) ins. मथित्वा before विहृत्य ।— ऽन्तरारण्यौ Be G U, ऽन्तरारणि Ben H, ऽन्तरारणी D. In C this whole passage runs as follows: अपि वामात्यं मथित्वा तस्मिन्नुपावरोह्य जुहुयादथारण्योः समारूढेषु मथित्वाग्नीन्विहृत्य जुहुयादपि वामात्यं मथित्वा विहृत्याग्नीनन्तराग्नी विधाय जुहुयात् ॥ २२ ॥ Cp. also Rudr. on Āp. IX. 3. 3.

३ राजा॰ Ben C and one copy of the Viv.; this seems to be the better reading.

४ Thus Ben D U (pr. m.) C and the Viv.; मथ विह॰ Be H G U (sec. m.). About the meaning of these words I am uncertain.

५ Uncertain reading. G as given in our text; ॰वराध्योऽध्वगतो H; ॰वरार्ध्योऽध्वगतो U; ॰परार्ध्याध्वगते C; ॰पराध्योऽध्वगते Ben; ॰वरार्ध्योऽध्वगतो Be; ॰परार्ध्योऽध्वगतो D. The Vivaraṇa runs: तावदवरार्ध्यो जघन्यावकाशम् अयो न (one copy om. न) भवति अर्थं हस्त विक्रमेष्वित्याद्यपरविहरण- (॰विहार॰ another copy) भूमिक्रमः ।

नुपूर्व्यं भवत्यथेमानि[1] त्रीणि पलाशशाखानि भवन्ति सच्छाखो लोमशाखो शततिरिति । लोमशाखश्चैवैषा[2] छेत्तव्या भवति । यावन्मात्रे गौर्निकर्षेत[3] न[3] तत[3] ऊर्ध्वं छिन्द्यादपशाख्यात ऊर्ध्वं स्यात् । यद्यु हाग्निहोत्रोच्छेषणात्प्रमाद्येत्तत्पुनरेवाग्निहोत्रं[4] जुहुयादथेमाः सांनाय्यदुहः षड्वमाः[5] समाम्नाता भवन्ति । तासेन्निन्न एव स्युः प्रथमां वोत्तमां वा चतुर्विग्टह्णीयादथ चेद्वे एव स्यातामितरेतरां त्रिस्त्रिर्विग्टह्णीयादथ

I. 5. 5. चेदेकैव स्यात्तामेव षड्कृत्वो विग्टह्णीयादित्युदवागनन्वारभ्योत्तरा[6] दोहयेदित्यपरिमितानामेवैतदुक्तं[7] भवतीति । ॥ २३ ॥

द्वादशः ॥

I. 6. 2. द्वादश द्वन्द्वानि दर्शपूर्णमासयोस्तानि संपाद्यानीति । स्फ्यश्च कपालानि चेति पञ्च । वत्सं चोपावसृजत्युखां चाधिश्रयतीति सप्त । तानि द्वादशामावास्यायामेवैतत्संनयत[8]

१ Only Be has इति after भवति ।

२ Thus U (sec. m.) and a citation by Sāyaṇa; एव om. D Be C H G; एवैषा om. Ben.

३ Equally uncertain. निकर्षेतनतत U (sec. m.), निकर्षेत न तत a citation by Sāyaṇa; निकषवेतत G D, निकषेततत Ben. निकर्षयेत C, निकर्षेतनत Be U (pr. m.), निकषेतत H.

४ Thus G U; प्रमाद्येतपु° Ben C D, प्रमाद्येत्पु° Be, प्रमाद्येत्पु° the other MSS. The Viv. om. तत्, as also Rudr. on Āp. I. 11. 1.

५ षड्वराः D C and a cit. by Sāyaṇa.

६ After ग्टह्णीयात् G and U (pr. m.) ins. त्रिर्मन्त्रेण त्रिस्तूष्णीम् ।

७ दोहयत्य° instead of दोहयेदित्य° Be G U; दोहयिमादित्य° C.

८ एव om G and U (sec. m.), H Be.

उपपद्यते नासंनयतो । ऽथेयं दार्शपौर्णमासिकी[1] वेदिर्यजमानमात्री भवत्यपरिमिता वा । यथासन्नानि हवींषि संभवेदेवं तिरश्ची । प्राचीं वेद्यंसावुन्नयत्याहवनीयस्य परिगृहीत्यै । प्रतीची श्रोणी निहरति गार्हपत्यस्य परिगृहीत्यै । पुरस्तादंहीयसी पश्चात्प्रथीयसी मध्ये संनततरा भवतीत्येवमिव[2] हि योषेति । तस्यै वदतीयतीं खनति[3] प्रजापतिना यजमानमुखेन संमितामा प्रतिष्ठायै खनतीति । द्व्यङ्गुलं खयेत्येकेषां । त्र्यङ्गुलं खयेत्येकेषां । चतुरङ्गुलं खयेत्येकेषां । सीतामात्रीत्येकेषां । रथवर्त्ममात्रीत्येकेषां । यावत्पार्ष्ण्यै श्वेतमित्येकेषामेतदेव सदन्येषामनुनिक्रान्ततरं भवति । नैता मात्रा अतिखनेद्दक्षिणतो वर्षीयसीं करोति । पुरीषवतीं करोति । प्राचीमुदीचीं प्रवणां निस्तिष्ठन्तीतीयन्तं[4] गृह्णातीति प्रस्तरस्य वदति । ॥ २४ ॥

संनखमात्रो ग्रहीतव्य इत्येकेषां । विप्रादुको[5] ग्रहीतव्य

---

१ दर्शपूर्णमा° G, दर्शपौर्णमा° Be; cp. V. 5: 133. 13.

२ इति found in H G U only.

३ G Ben H and a citation by Sāyaṇa ins. इति, but cp. TS. II. 6. 4. 2, TBr. III. 2. 9. 10.

४ Thus Ben U (pr. m.) and a citation by Sāyaṇa; निमिष्ठतीतीयंतं D H C, निखिद्यतेतीयंतं U (sec. m.) G Be

५ Thus H U (pr. m.) and Sāyaṇa (twice, in a citation); विप्रादको Ben, विप्रादुको Be G U (sec. m.), the Viv.; C D om. this passage Sāyaṇa (and Bhavasvāmin) remarks: विप्रादकः विगतप्रदेशः प्रदेशमात्रो मूलमित्यर्थः, Bhav. adds: सर्वेण मूलेन ग्रहीतव्या ।

इत्येकेषाꣳ । स्रुग्दण्डमात्रो ग्रहीतव्य इत्येकेषाꣳ । स्रुवदण्डमात्रो
ग्रहीतव्य इत्येकेषामुर्वस्थिमात्रो[1] ग्रहीतव्य इत्येकेषामङ्गुष्ठपर्वणा[2]
संमितो[2] ग्रहीतव्य इत्येकेषामपरिमितो ग्रहीतव्य इत्येकेषा-
मियतीर्भवन्तीति समिधां वदति । प्रादेशमात्रीरेवैता उक्ता
भवन्त्यनेन संमिताः कार्या इत्याहुरनेन ह्यग्रे प्रजापतिः प्रजा
I. 6. 11. असृजतेति । किंदेवत्ये उ खलु पवित्रे किंपूते भवत इति ।
वैष्णवी वायुपूते इत्येव ब्रूयादनखच्छिन्ने स्यातां । प्रणीताः
प्रणयन्ननयापः प्रणयामीति पृथिवीं मनसा ध्यायेत्समान्येतानि
कुर्यात्प्रणीता आहवनीयं ब्रह्माणमिध्माबर्हिरिति यज्ञस्य शिर
I. 8. 18. इत्येतदाचक्षते । किंप्रोक्षिता उ खलु प्रोक्षण्यो भवन्तीति ।
विज्ञायते ब्रह्मवादिनो वदन्त्यद्भिर्हवींꣳषि प्रौक्षीः केनाप
I. 9. 11. इति । ब्रह्मणेति । ब्रह्मप्रोक्षिता एव भवन्ति । हविष्कृदेहीति
ब्राह्मणस्य वदति हविष्कृदागहीति राजन्यस्य हविष्कृदाद्रवेति
वैश्यस्य । हविष्कृदेहीति पर्जन्य एवैष उक्तो भवत्यथाप्युदा-
I. 9. 12. हरन्ति हविःसꣳस्कारीमेवैतदाहेति[3] । दृषदुपले दृषारवेणोच्चैः
समाहन्तीति । विज्ञायते ब्राह्मणमुच्चैः समाहन्तवा आह

१ Thus (उर्वस्थि, not ऊर्वस्थि) all. Sāyaṇa remarks: छान्दसो ह्रस्वः ।

२ Thus Sāyaṇa (cit.), °पर्वमात्रो Ben, °पर्वडर्संमितो Be G, °पर्व-संमितो U G (sec. m.), °पर्वसंमितो H. Sāyaṇa comments: अंगुष्ठस्य पर्वः पर्व पर्वणा संमितः अंगुष्ठपर्वपरिमाण इत्यर्थः ।

३ Thus Ben Sāy., °संस्कारामे° D C, °संस्कारिमे° U (pr. m.), °संस्कारिणमे° Be H G U (sec. m.). Sāyaṇa remarks: हविःसंस्कारिणमु मुख्यं हविष्कृतं इति संस्कारीमिति छान्दसः ।

विजित्यै। यावन्तो ऽस्य भ्रातृव्या यज्ञायुधानामुद्यतानामुप-
द्रष्टारस्ते [1]पराभवन्तीति। द्विर्द्विर्दृषदि सकृत्सकृदुपलायां[2]।
नवकृत्वः संपादयतीति विज्ञायते। ॥ २५ ॥ त्रयोदशः ॥

अपाग्ने ऽग्निमामादं जहीति। को नु खल्वामाद्भवती-
त्यपराग्निरेवैष उक्तो भवति। निष्क्रव्यादꣳ सेधेत्यादहनाग्नि-
रेवैष उक्तो भवत्या देवयजं वहेत्याहवनीय एवैष उक्तो भवति।
को[3] नु[3] खलु कव्यवाहन इत्यन्वाहार्यपचन इत्येव ब्रूयाद्वि-
ज्ञायते यदग्ने कव्यवाहन पितॄन्यक्ष्यृतावृध इति। कुतो नु
4. खलु पिष्टानि संवपेत्कृष्णाजिनादित्येव ब्रूयात्संवपन्पिष्टानि
वाचं यच्छति। तामविद्वांसः[4] श्रपयतेत्येव वाचं विसृजते।
यो विदग्धः स नैर्ऋतो यो ऽशृतः स रौद्रो यः शृतः स
3. सदेव इति। साधुशृतꣳ श्रपयतीत्येवेदमुक्तं भवति। सं
ब्रह्मणा पृच्यस्वेति। विज्ञायते वाग्वै ब्रह्म[5] वाचैवैनमेत-
16. त्संपृणक्ति। क उ खलु हविः शृतꣳ[6] श्रपयत इति। यदेवै-
तदाप्येभ्यो[7] निनयत्येकताय स्वाहा द्विताय स्वाहा त्रिताय

---

1 U (sec. m.) ins. सर्वं but cp. TBr. III. 2. 5. 9.

2 द्विः and सकृत् once H Sāy.; सकृत् once G.

3 Thus Ben C D U (pr. m.), Sāyaṇa; क उ H, क उ Be U (sec. m.), क G.

4 With the visarga Ben G U D C Sāy., without Be H; I. 10: 13. 9 is to be corrected accordingly.

5 ब्रह्म H Be G U (sec. m.).

6 श्रुतं G D C U (sec. m.), Sāyaṇa (cit.).

7 Thus Ben U (pr. m.), Sāyaṇa (twice); यदेवैतद्वाप्ये° D C, यदेवै तमाप्ये° Be U (sec. m.), यदेवैतमाप्ये° G H.

स्वाहेति । को नु खल्वेकतः को द्वितः कस्त्रित इति । पिता पितामहः प्रपितामह इत्येके । पृथिव्यन्तरिक्षं द्यौरित्येके । ऽग्निरादित्यो वैद्युत इत्येके ॥ २६ ॥

अग्नेस्त्रयो ज्यायाꣳसो भ्रातर आसन्नित्येक[1] । ऋषय एतन्नामधेया[2] बभूवुरित्येके । ते देवा आप्त्यमसृजतेत्याप्त्य-नामधेया[3] देवा भवन्ति । क उ खलु पौर्णमास्यां पितृभ्यो
I. 19. 19. दीयत इति । यदेवैतच्छ्रोण्योर्निनयतीति[4] । किमभिघारितं
I. 87. 2. नु खल्वाज्यं भवतीति । सत्याभिघारितमित्येव ब्रूयाद्विज्ञायते
I. 87. 4. सत्येन त्वाभिघारयामि तस्य ते भक्षीयेति[5] । पञ्चानां त्वा वातानां यन्त्राय धर्त्राय गृह्णामीत्यनुदिष्टं वाता । विष्वग्वात एवैषां पञ्चमो भवति । पञ्चानां त्वर्तूनां यन्त्राय धर्त्राय गृह्णामीति हेमन्तशिशिरावत्र समासं गच्छतः । पञ्चानां त्वा दिशां यन्त्राय धर्त्राय गृह्णामीतीयमेवासावूर्ध्वा दिक् पञ्चमी भवति । पञ्चानां त्वा पञ्चजनानां यन्त्राय धर्त्राय गृह्णामीति देवा मनुष्या असुरा राक्षसा । गन्धर्वा एवैषां[6] पञ्चमा भवन्ति । चरोस्त्वा पञ्चबिलस्य यन्त्राय धर्त्राय गृह्णामीत्यय-

---

१ Thus (॰त्येके) C only, ॰त्येवे all the other MSS. and cit. by Sāy.

२ एवंनाम॰ Ben C D; ऋषयस्तांनाम॰ Be.

३ Thus G H Be U (sec. m.), ॰त्याप्त्यानाम॰ Ben D C U (pr. m.) Sāyaṇa.

४ Thus G U D C and cit. Sāyaṇa यद्देवै॰ Ben, यद्देवैन॰ Be.

५ इति om. G.

६ Thus Ben U D C, एषां H Be G, एवेषां a cit. by Sāyaṇa.

मेवैष आकाशस्तृतः पञ्चबिलो भवति । दिशो ऽस्य पञ्च बिलानि भवन्ति वायुर्मर्चणमित्यथाप्युदाहरन्ति संवत्सर एवापि चरुः पञ्चबिलो भवत्यृतवो ऽस्य बिलानि भवन्ति वायुर्मर्चणमिति । ॥ २७ ॥ चतुर्दशः ॥

अथाध्वर्योश्च होतुश्च प्रपदनमन्तरेण वेद्युत्करौ प्रागावृत्तो[१] ऽध्वर्युः प्रपद्यते प्रत्यगावृत्तो होताध्वर्युरनन्तरो ऽग्नेः स्यादार्षेयमसंप्रजानानस्य प्रवरं ब्रूहीति मनुष्वद्भरतवदनुवदित्येव ब्रूयाद्विज्ञायते मानव्यो हि प्रजा इति ब्राह्मणं । पुरोहितप्रवरो[२] वा[२] राज्ञो । ऽथाप्रज्ञातबन्धुराचार्यामुष्यायणमनुब्रवीताचार्यप्रवरमु[३] हैव[३] प्रवृणीताथ होतारं प्रवरयेत्पयसा दैवतमभिवर्धयेद्ध्रुवा स्विष्टकृतं व्यतिषज्यैवाङ्गुली[४] अवद्येदङ्गुष्ठपर्वमात्राणि[४] दैवतान्यवदानानि भवन्ति ज्यायांसि सौविष्टकृतान्यैडानि च । चतुर्धाकरणानि[५] मध्ये[५] प्रतिष्ठन्ति[५] । कृत्वा

१ प्राञ्चाट० G U.

२ Thus Be U (pr. m.) Sāyaṇa; ०प्रवरोव C D. ०प्रवरेव (omitting वा) H Be G (sec. m.) U (sec. m.). Is राजा to be read?

३ थाप्रज्ञात० G (sec. m.) D C U, the Viv. and Sāyaṇa; थप्रज्ञात० Be Ben H G (pr. m.).— ०बंधोरा० C and Sāyaṇa.— ०ब्रवीत० all (Sāyaṇa alone ०ब्रुवीत), cp. Āp. XXIV. 10 17. — ०प्रवरमुचैव C D and Sāyaṇa; ०प्रवरमुचवै G (sec. m.) U (pr. m.), ०प्रवरमुवै Ben, ०प्रवरमनुवैव Be U H; cp. Āp. l. c.

४ Thus G U D C and Sāyaṇa; ०वाङ्गुली चाव० H Ben, वाङ्गुलीरव० Be. The Viv. also has the dual.

५ These words are effaced in G.

I. 26. 8. छिद्रहतङ् स्रुचमद्भिः पूरयित्वान्तःपरिधि निनयेद्वैश्वानरे
हविरिदं जुहोमीति । किमु खल्वनुदितं[1] भवतीति प्रागा-
मृपाजिकात्संप्रैषादित्येव ब्रूयात् ॥ २८ ॥

किंदक्षिणमग्निहोत्रं दर्शपूर्णमासौ काम्या इष्टयः पशुबन्ध
इत्यु पदोहदक्षिणमग्निहोत्रमित्येके । अरावदक्षिणमग्निहोत्र-
मित्येके । यत्सायं जुहोति रात्रिमेव तेन दक्षिण्यां कुरुते ।
यत्प्रातरहरेव तेन दक्षिण्यं कुरुते । यत्ततो ददाति सा
दक्षिणेति । यदहोरात्रयोर्ददातीत्येवेदमुक्तं भवत्यथ दर्शपूर्ण-
मासयोरन्वाहार्यस्य पुरोडाशस्य च[2] चतुर्धाकरणं । विज्ञायते[3]
दक्षिणैवास्यैषाथो यज्ञस्यैव छिद्रमपिदधातीति । यथैवाद:[4]
सौम्ये ऽध्वर आदेशमृत्विग्भ्यो दक्षिणा नीयन्त एवमेवापि
II. 120. 4. दक्षिणं पुरोडाशं चतुर्धा कृत्वा बर्हिषदं करोति । वासोदक्षिणाः
काम्या इष्टयो या[5] अनादिष्टदक्षिणा[5] । गोदक्षिणः पशुबन्धो ।
III. 32. 10. नित्यो ऽन्वाहार्यो । अथो एतच्छालीकेः कथं वेदयन्ते पत्नी-
संयाजेषु सर्व एवोत्तरेण गार्हपत्यं परिक्रामेयुरित्यनभ्यावृत्यै-
वाथ पत्नीकरणहोमो होतव्यो भवत्यथ हैके राकां च सिनी-
वालीं च कुहूं चानुमतिं च पत्नीहोमं च नारिष्ठौ च होमौ

---

१ °हितानि H U G (pr. m.) Ben, °हिता C.

२ Given by U (pr. m.) only and by Sāyaṇa in a citation.

३ See TS. I. 7. 3. 1.

४ यथैवद Ben, यथापि Be.

५ Thus Ben G (sec. m.), याश्चानादि° H U D C G (pr. m.), इष्ट्य आनादि° Be; cp. XIII. 1: 120. 4.

पुरस्ताद्धृदयपतेरुपजुहोति सं पत्नी पत्या सुकृतेन गच्छतां यज्ञस्य युक्तौ धुर्यावभूताम् । संजानानौ विजहतामरातीर्दिवि ज्योतिरजरमारभेताꣳ स्वाहा ॥ दश ते तनुवो यज्ञ यज्ञियास्ताः प्रीणातु यजमानो घृतेन । नारिष्ठयोः प्रशिषमीडमानो देवानां दैव्येऽपि यजमानोऽमृतोऽभूत्स्वाहा ॥ यं वां देवा अकल्पयन्नूर्जो भागꣳ शतक्रतू । एतद्वां तेन प्रीणानि तेन तृप्यतमꣳहहौ स्वाहेति ॥ २९ ॥ पञ्चदशः ॥

अथेदमग्निहोत्रꣳ सायमुपक्रमं प्रातरपवर्गमाचार्या ब्रुवते । तस्योदाहरन्ति ज्योतिषी इमे संनिपतिते भवत आदित्यश्चाग्निश्च । ते न व्यवेयात्सायमाहवनीयमुद्धरन्पुरस्तात्प्रत्यङ्मुखो निवपेत्प्रातराहवनीयमुद्धरन्पश्चात्प्राङ्मुखो निवपेत्सायमग्निहोत्रꣳ होष्यन्नग्रेण परीत्य जुहुयात्प्रातरग्निहोत्रꣳ होष्यन्नपरेण परीत्य जुहुयादेवमप्येते ज्योतिषी अव्यवेते भवतो ऽथायमुद्धरण-मन्त्रो वाचा त्वा होत्रा प्राणेनोद्गात्रा चक्षुषाध्वर्युणा मनसा ब्रह्मणा श्रोत्रेणाग्नीधैतैस्त्वा पञ्चभिर्दैव्यैर्ऋत्विग्भिरुद्धरामि भूर्भुवः सुवरुद्ध्रियमाण उद्धर पाप्मनो मा यदविद्वान्यच्च विद्वाꣳश्चकार । अह्ना यदेनः कृतमस्ति पापꣳ सर्वस्मान्मोद्धृतो मुञ्च तस्मादिति सायꣳ । रात्रिया यदेनः कृतमस्ति पापꣳ सर्वस्मान्मोद्धृतो मुञ्च तस्मादिति प्रातरग्निं निदधात्यस्तताहुति-मस्ततायां जुहोम्यग्निं पृथिव्यामस्ततस्य जित्यै । तथान्तं[1]

१ Corrected ; वेत्रा॰ MSS.

काममितो जयेम प्रजापतिर्ँ प्रथमो जिगायाग्निमग्नौ वैश्वानरे ऽग्नतं जुहोमि स्वाहेति सायर्ँ सूर्यमग्नौ वैश्वानरे ऽग्नतं जुहोमि स्वाहेति प्रातरेतद्ध[1] वा अग्नेरग्निहोत्रं पयोहोम-
I. 73. 7. मितरद्धोम्यन्यथाहितमग्नीन्परिषिच्य हुत्वाचमनीयमेवैकं परिषिञ्चेद्धाव्यर्ँ सैव हुत्वा चाहवनीयमेवैकं परिषिञ्चैव परिषिञ्चेदित्येतदपरमथेदं परोक्षोपस्थानं भवतीहैव सन्तश्च सतो वो अग्नयः प्राणेन वाचा मनसा बिभर्मि। तिरो मा सन्त-
I. 77. 6. मायुर्मा प्रहासीज्ज्योतिषा वो वैश्वानरेणोपतिष्ठ इत्यथेमार्ँ समिधं प्रवसतस्तूष्णीमभ्यादध्यात्प्रवसन्याजमानं[2] कुरुते ॥३०॥

अथेमर्ँ समस्तहोमं यायावरधर्मेण विद्यमानमाचार्या ब्रुवते तत्रोदाहरन्ति यायावरा ह वै नामर्षय आसर्ँस्ते ऽध्वन्यग्न्याभ्यर्ँस्ते[3] समस्तमजुहवुस्तस्माद्यायावरधर्मेणाध्वनि[4] समस्तर्ँ होतव्यं तस्मान्निमित्तो[5] होमः सर्वेष्वनेन वा निमीलनेन वोपसमाधानेन वान्तर्दध्यात्स्थूद्रगव्या[6] अग्निहोत्रं

---

१ च ins. Be G (sec. m.); C om. च (प्रातरेतद्धा)।

२ प्रवसन्त्या० G (sec. m.) and the Viv.

३ Thus Ben H U D G (pr. m.), ०ध्विन्य० (i.e. ०ध्वन्य० ?) Be G (sec. m.). Instead of ०न्याभ्यन् Be ०न्याभ्यन्।

४ ०धर्ष्विनि Be G (sec. m.).

५ Uncertain; ०स्मान्निमित्तो Be C D U G (pr. m.), ०स्मिन्निमित्तो G (sec. m.), ०स्मान्निमित्तो Ben H.

६ Conjecturally; ०द्रव्याया च० H G (pr. m.) U (sec. m.), ०द्राव्याया च० Ben D C U (pr. m.), ०द्रव्यापि० Be G (sec. m). Probably we have here the genit. (dative) of ०गवी, cp. चषपवगवी, मधुगवी।

जुहुयान्नाहितायै न मृतवत्सायै न वत्सायै न वाष्किन्यै[1] न वान्यायै न वान्यवत्सायै नानुदेश्यप्रतिगृहीतायै[2] नानुस्वरणी-प्रतिगृहीतायै[3] नैकस्मै दुग्धेन बहवो जुहुयुर्न बहूनामेवैको[4] दुग्धं लभमानस्योपसादनप्रभृति स्कन्नानुमन्त्रणं भवति दीप्यमानेष्वहूयमानेषु[5] यावन्त्यग्निहोत्राण्यभ्यतिक्रान्तानि[6] स्यु-स्तानि प्रतिसंख्याय प्रतिजुहुयात्स यद्यनस्तमिते जुहुयात्पुन-रेवास्तमिते जुहुयादथ यदि महारात्रे जुहुयात्पुनरेवोषसं जुहुयादिति ॥ ३१ ॥ षोडशः ॥

कथमु खलु जीवपितुः पिण्डदानं भवतीति येभ्य एव पिता ददाति तेभ्यः पुत्रो ददाति द्वाभ्यां जीवपिता दद्यात्त्र्येकस्मै जीवपितामहो ददाति न जीवन्तमतिदद्या-दित्येके पितृव्यस्य चेत्सगोत्रस्य दायमुपयच्छेत[7] कथं तत्र पिण्डदानं भवतीति यस्मिन्काले पित्रे पिण्डं ददाति

---

१ Emended; वशान्यायै Be G Ben U, वाम्यायै H D, वाष्कलायै C.

२ I am uncertain if we are to read here also यमूदेश्य (cp. XXIV. 13: 197. 6); नानुदेश्य° Be Ben C D, °नानुदेश्य° G U, नानुवेश्य° H; यमुदेश्य one copy of the Viv., यमूदेश्य another.

३ These words found in Ben D C U only; they are mentioned in the Vivaraṇa.

४ एव effaced in G.

५ Thus Be H G; °मानेष्वहूय° D C, °मानेष्वहुय° Ben U; cp. Rudradatta on Āp. IX. 8. 5.

६ स्युः om. Ben U (pr. m.) C.

७ यच्छेत G (sec. m.) only; cp. XX. 10: 23. 12.

तस्मिन्काले ऽस्य पिण्डं निपृणुयाद्य चेदसगोत्रस्य दायमुप-
यच्छेत[1] कथं तत्र पिण्डदानं भवतीति । स्वेभ्यो दत्त्वा प्रतिवेशं
बर्हिः स्तीर्त्वा बर्हिःप्रभृति पिण्डं दद्यादपि वागार एव स्थाली-
पाकꣳ श्रपयित्वा बर्हिःप्रभृत्येव पिण्डं दद्यात्कथमु खलु
पुत्रिकापुत्रस्य पिण्डदानं भवतीत्येतत्ते ऽमुष्मै तत मम पिता-
मह ये च त्वामन्वेतत्ते ऽमुष्मै पितामह मम प्रपितामह ये च
त्वामन्वेतत्ते ऽमुष्मै प्रपितामह मम प्रप्रपितामह[2] ये च
त्वामन्विति । प्रविदानकल्पेन वा दद्यात्स्वधा पितृभ्यः पृथिवी-
षद्भ्यः स्वधा पितृभ्यो ऽन्तरिक्षसद्भ्यः स्वधा पितृभ्यो दिविषद्भ्य
इति । पितुश्चेत्पितामहस्य प्रपितामहस्येति नामानि न
जानीयात्कथं तत्र पिण्डदानं भवतीति । प्रविदानकल्पेन वा
दद्यादपि वैतत्ते तत ये च त्वामन्वेतत्ते पितामह ये च
त्वामन्वेतत्ते प्रपितामह ये च त्वामन्वित्युत्तरं आयुषि लोम
I. 81. 2. छिन्दीतेति । कस्मिन्नु खल्वेतत्काले छेत्तव्यं भवतीत्यूर्ध्वꣳ
षट्षष्टिभ्यश्च[3] वर्षेभ्यो ऽष्टाभ्यश्च मासेभ्य इत्येतस्मिन्नेवैतत्काले
छेत्तव्यं भवतीति[4] । कथमु खल्वनाहिताग्नेः पिण्डपितृयज्ञो
भवतीत्यनिध्मꣳ स्थालीपाकꣳ श्रपयित्वाग्निमुपसमाधाय

---

१ यच्छेत G (sec. m.) only; cp. XX. 10: 23. 12.

२ Thus G (sec. m.) only; all the other MSS. om. the first. प्र ।

३ Thus Ben C U (pr. m.); षड् षष्टिभ्य D, षट्षष्टिभ्यो H G U (sec. m.), षष्टिभ्यो Be.

४ Thus Ben D C U (pr. m.); भवति om. H Be G U (sec. m.).

संपरिस्तीर्याज्यानीर्हुत्वा दक्षिणेनाग्निं दक्षिणाग्रं बर्हिः स्तीर्त्वा बर्हिःप्रभृति पिण्डं दद्यादपि वागार एव स्थालीपाकं श्रपयित्वा बर्हिःप्रभृत्येव पिण्डं दद्याद्यज्ञोपवीत्येव प्राजापत्ययर्चैतमग्निमुपतिष्ठेतेति । ॥ ३२ ॥

5. यथो एतद्बौधायनस्य कल्पं वेदयन्ते हविष्कृता वाचं
विसृज्याज्यानीर्जुहुयात्कस्मिन्नु खल्वेनाः काले जुहुयादिति ।
प्रस्कन्दनान्तं कर्म कृत्वैतस्मिन्नेनाः काले जुहुयात्कथमु खल्व-
नाहिताग्नेराग्रयणं भवतीत्यनिरुप्तं स्थालीपाकं श्रपयित्वा-
ग्निमुपसमाधाय संपरिस्तीर्याघारावाघार्याज्यभागाविष्ट्वाग्रयण-
देवताभ्यः स्विष्टकृच्चतुर्थीभ्यो जुहुयात्कामं[1] पुरस्तात्स्विष्टकृतो
3. ऽज्यानीरुपजुहुयात्तस्यैतेनैव मन्त्रेण प्राश्नीयाद्भद्रान्नः श्रेयः
समनैष्ट देवा इत्यपि वा श्रुतवतो ब्राह्मणस्य हुतोच्छेषणा-
5. त्प्रिप्येत । समानः प्राशनमन्त्रः । कथमु खल्वन्तर्विराजं बहि-
र्विराजमन्तर्बहिर्विराजमिति जानीयादित्यनेनोपस्थाय विराज-
क्रमैरुपतिष्ठेत प्रोष्य[2] पुनरागम्य[3] विराजक्रमैरुपस्थाय नित्ये-
नैवोपतिष्ठेतैतेनैव[4] बहिर्विराजमुक्तमन्तर्बहिर्विराजं चेति । सो
16. ऽधः संवेश्यमाङ्गवाध्यस्यूपायौ प्रवसति । विपरीतनामधेय एष

[1] Thus G (sec. m.) only; काम Be, कामं D, कामुं C. कामे U, कामं Ben, कामं H.

[2] Thus G, पोष्य Be D, प्रोष्यन् Ben C U, प्राप्य H.

[3] °गम्य G and U (sec. m.).

[4] चापि instead of the last एव Ben D C U (pr. m.).

I. 86. 5 भवति । स खिद्यपेदं प्रायश्चित्तं मध्ये[1] पतितमाश्विनो द्विक-
पालस्तमन्तमेव[2] परिणये । दीक्षणीयायां चेन्नश्येत्प्रायणीयामनु-
वर्तेत । प्रायणीयायां चेन्नश्येदातिथ्यामनुवर्तेतातिथ्यायां चेन्न-
श्येदग्नीषोमीयस्य पशुपुरोडाशमुत्तरमुत्तरं[3] तन्त्रमनुवर्ती[3]
स्यादथ चेदग्निर्दीक्षणीयायां नश्येत्कस्मिन्नु खल्वेनं काले
निर्वपेदिति । दीक्षाकृतौ कृत्वैतस्मिन्नेनं काले निर्वपेदपि वा
III. 54. 4. प्रागौद्ग्रहणाद्यथो एतद्बौधायनस्य कल्पं वेदयन्ते प्रवसतः
प्रस्तरेणैवास्य सह यजमानभागमनुप्रहरेद्ध्रुवायै वाज्येन पर्यु-
पस्तीर्य[4] जुह्वामवधाय जुहुयात्प्रस्तरभूयं यजमानभागो गच्छ-
तीति प्रवसतः प्रस्तरेणैवास्य सह यजमानभागमनुप्रहरेदिति ।

॥ ३३ ॥ सप्तदशः ॥

III. 55. 4. अथायं पशुः सोपवसथस्तस्य कः कर्मण उपक्रमो भवती-
त्यजस्रैरग्निभिरुदवसाय षड्ढोतारꣳ[5] हुत्वा यूपाहुतिꣳ हुत्वा
यूपꣳ सयजुषं कृत्वा[5] वेदिं विमाय व्रतोपायनीयमग्निलाग्नी-
ध्रादध्याहृतमुपेयादिध्माबर्हिः संनह्योपवसेदथ प्रातराग्नेयेना-
ष्टाकपालेन यजेतेति नु बौधायनस्य कल्पो । नाग्नीन्धा-

---

१ मध्य H Be G U D C.

२ Thus (॰स्तमंतमेव) G H U (sec. m.), ॰स्तंतमेव C, ॰स्तमतमेव Be, ॰स्तमेव Ben U (pr. m.) D.

३ Thus Ben U (pr. m.) D C; ॰मुत्तरमुत्तरं तथेममनु॰ Be U (sec. m.), ॰मुत्तरं तथेममनु॰ H G (pr. m.), ॰मुत्तरं तंत्रमनु॰ G (sec. m.).

४ वा ins. G Be U (sec. m.) H, not Ben D C.

५ The words षड्ढोतारं unto कृत्वा are given by G (sec. m.) after उपेयात् (l. 15).

दध्याच्छृतमुपेयात्पाणी संमृशीत । परिस्तृणीयात्पात्राणि निर्णिज्य सङ्सादयेद्ब्रह्माणं दक्षिणत उपवेशयेत्तूष्णीं[१] । प्रणीते त्वौत्तरवेदिके मन्त्रेणोपविशेत्प्राचणीः सङ्स्कृत्य पात्राणि प्रोक्षेदाज्यं निरुप्याधिश्रित्य पर्यग्नि कृत्वा स्फ्यहस्तः प्राङेत्य स्तम्बयजुर्हरेत्त्रिर्द्धमत ऊर्ध्वमथ प्राञ्चावेरण्योरग्नीन्समारोह्योदवसाय मथित्वाग्नीन्विहृत्यैवमेव[२] षड्ढोतारङ् हुत्वा यूपाहुतिङ् हुत्वा यूपङ् सयजुषं कृत्वा वेदिं विमायाग्नीनन्वादध्याच्छृतमुपेयाद्दिशाबर्हिः संनह्येत्पाणी संमृशीत । परिस्तृणीयात्पात्राणि निर्णिज्य सङ्सादयेद्ब्रह्माणं दक्षिणत उपवेशयेत्तूष्णीं । प्रणीते त्वौत्तरवेदिके[३] मन्त्रेणोपविशेत्प्राचणीः सङ्स्कृत्य पात्राणि प्रोक्षेदाज्यं निरुप्याधिश्रित्य पर्यग्नि कृत्वा गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा समिद्वत्याहवनीये पूर्णाहुतिङ् हुत्वा स्फ्यहस्तः प्राङेत्य स्तम्बयजुर्हरेत्त्रिर्द्धमत ऊर्ध्वम् । ॥ ३४ ॥

स्फ्यो यूपो भवतीति । कथमु खल्वस्य स्फ्यरधिमन्थने[४] यूपप्रकल्पे[४] इति[४] भवन्तीत्येतस्यैवावतस्फ्युयादपि वान्यस्य

१ Thus Ben C D U (pr. m.), तूष्णीकं G Be H U (sec. m.).

२ After विहृत्य G ins. (on the margin): षड्ढोतारं हुत्वा यूपं सयजुषं कृत्वा वेदिं विमाय ग्नोपावनीयमग्निमाग्नीनन्वादध्याच्छृतमुपेयाद्दिशाबर्हिः संनह्येत् ।

३ त्वौत्त॰ Be.

४ Not wholly certain; ॰संवनेयूपप्रकल्प इति Ben U C D G (pr. m.), ॰संवनयूपप्रकल्पे इति H G (sec. m.), ॰संवनेयूपप्रकल्पमिति H. The Vivaraṇa, although not clear, gives ॰मन्थने as viṣayasaptamī. It seems more probable we have here a dual.

तज्जातीयस्य वृश्चेत् कुर्याद्यथास्य एष भवति । प्रोक्षणप्रभृति मन्त्रान्साधयेद्वा परिव्ययणात्तृतीयवेलायां परिव्ययेद्वसुपरमंमितायां । पञ्चारत्निप्रभृतयः पाशुबन्धिका यूपा भवन्त्या नवारत्नेर्नवारत्निप्रभृतय आग्निष्टोमिका यूपा भवन्त्येकविंशत्यरत्नेस्त्र्यरत्निश्चतुररत्निर्वा निरूढपशुबन्धस्य पालाशो यूपः । किंनु खलु प्रवसतः पशुबन्धः सिध्यती३[1] न सिध्यती३[1] इति । सिध्यतीत्येक आहुरथ हैक आहुर्न सिध्यतीति । लोकाग्नीन्खल्विमान्द्वितीयमन्याधेयं ब्रुवते । न[2] तु खलु[2] प्रवसतः पशुबन्धः सिध्यतीति । ॥ ३५ ॥ अष्टादशः ॥

कियन्नु खलु पशुबन्धे याजमानं भवतीति । व्रतोपायनव्रतविसर्जने[3] यज्ञस्य पुनरालम्भ । आज्यावकाशांस्तु हैके ब्रुवत उपप्रैषाश्रावण इति । किंदेवत्यं[4] नु खल्विदं भवतीति । मृत्युदेवत्यमित्येव[4] ब्रूयादथेमाः पशुबन्धे षट् प्रोक्षण्यस्तास्तु[5] मन्त्रवत्यस्तिस्रस्तूष्णीकाः । यवमतीरिन्द्रघोषवतीः पशुप्रोक्षणीरिति तूष्णीकाः । पशुपुरोडाशीयप्रोक्षणीः पात्रप्रोक्षणीरिध्माबर्हिःप्रोक्षणीरिति मन्त्रसंस्कृताः । पशुबन्धे वेदा-

१ Pluti signs only in Ben C D U.

२ ननुखलु Be G, ननुखलु Ben, ननुखलु H, नखलु U C, न D.

३ व्रतोपायने Be ( instead of °पायन° ) ।

४ Thus corrected (in accordance with the TS.) : °दैवतं or दैवतं the MSS.

५ त्रि U (sec. m.).

ऽभागावुदाजिहीर्षेत्कस्मिन्नु खल्वेनौ काले चरेदिति ।
स्वाहाकृतिप्रैषेण चरित्वा प्राश्नपायै । पुरस्तात्स्वाहाकृतयो वा
अन्ये देवा उपरिष्टात्स्वाहाकृतयो ऽन्य इत्यादित्यस्यैवैते रश्मयः
3. प्राचीनाश्च प्रतीचीनाश्च भवन्त्यथायं पशुपुरोडाशस्तस्य कः
कर्मण उपक्रमो भवतीति । जघनेन गार्हपत्यꣳ स्फ्यं निद-
ध्यात्स्फ्योपरि पात्रौ । पात्र्यां प्रौचीनावपेक्ष्यूपादानप्रभृति
कर्मान्तस्तायत आप्यनिनयनान्तो । जघनेन गार्हपत्यमाप्येभ्यो
निनयेत्प्राक्प्रणीप्रैषेण पुरोडाशीयानि[1] पिष्टानि संयौयादेवꣳ[2]
सवनीयानां । यथो एतद्बौधायनस्य कल्पं वेदयन्ते ॥ ३६ ॥

निरवदायैवास्य स्विष्टकृतमिडामवद्येत्कथमन्न चतुरवत्तं
भवतीत्युपस्तीर्य पुरोडाशं द्वेधा कृत्वाभिघारयेदेवमस्य[3] चतु-
रवत्तं भवत्यथ हैक आचार्या एकादश धर्मान्पशुबन्ध उदा-
द्यन्त्यन्वाधानं व्रतोपायनं पृष्ठ्यां प्रणीतां याजमानमाज्य-
भागौ प्राशित्रं यजमानभागब्रह्मभागौ चतुर्धाकरणं विष्णु-
क्रमानिति । कियन्तु खलु पशुबन्धे दर्विहोमा दृष्टा भवन्तीति ।
17. षड्ढोता यूपाहुति स्तोक्या दिशांप्रतीक्ष्यौपयज इति । किंदे-
?. वत्या उ खलु मनोता भवतीत्याग्नेयीत्येव ब्रूयात्किंदेवत्य उ
खलु वनस्पतिर्भवतीति । वैष्णव इत्येव ब्रूयाद्विज्ञायते वैष्णवा
वै वनस्पतय इत्यथाप्युदाहरन्ति यज्ञो वै विष्णुरित्यथायं

---

१ पुरो॰ Ben G (sec. m.), पौरो॰ the other MSS.

२ Thus U H Be G ; संयुयादेवं Be. संयुत्यादेवꣳ C.

३ ॰स्य Ben U (pr. m.), D C.

पशुः सार्ववैष्टुभो भवत्येकादश प्रयाजा एकादशानूयाजा एकादशकपालः पशुपुरोडाश एकादशावदानान्येकादशोपयाजा इत्येवं पशुः सार्ववैष्टुभो भवति । यथो एतच्छालीकेः कल्प[1] वेदयन्ते ऽरण्योरग्नीन्समारोह्योद्वसेत्[2] चेत्तच चेष्टममादित्यो ऽभ्यस्तमियात्कथं तत्र प्रायश्चित्तं सिध्यती३[3] न सिध्यती३[3] इति । सिध्यतीत्येक आहुरथ हैक आहुर्न सिध्यतीति । यस्याभिपरीत एष[4] आकाशो भवति । नैव सिध्यतीतीत्था[5] अयं पशुः सार्ववैष्टुभो व्याख्यातः । ॥ ३७ ॥

एकोनविंशः ॥

अथातः काम्यान्पशून्व्याख्यास्यामः । को नु खल्वेषामुपांशुपशु भवतीति । य एवाश्वमेधिकाः प्राजापत्याः सावित्राः सारस्वताः पौष्णा याम्याः पितृदेवत्या द्यावापृथिव्या वायव्याः सौर्या वैश्वकर्मणा इति । गर्भिण्यो भवन्तीति कथमत्र प्रायश्चित्तं सिध्यती३ न सिध्यती३ इति । सिध्यतीत्येक आहुरथ हैक आहुर्न सिध्यतीत्येतत्समुद्दूय एता भवन्ति । नैव सिध्यतीत्यादित्यां मल्हां गर्भिणीमालभत इत्यृषिनामधेयमेवैत-

---

१ The kalpa of Śāliki here alluded to I have not traced in our Dvaidhapraśnas; the prāyaścitta is, according to the Vivaraṇa, the one treated of in XIV. 24 init.

२ Thus G (sec. m.) Be; °समारोप्यो° the other MSS.

३ Pluti signs not given by all the MSS. here and infra.

४ एष om. H Ben C.

५ सिध्यतीतीत्था H, सिध्यतीतित्था (or था) or सिध्यतित्था the other MSS.

ह्वयत्यपक्रन्दती[1] भवतीत्यश्नीनदतीत्येवेदमुक्तं भवत्येवं ह्यर्षभा संवत्सरमभि विहिता[2] । प्राजापत्य[3] एवैषां ककुद्मन्मो भवतीति[4] । कथमत्र ब्रह्मचर्यꣳ सिध्यती३ न सिध्यती३ इति । सिध्यतीत्येक आहुरथ हैक आहुर्न सिध्यतीति । संतिष्ठते नैव सिध्यतीति । पर्यारिणी भवतीति । परिहारसूरित्येक आहुरथ हैक आहुरनुजैवैषोक्ता भवति । वेहदित्येतामाचक्षते । ॥ ३८ ॥

सोमापौष्णं चैतमालभेतेति । त्रयाणामेवैष उक्तो भवत्यथाप्युदाहरन्ति यस्तिस्रो धयतीति । ताꣳ वडवमालभेतेति । यमेवैतं पुमाꣳसꣳ सन्तमधिरोहति स वडवो । विषम आलभेतेति । देवयजनं[5] वा विषमꣳ स्याद्यस्मिन्वा पशुमालभेतापां चौषधीनां च सन्धावालभेत इत्युदकान्त इत्येक आहुरथ हैक आहुः प्रावृषि वा शरदि वेति । यस्याश्विने शस्यमाने सूर्यो नाविर्भवति सौर्यं बहुरूपमालभेतेति । प्रायणीये चेदतिरात्रे न दृश्येतारम्भणीयस्याꣳ मन्त्रणीयस्योपालम्भ्यं

१ Uncertain; इत्यपीनाम॰ Be, इत्यृपिनाम॰ Ben C G D, इत्युपिन॰ H, इत्यृहिनाम॰ U (pr. m.), इत्यहिनाम॰ U (sec. m.). Read perhaps इत्यश्नीनामधेय॰ ?

२ Thus Ben C D G (pr. m.), विहिताः Be U H G (sec. m.).

३ Thus Ben C U D G (pr. m.), ॰पत्या Be H G (sec. m.).

४ इति only in Be.

५ Before देव॰ all the MSS. exc. Be ins. बहु or च ।

कुर्यादथ चेदुदयनीये ऽतिरात्रे न दृश्येतैकाहिके वानूबन्ध्य-स्योपालम्भ्यं कुर्युरपि वोदवसायैवैतेन पशुना यजेरन्नितौम्न्या[1] इमे काम्याः पशवो व्याख्याताः । ॥ ३९ ॥ विंशः ॥

॥ इति चतुर्विंशः प्रश्नः ॥

---

१ ०तौम्न्या some of the MSS. ; इति इम्या Viv.

कथमु खलु यावज्जीवप्रयुक्तानां चातुर्मास्यानामनुप्रयोगो भवतीति । फाल्गुन्यां वा चैत्र्यां वा पौर्णमास्याᳪ᳭ शुनासीरीयपर्वणा यजेताथ वैश्वदेवायोपवसेद्वैश्वदेवेनेष्ट्वा पौर्णमासवैमृधाभ्यां यजेताथ चेदिष्ट्या पशुना सोमेन वा यजेत कथं तत्र कुर्यादिति । प्रतिकृष्यैतस्य पर्वणः शुनासीरीयपर्वणा यजेताथैतेषामेकेन यजेताथ वैश्वदेवायोपवसेद्वैश्वदेवेनेष्ट्वा पौर्ण-
b. मासवैमृधाभ्यां यजेतेति । यथो एतद्बौधायनस्य कल्पं वेदयन्ते यावज्जीवप्रयुक्तान्येव चातुर्मास्यानि स्युरन्तर्मिथुनानि । प्रथमे त्वेव संवत्सरे व्रतं चरेदिति कथमचेष्टिपशुबन्धा इति । काममिष्ट्या कामं पशुबन्धेनेति । क्व उ खलु चातुर्मास्यानि समासं गच्छन्तीति । राजसूये च चातुर्मास्येषु च सोमेष्वित्येव ब्रूयादथाप्युदाहरन्ति द्वादशाहेऽपि चातुर्मास्यैर्यजेत । वैश्वदेवेनेष्ट्वा[1] चतुर्थ्यां वरुणप्रघासैरष्टम्यां च[2] नवम्यां च साकमेधैर्द्वादश्याᳪ᳭ शुनासीरीयपर्वणा यजेतेति । विज्ञायते संव-
5. त्सरप्रतिमा वै द्वादशरात्रयो भवन्तीति । चित्रहविर्भवतीति । तूष्णीकानि ह्यन्तराणि भवन्तीति मन्त्रवद्[3] ह[3]वाद्यमेतदेव[3]
3. यदन्यचेष्टिसंनिपाते[3] विपरीतं भवतीति । क्व उ खलु करम-

1 Before वैश्व॰ D G U C ins. प्रथमायां, which, strictly spoken, is superfluous.

2 च om. U G D Ben C and Rudradatta on Āp. VIII. 1. 2; it is found in Be H and the Vivaraṇa.

3 Thus G; D Ben (pr. m.) U (pr. m.) C present the same reading, leaving out only च; U (sec. m.) Ben (sec. m.) Be ins. चतद्‌ः between मन्त्रवद् and उ: H reads as G, only ॰मद्रेवमाद्धन्यचे॰ : Ben ॰वद्देतदुर्वान्विनेतदुपमद्न्यचे॰, Be ॰वद्देहतदुरवान्वमेतदुपमद्न्यचे॰ ।

पात्राणि प्रथमं मन्त्रं लभन्त इति । प्रोक्षण[१] इत्येव[१] ब्रूयात्तेह हविर्भिः करम्भपात्राण्यभिपर्यग्नि कुर्यात् । किंदेवत्यानि नु खलु करम्भपात्राणि भवन्तीति । वारुणानीत्येव ब्रूयाद्विज्ञायते ऽन्यमेव[२] वरुणमवयजत इत्यस्तं प्रेत सुदानव इति यद्वाम्प्रेक्षे-
III. 72. 1. तेत्येवेदमुक्तं भवति । तौ व्यतिषारं स्तम्बयजुषी हरेयाता-मितस्यामुतस्य[२] यन्तं[३] प्रतिप्रस्थाताध्वर्युं परिगृह्णीयात्तं[४] निरु-प्तस्य प्रतिप्रस्थातापो निःषिच्याध्वर्योराज्यस्य[५] वाचयेदथोभयो-रतिप्रणयनादादायाध्वर्युः स्वमिध्ममपक्रम्यैव तिष्ठति । ॥ १ ॥

अथायं प्रतिप्रस्थाताऽन्तरेणोभे[६] चाहवनीयं चोपातीत्य स्वमिध्ममाददीत । तावपसलैः[७] पर्यावृत्येध्मौ हरेयातामथा-मुतः[८] प्रदक्षिणमावृत्येध्मौ प्रतिष्ठाप्यैतेनैव यथेतमेत्य प्रतिनि-

१ Thus Be G (sec. m.), the Viv.; प्रोक्षणाप्रभृतीत्येव U G (sec. m.) Ben H, प्रोक्षप्रभृत्येव D, प्रोक्षप्रभृत्येव C.

२ Thus all, cp. the Calcutta edition of TS, vol. II. p. 41. l. 5 from bottom (TBr. I. 6. 5. 4 ? ).

३ ॰चायंतं Be G U (pr. m.).

४ Thus G U (sec. m.) and the Viv.; प्रतिप्र॰ D C U (pr. m.) Be Ben; H om. the prepos.: cp. Āp. VIII. 5. 12.

५ ॰ध्वर्युरा॰ H Ben (pr. m.). -After वाचयेत् C D Be G U (pr. m.) ins. च, U (sec. m.) चार्थे।

६ Thus Ben H U (sec. m.) and the Vivaraṇa: ॰न्तरेणोत्तरेण Be G C U (pr. m.) D.

७ Thus G U C and the Viv., the other MSS. om. तौ।

८ परिहरेयाताम॰ U (sec. m.).

वैंष्टयते प्रतिप्रस्थातान्तरेण वेदी प्राचीनमुपयमनीहारो[१] ।
ऽथेमा अध्वर्योः प्रोक्षणी दक्षिणेन प्रतिप्रस्थातारं परिगृह्या-
सादयेदेवमेताभिरनभिपरिहृतो भवत्यथेयं[२] मारुती दक्षिणां
वेदिं गच्छति सप्तमी[३] हविषामधिश्रीयते[३] । कथमेतयाव्य-
वेतानि भवन्तीति । प्रतिकृष्येनामग्रेण दक्षिणेन[४] हवींष्यु-
नभिघारितामुद्वासयेदथैनां पुनरधिश्रित्याभिघारितामुद्वा-
स्यान्तर्वेद्यासादयेदेवमेतान्यव्यवेतानि भवन्त्यथायं प्रतिप्रस्थाता
मारुत्यै दैवतस्य मरुद्भ्यो देवानुवाचयेत्तदाश्रावयेदथान्यथाध्वर्योः
कृतानुकारो भवतीति । तद्यदिहाश्रावयतीह[५] यजतीति
तत्प्रतिप्रस्थाता कृतानुकार एव भवत्यथेदं मारुत्यै मेषण-
3. मग्रेणौत्तरवेदिकमग्निं[६] परिगृह्यानुप्रहरेद्यथो[७] एतदौपमन्यवस्य

१ Thus G U C D, °थमनिषारो the other MSS.

२ इति after भवति ins. D U Ben C.

३ Uncertain reading and meaning, the Vivaraṇa of this passage is missing. G (sec. m.) reads as given above; सप्तम्यष हविषामधिश्रि° Ben (pr. m.) C, सप्तम्या हविषामधिश्रि (or श्र)यते Bo U (sec m.) Ben (sec. m.) G (pr. m.), सप्तपश्यविषधमिश्रयते H

४ Instead of दक्षिणेन (thus G, Ben sec. m. Be) दक्षिणा U (sec. m.), दक्षिणानि C Ben (pr. m.) U (pr. m.) H D.

५ Thus Ben (sec. m.) G (sec. m.), the last MS ins. इति also after °श्रावयति) H (only °यजतिह) and the Viv. (reading यदी°): तद्यद्दाश्रा° Ben (sec. m.), तद्यहाश्रावयतीह Be, तद्यदिहाश्रावयतीति तत्-प्रतिप्रस्था° C.

६ °मेषोत्तर° Be H.

७ °पर्याहृत्यानु° U (sec. m.).

कल्पं वेदयन्ते तुषैश्च निष्कासेन चावभृथमवेयादिति दैवतं
प्रदाय स्विष्टकृतं प्रयच्छेत्तुषान्संप्रकीर्योदकान्तं प्रत्यस्येत्सिद्धमत
141. 18. ऊर्ध्वमथायं गृहमेधीय आज्यभागप्रतिपत्केडान्तः[1] संतिष्ठते।
74. 10. तत्र नास्ति प्राशित्रं। तूष्णीं[2] समन्ताच्छाकलान्परिधीनग्ना-
143. 18. वनुप्रहरेदभिवान्यायामविद्यमानायां संधिनीक्षीरं दोहये-
दिति। ॥ २ ॥ प्रथमः ॥

143. 17. अथायं महापितृयज्ञस्तस्य कः कर्मण उपक्रमो भवतीति।
बर्हिर्यजुषा कुर्याद्देवानां पितृणां परिषूतमसि देवपितृबर्हिर्मा
त्वान्वङ्मा तिरश्चपर्व ते राध्यासमित्यपहतो ऽरक्षः पृथिव्यै देव-
पितृयजन्या इत्यपहतो ऽरक्षः पृथिव्या अदेवपितृयजन इत्येव-
मेतेष्वधिकरणेषु कुर्याद्यत्र देवाश्च पितरश्च संनिगच्छेयुः।
पाणी संमृशीत। परिस्तृणीयात्पात्राणि निर्णिज्य सꣳसादये-
द्ब्राह्मणं दक्षिणत उपवेश्यात्रैवोत्तरत उदपात्रं निधाय जघनेन
गार्हपत्यꣳ स्फ्यं निदध्यात्तस्योपरि[3] पात्रीं। पात्र्यां व्रीहीना-
वपेच्छूर्पादानप्रभृति कर्मान्तस्तायत आप्यान्तो। जघनेन
147. 4. गार्हपत्यमाग्नेभ्यो निनयेद्विपरिक्रामन्त्यृत्विजो। ऽध्वर्यु-
रन्तरो ऽग्नेः स्यादथ यजमानो ऽथ ब्रह्माथाग्नीध्रो। ऽपि

---

१ Thus G U D Ben C, ॰त्केडान्त Be, ॰त्केडान्ता H : read ॰प्रतिपत्त्र इडान्तः ?

२ Thus (and cp. XXI. 3 : 74. 10) Ben U H, ॰च्छकला॰ D C, ॰च्छाकला॰ G (sec. m.) Be.

३ निधाय instead of निदध्यात् Ben U (sec. m.).

वाग्नीध्र एवान्तरो ऽग्नेः स्यादथ यजमानो ऽथ ब्रह्माथाध्वर्युर्विपरिहरन्ति हवींष्यग्रेण पुरोडाशं धाना जघनेन धानाः करम्भमित्येवं विपरिहृतानामेवैतेषां हविषामेकैकमुदायेत् । क उ खलु त्रैयम्बका निरुप्यन्त इत्युदाय्य हवींषि रुद्रायाम्बिकायै जुष्टं निर्वपामीति यस्य मन्त्रवन्तः । कायेति कायं निर्वपेत्कायानुब्रूहीत्यनुब्रूयात्कं यजेति यजेत् । क उ खलु त्रैयम्बकाणां सौविष्टकृतं भवतीति । यदेवातो भूत आयजतीत्यसमुदित ऋषभं ददातीति[1] । महाहविषामेवैषो ऽसमुदिते[2] दातव्यो भवति । सर्वमेव याजमानं पितृयज्ञ उत्सीदेत्यपशुबन्धे सौम्ये ऽध्वरे ऽन्यत्र तचोत्पत्तिवचनात्सर्वं[3] एवाग्नियाजमानो ऽग्निचये सर्वमेवाग्न्याधेयच्छन्दो[4] याजमानमग्न्याधेये । ॥ ३ ॥ द्वितीयः ॥

अग्निष्टोमेन यक्ष्यमाणः प्रथममात्मानं कुर्वीत । येनास्याकुशलं[5] स्यात्तेन कुशलं कुर्वीत । यान्यृणान्युत्थितकालानि स्युस्तानि व्यवहरेदनुज्ञापयीत वा । स पुरस्तादेवोपकल्पयते

१ इति om. Ben H.

२ Emended; समुदितो MSS.

३ Thus U Ben C D H; न्यत्रचोत्पत्ति॰ G and the Viv.; न्यत्रचोत्पत्ति॰ Be.

४ Thus G U (sec. m.) and the Viv.: ॰धेयच्छन्दो H Ben D C, ॰धेयच्छन्दसो Be.

५ Thus (and cp. XXIV. 12 : 195. 8) Be D U C, ॰नास्कुशलं G. ॰नाकुशलं Ben H.

I. 156. 6. प्रभूतं ह्येणवंꣳश एषाञ्चयꣳ स्याक्ष्मनं कुम्बं च कुरीरं चेति । विद्वस्तु ह कुम्बं भवति जायास्तु कुरीरं । द्वादशशतं दक्षिणानां । विज्ञायते छन्दोगब्राह्मणं वीरहा वा एष देवानां यः सोममभिषुणोतीति । शतेन वीरं निरवदयते । दशभिर्दश प्राणान्यैकादशी तयात्मानं । यैव द्वादशी सा दक्षिणात्यय[1] हैक एकविंशतिदक्षिणेन यजन्त एकविंशं यज्ञायज्ञिय-मिति वदन्तो । ऽथ हैके सप्तगुना यजन्ते सोमक्रयण्यातिथ्य-नूबन्ध्यास्वतस्रो[2] मध्यतस्तदपि दाशतये[3] विज्ञायते प्र सप्त-गुमृतधीतिं सुमेधामिति । ॥ ४ ॥

156. 9. अथातो देवयजनकल्पः । स एतद्देवयजनकल्पं जोषयते पुरस्तादुदकमनूषरमनुपहितमविस्रग्दार्यमिरिणमसुषिरमभङ्गु-रमवल्मीकं[4] बहुलौषधि[4] यथान्याअन्या ओषधयो व्यतिषक्ताः

१ दक्षिणेतय Bo Ben (sec. m.). On this passage cp. Pañc. br. XVI. 1. 12.

२ After •स्रो• G ins. (on the margin). •र्वेषेव, thus also the Vivaraṇa.

३ See Ṛgveda X. 47. 6.

४ •नुपहितम• Be G (sec. m ), the Viv.; •नूपहितम• the other MSS.--•विस्रग्दार्यमि• G and one copy of the Viv.; •विस्रग्दार्यमि• Ben and another copy of the Viv.; •विरंदार्यमि• U; these MSS. point to a reading अविस्र(ग)्दारि; •विस्रग्दीर्यमि• D, •वि(षि)स्र-ग्दीर्य(र्ये)मस्त° Ben C H D; these MSS. point to a reading अवि-स्रग्दार्यम्. Both readings occur equally in Baudh. pitṛmedha I. 4: 7. 14 (cp. Hir. pi. sū. I. 1: 33. 3). Gārgya Gopālayajvan comments: अविस्रग्दारि यत्र विविधं दारणं प्रदरादिकं विदारणं न भिन्न तदविस्रग्दार्यम्।—बहुलौषधि G U D C, the Viv.; •षधौ Be •षधिकं Ben •षधीकं H.

स्युः प्रागुदक्प्रवणं यथा शालासभारिणीरपः कुर्नातिप्रवणं यस्मादन्यत्पुरस्तात्समभिकं देवयजनं न विन्देयुस्तदेतां प्राचीनवंशां शालां मापयन्ति । कृत्तिकाः खल्विमाः प्राचीं दिशं न परिजहति[1] । तासां संदर्शनेन मापयेदित्येतदेकं । श्रोणासंदर्शनेन मापयेदित्येतदेकं । चित्रास्वात्योरन्तरेणेत्येतदपरं । दिक्षतीकाशा भवतीति[2] । द्वाभिरेवैषा[3] दिक्षतीकाशा भवत्यथाप्युदाहरन्ति[4] वंशानामेवातीकाशान्कुर्यादिति । द्वौ स्तोमौ प्रातःसवनं वहत इति[5] । त्रिवृत्पञ्चदशौ प्रातःसवनं वहतः । पञ्चदशसप्तदशौ माध्यन्दिनं सवनं । सप्तदशैकविंशौ तृतीयसवनमेष एव षट्स्तुष्टोमो भवति । चत्वारो हि स्तोमा भवन्त्येष एव सद्वादशस्तोमो[6] भवति । द्वादश हि[7] स्तोत्राणि भवन्ति । यथो एतदौपमन्यवस्य कल्पं वेद्यन्ते पुरस्तादेवैतस्यै विध्यगतेषु देवयजनमध्यवसेदियावते सा वा इयं सर्वैव वेदिरिति । ॥ ५ ॥ तृतीयः ॥

अथेममाश्वैष्णवमेके प्रागपुदीचायै भुवत उपरिष्टाद[8] ।

---

1 MSS., exc. H. •जहंति (•आहर्नति Be).

2 भवंतीति MSS., but दिक्षतीकाशा is adj., sc. शाला ।

3 •वैषां MSS.

4 Thus (भवति) U only, भवंत्य• H, भवंतीत्य• all the other MSS.

5 See TS. VII. 1. 1. 1.

6 Thus C and the Viv., all the other MSS. unanimously •स्तोमौ ।

7 Om. G U D C.

8 Thus Be G U D Ben (sec. m.); उपरिष्टादर्थं H Ben (pr.m.) and the Viv. one copy another, sec. m., originally reading उपरिष्टात्यं : the Viv. explains यथा कल्पं ।

क्त उ खलु दीक्षणीयायै बर्हिर्यजुषा कुर्यादिति व्युपनिधाय[1]
I. 159. 10. संभारान्प्राक् पाणिसंमर्शनात्स्व यजमानं व्रतमुपनयति न पत्नीं
संनह्यतीत्यध्वरदीक्षायै व्रतं प्रपद्यते । सर्वैवैषा व्रतोपायनीया
I. 159. 11. भवतीष्टिरयनु पत्नीसंनहनं । न यजमानभागं करोति न
ब्रह्मभागमित्याशीःसंयोजनावेवैतावुक्तौ[2] भवतः । किमुपक्रम-
माणो यज्ञमाशिषं वदेदित्यथापि सुभिक्षो व्रतोपायनीयस्य
भवतीति । कस्मै[3] किं सुभिक्षायावद्येद्यजमानभागस्य खलू-
त्सादनाद्ब्रह्मभाग उत्सीदति । संयुक्तौ ह्येतौ यजमानभागब्रह्म-
I. 159. 12. भागाविति । न बर्हिषदं पुरोडाशं करोति नान्वाहार्यं याच-
तीति । दक्षिणोक्तावेवैतावुक्तौ[4] भवतो । ऽन्या उ खल्विह
ib. दक्षिणाः प्रतिख्याता भवन्ति । न पत्नीकरणहोमेन चरति
न समिष्टयजुर्जुहोतीत्यन्तपरिक्रमिणावेवैतावुक्तौ[5] भवतः ।
I. 159. 13. किमुपक्रममाणो यज्ञमन्तं परिणयेदिति । न पूर्णपात्रे यज-
मानं वाचयति न विष्णुक्रमान्क्रमत इत्यवभृथोक्तः खलु पूर्ण-

---

१ Thus Be G (sec. m.) and the Viv. a. h. l. and as cited elsewhere; the prep. वि om. D U Ben H C.

२ Thus Be U (sec. m.) G (only °वै°); स्व H U (pr. m.), °संयोजनाव--- D, °संयोजनावेवैताव° Ben and a citation by Sāyaṇa; °संयोजनावैताव° C.

३ The Viv. seems to read कस्मै ।

४ Thus Be G U (sec. m.) Ben (sec. m.) and the Viv.; दक्षिणो-क्तावेवैताव° Ben and U (pr. m.), दक्षिणैकावो ह्येताव° D, दक्षिणैकावौ ह्येताव° C, नचवचोक्तदक्षिणैकावेवैताव° H.

५ °क्रमणौ° D C, °क्रामिणौ° Be.

पापो भवत्यन्यः सखिरावभृथः प्रतिष्ठितो भवत्यन्तपरिक्रमिणो विष्णुक्रमाः । किमुपक्रममाणो यजमानं परिणयेदिति । ॥ ६ ॥

द्वादश वात्सबन्धान्युदयच्छन्निति[1] । कतमानि तानि वात्सबन्धानि भवन्तीत्येता एव सुवाहुतीरन्यत्र स्वाहाकारादित्यथाप्युदाहरन्ति समानसंख्यानो ऽग्निर्क्विषि[2] तिस्रो देवतास्तानि द्वादशाथेदं कृष्णाजिनं नौदकं[3] भवत्यास्य आग्नेतत्पार्श्वत एवाभिमर्पद्दक्षिणं प्रति रञ्ज यथा नार्व । नक्तं चेदमेध्यं पश्येदाहवनीयमेवैतेन यजुषोपतिष्ठेताथेमानि दैवानि व्रतानि सायमुपक्रमाणि प्रातरपवर्गाण्यथौपसदानि प्रातरुपक्रमाणि सायमपवर्गाण्यथेदं[4] दैवं[4] व्रतं परिश्रित्यैव व्रतयेदाहवनीय एवैतत्पुराग्निहोत्रं हूयते स मानुष्याख्यतीति[5] । ॥ ७ ॥ चतुर्थः ॥

---

१ See TS. VI. 1. 2. 5.

२ ग्निर्क्षि G (sec. m.), मिरचि Be, ग्नीनिति U (sec. m.), ग्निनिति C, ग्निरिति the other MSS.

३ See TS. I. 2. 2. e (last pāda).

४ Thus Ben (pr. m.) G (sec. m.), °चैतदैवं °चैतदैवं H C U D G (pr. m.) Ben (sec. m.).

५ Thus H, समनुष्याख्यतीति Be Ben, स मानुष्यावीद्दिति C U D G (pr. m.), समनुष्यख्यावीद्दिति G (pr. m.). The Vivaraṇa seems to have read as C, etc.: स चाहवनीयोऽनुष्यावीत् चाहवनीयमन्यत्र जुहोमीति दृष्टे ति, but we expect a future: 'if the Āhavanīya sees that I offer somewhere else, it will... .'

I. 167. 3. अथायं प्रायणीयस्तस्य कः कर्मण उपक्रमो भवतीति ।
बर्हिर्यजुषा कुर्याद्यदि पुरस्तादयजुष्कृतꣳ स्यात्पाणी संमृशीत ।
परिस्तृणीयात्पात्राणि निर्णिज्य सꣳसादयेद्धस्तायां दक्षिणत
उपवेश्याचैवोत्तरत उदपात्रं निधाय जघनेन गार्हपत्यꣳ स्फ्यं
निदध्यात्तस्योपरि पात्रीं । पात्र्यां श्रौहीनावपेदाच्छ्रुपादानप्रभृति
कर्मान्तस्तायत आ प्रस्कन्दनात्प्रस्कन्दनान्तं कर्म कृत्वाहवनीये
स्रुवाहुतिꣳ हुत्वोपनिष्क्रम्य संप्रैषमुक्त्वाभिप्रपद्य तिरः पवित्रमप
आनीयाधिश्रित्य तिरः पवित्रं तण्डुलानावपेद्यथाज्यं निर्वपे-
द्यथाज्यमधिश्रयेदुभयं पर्यग्नि कृत्वा स्फ्यहस्तः प्राङेत्य सान्व-
यजुर्हरेत्सिद्धमत ऊर्ध्वꣳ । ग्रंथन्तः[१] प्रायणीयः संतिष्ठते ।
को नु खल्वस्य कर्मणोऽवशेषो भवतीत्या स्रुचां विमोकात्स
चरुरविषामाप्यमिनयनं विद्यत इति[२] । स्थालीभिरेव चरू
I. 169. 20. निर्वपेदिति नु[३] बौधायनस्य कल्पः । किंदेवत्या उ खलु
पदाहुतिर्भवतीत्याग्नेयीत्येके । वैष्णवीत्येके । प्राजापत्येत्येके ।
I. 172. 19. वाग्देवत्येत्येव[४] ब्रूयात्कृष्णायोर्णास्तुकया सोमविक्रयिणमन्तरेण
I. 172. 15. भूमके[५] विध्यति । राजानं प्रत्यपोर्णुते यजमानः ॥ ८ ॥

---

१ ग्रंथुयंतः G D C U (pr. m.), ग्रंथवन्तः Be.

२ Effaced in G.

३ Om. Be H.

४ Thus H, °दैवतेत्येव the other MSS.

५ Thus G U (sec. m.) and the Viv. (both copies); भूमेके Be, भूमध्यके Ben H Keś., भुवोर्मध्ये C D; cp. Baudh. gṛhs. I. 1: चक्षुर्भ्यामन्तरेण भूमके दर्भेण संमार्ष्टि ।

वयः सुपर्णा उपसेदुरिन्द्रमित्येतयाथ यदि न सोमविक्रयी स्याद्येण यूपावटकाशं पलाशशाखां निहत्य समुपनह्य राजानं पलाशशाखायाꣳ समासज्योपासीताथ यदि कश्चित्प्रसवसंयुक्तं व्याहरेत्क्षिप्रमिति वा त्वरध्वमिति वा कुरुतेति वा[1] तद्राजानमाददीत । न संवादा आवर्तेरन्स सोमविक्रयी स्याद्येयं प्रथमा सुब्रह्मण्योंकारान्तैवैषोक्ता भवत्यथायमातिथ्यस्तस्य कः कर्मण उपक्रमो भवतीति । बर्हिर्यजुषा कुर्याद्यदि पुरस्तादयजुष्कृतꣳ स्यात्पाणौ संगृह्णीत । परिस्तृणीयात्पाणौ वापि निर्णिज्य सꣳसादयेद्ब्रह्माणं दक्षिणत उपवेश्य दक्षिणमनड्वाहं विमुच्याचैवोत्तरत उदपात्रं निधाय जघनेन गार्हपत्यꣳ स्फ्यं निदध्यात्स्फ्योपरि पात्रीं । पात्र्यां श्रौहौनावपेच्छूर्पादानप्रभृति कर्मान्तस्तायत आ प्रस्कन्दनात्प्रस्कन्दनान्तं कर्म कृत्वोत्तरमनड्वाहं विमुच्य राजानं प्रपादयेत्सिद्धमथाग्निष्टोमिकं[2] कर्म

9. जानीयादा संप्रैषात्कृष्णाजिनावधवनेनैवातिथ्यं[3] प्रतिपद्यते । सिद्धमत ऊर्ध्वम् । ॥ ९ ॥ पञ्चमः ॥

स दर्भपुञ्जीलमुद्गृह्णीति । कतरन्नु खल्विदं दर्भपुञ्जीलं भवतीति । यद्देवैतद्गोदानयोर्निदधातीति ॥ सप्त गिरीण्भिस्त्वेति । कतमे नु खल्विमे गिरयो भवन्तीति । प्रयाजानू-

1 वेति or वोति MSS. exc. H ; om. C.

2 °हौमिकं G U D C.

3 °धवने° G and the Viv. : °धवने° Be, °धवतिने° Ben, °धूवने° D U C.—°तिथ्यं G, °तिथ्य Be, °तिथ्यस्य the other MSS

याजा[1] एवैता उक्ता भवन्तीति दीक्षणीयायाः प्रायणीयाया आतिथ्याया अग्नीषोमीयस्येत्यथाप्युदाहरन्ति[2] दीक्षणीया प्रायणीयातिथ्योपसदो ऽग्नीषोमीयः सप्तम इति ॥ यज्ञो देवेभ्यो निलायतेति। कतमो नु खल्वयं यज्ञो भवतीति। य एवैष इडान्त आतिथ्यः संतिष्ठते ॥ तं देवा इडान्तमङ्गैरन्वैच्छन्निति। यदेवैतत्तानूनप्त्रꣳ समवमृशन्तीति[3] ॥ तमिन्द्र उपर्युपर्यत्यक्राम- दिति। यदेवैतदुपसद्भिश्चरन्तीति ॥ तमेभ्यो यज्ञ एव यज्ञमाहरदिति। कतमो[4] नु खल्वयं यज्ञो यज्ञमाहरदिति[4]। दीक्षणीया प्रायणीयातिथ्यैष एव यज्ञो यज्ञमाहरदिति[5] ॥ वराहो ऽयं वाममोष इति। सत्यमङ्गां वर्षिष्ठं। तद्यजमानं वामं वसु मुष्णातीति ॥ के नु खल्वातिथ्यस्यानूयाजा[1] भवन्तीत्युपसद इत्येव ब्रूयात्किंदेवत्या उ खलूपसदो भवन्ती-
I. 178. 19. त्याग्नेय्य इत्येव ब्रूयात्कथमु खलूपसदामुपक्रमो भवतीति। बर्हिर्यजुषा कुर्याद्यदि पुरस्तादयजुष्कृतꣳ स्यात्पाणी संमृशीत। परिस्तृणीयात्पात्राणि निर्णिज्य सꣳसादयेन्मंदन्तीः सꣳस्कृत्य पात्राणि प्रोक्षेदाज्यं निरुप्याधिश्रित्य पर्यग्नि कृत्वा स्फ्यहस्तः प्राङेत्य साम्नयजुर्हरेत्सिंहमत ऊर्ध्वं। यथा प्रकृत्यामेवं प्रय-

१ ॰नुयाजा MSS.

२ ॰षोमीयस्य चेत्यथा G Ú (sec. m.).

३ सम् found in Be G U D C only.

४ From कतमो unto याहरदिति missing in G H ; इति missing in Ben C Bo D U.

५ इति missing in G;U C.

मायासुपसदि स्रुचः सादयेदभ्यूह्य द्वितीयस्यामभ्यूहतराहुती-
यस्यां[1] । संत्वरमाणा इवोपसद्भिः प्रचरेयुर्नाक्तमाद्रियेरन् । संमयाङ्गुलिः[2] स्रुवमादायाश्रविवोपसदं जुहुयादिति । ॥ १० ॥ षष्ठः ॥

क उ खल्वग्नीषोमीयस्य बर्हिर्यजुषा कुर्यादित्युद्वास्य
3. प्रवर्ग्यं प्रागाहवनीयस्य प्रणयनात्सवनीयेभ्यश्च वत्सानुपाकुर्या-
द्धविष्कृत आहवनीये गार्हपत्ये पदहृतीयमुपवपेदेवमुपय-
मनीयं यमौदुम्बरी[3] स्थूणा यजमानेन संमिता कार्या
भवत्यथायं यूपो यजमानस्यारत्निभिर्विमितो भवति ।
सद्योपर[4] इत्येके । ऽथो हैवैतानि[5] कुर्याद्यूपावटं तु[6] परि-
11. लिख्य पाणी संमृजीत । परिस्तृणीयात्पात्राणि निर्णिज्य
सन्नादयेत्प्रोक्षणीः संस्कृत्य पात्राणि प्रोक्षेदाज्यं निरुप्या-
धिश्रित्य पर्यग्नि कृत्वा स्रुचः संमार्ष्टि । ता उत्तरवेदिमुप-
हरन्ति प्रोक्षणीश्चाथ प्रतिप्रस्थाता पत्नीमभिसंनह्यत्यौर्णा-

१ ॰हुतराहुः H Ben U Be; ॰हुतरांश॰ G, ॰हुतराश॰ D C.

२ Thus G D Ben CU (pr. m.), ॰मयांगुलि Be, ॰मयंगुलीभिः U (sec. m.). H defective. The Viv.: परिमृज्यौलकूर्चं प्रचरमादाय ।

३ Between उपवपेदेवम् and उपयमनीम् H Ben ins. इत्यम्, not G U Be D C.

४ Conjectural reading; सद्योपर इत्येके G C Be U, सद्योपरीत्येके Ben, सद्योपर इत्येके H, सद्योमपर इत्येके D; द्योपर इ॰ the Viv.

५ हैवैतानि all the MSS., with न॰ the Viv. (one copy) = नवतानि ।

६ om. H.

ग्निकेनाथैनां गार्हपत्यमीक्षयेदथैनामाज्यमवेक्षयित्वाज्येनाद्रु-
वेत्पत्न्या[1] तदवेक्षितमुपयच्छीत[2] तेजोऽसीत्यथैनच्छकले-
नोपयत्य हरेत्तेजोऽनु प्रेहीत्यथैनदाहवनीयेऽधिश्रयेदग्निष्टे
तेजो मा विनैदित्यथैनद्धूत्वोत्तरेण प्रोक्षणीः सादयित्वावेक्ष-
तोत्पुनुयादाज्यवतीभ्यां प्रोक्षणीः। प्रसिद्धमाहवनीयस्काग्ने
III. 97. 11. पृषदाज्यवन्त्याज्यानि गृह्णीतेति विज्ञायत ऊर्ध्वं। यथो
एतच्छाखीकेः कथं वेदयन्ते पत्नीग्राह एवाग्नीषोमस्याज्यानि
गृह्णीयात्तानि खरे सादयेदिति। समन्वानीय वाऽसमन्वा-
नीय[3] वा पुराणगार्हपत्यं पाणी संमृशीत। परिस्तृणीयात्पा-
त्राणि निर्णिज्य सङ्सादयेत्प्रोक्षणीः सङ्स्कृत्य पात्राणि प्रोक्ष-
त्याज्यं निरुप्याधिश्रित्य पर्यग्नि कृत्वा स्रुचः संमार्ष्टि। ता
अत्रैव सह सङ्सादयन्ति प्रोक्षणीश्च। न[4] प्रतिप्रस्थाता
पत्नीमभिसंनह्यत्यौरोत्वाग्निकेन[5]। नैनां[5] गार्हपत्यमीक्षयेदथै-
नामाज्यमवेक्षयित्वाज्येनाद्रुवेत्पत्न्या तदवेक्षितमुपयच्छीत तेजो
ऽसीत्यथैनच्छकलेनोपयत्य हरेत्तेजोऽनु प्रेहीत्यथैनद्गार्हपत्ये
ऽधिश्रयेदग्निष्टे तेजो मा विनैदित्यथैनद्धूत्वोत्तरेण प्रोक्षणीः

---

१ ०नोद्रु० instead of ०नाद्रु० G here and infra l. 14. Is उद्रुवेत् the better reading?

२ Thus here and l. 14 G Be D C Ben U (sec. m.), ०यच्छेत H U (pr. m.).

३ Only given by G U (sec. m.).

४ Thus G U D Be, C H Ben om.

५ Thus Be C only, the other MSS. om. न reading ०ग्निकेनैनां।

सादयित्वावेक्षेतोत्पुनुयादाज्यवतीभ्यां प्रोक्षणीः प्रसिद्धं गार्हपत्यसकाशे पृषदाज्यवन्त्याज्यानि गृहीत्वा ॥ ११ ॥

7. परिक्रमिष्य उत्प्रदाय ब्रह्मणे राजानमुत्प्रयच्छेत्संप्रच्छन्नेषु स्रुवाहुती[1] जुहुयात्संप्रच्छन्नास्त्वेव गच्छेयुराहवनीयाद्राजा दक्षिणार्धः स्यादथाग्निरथ ग्रावोवायव्यान्युत्तरार्ध्यान्याज्यान्यपि वाग्निर्दक्षिणार्धः स्यादथ राजाथ ग्रावोवायव्यान्युत्तरार्ध्यान्येवाज्यानि । पूर्वया द्वारोपनिष्क्रम्योत्तरेण सदः परीत्याग्नीध्रागारेऽग्निं निधायाभिहुत्य प्रोक्षणीरुत्तरेणाग्नीध्रीयं धिष्णियं प्रतिपद्यते[2] । ऽथास्य आज्यैराहवनीये हुत्वेध्मं प्रोक्ष्य वेदिं प्रोक्ष्य बर्हिः प्रोक्ष्य बर्हिरासन्नं प्रोक्ष्योपनिनीय पुरस्तादाश्ववालं प्रस्तरं गृहीत्वा पञ्चविधं बर्हि स्तीर्त्वा प्रस्तरपाणिः प्राङभिसृप्य कार्ष्मर्यमयान्परिधीन्परिधायोर्ध्वे समिधावभ्याधाय बर्हिर्मुष्टिं विधृती प्रस्तरमित्येतत्समादाय प्रदक्षिणमावृत्य पूर्वया द्वारा हविर्धानं प्रपद्योत्तरार्धे खरस्य बर्हिर्मुष्टिꣳ स्तृणीयाद्बर्हिषि विधृती । विधृत्योराश्ववालं प्रस्तरं । प्रस्तरे जुहूं । बर्हिषीतरा । एता असदन्निति समभिमृश्याप उपस्पृश्य ब्रह्मणो राजानमादाय पूर्वया द्वारा हविर्धानं

---

१ स्रुवाहुतीर्जु॰ MSS., but cp. the Viv.: श्री सोम जुषाण इति (TS. I. 3. 4. *a* and *b*).

२ प्रतिपद्यते Be G U D C, प्रतिपद्यंते Ben, ॰पन्नतिपद्यंते H.

प्रपादयेदात्मानमभिपरिहरमाण[1] इव। छिद्रमत ऊर्ध्वम्।

॥ १२ ॥ सप्तमः ॥

क उ खलु श्येनवदभिप्रावर्हिरपवर्गं गच्छतीत्यग्नीषोमीय इत्येव ब्रूयात्क उ खल्वग्नीषोमीयः सुत्यमहरनुधमेतीति। सर्वाश्च क्रियामित्येव[2] ब्रूयात्क उ खलु प्रवर्ग्यः सुत्यमहरनुधमेतीति। सर्वाश्च क्रियामित्येव[2] ब्रूयात्का उ खलु देवता सुब्रह्मण्या प्रथमाह्वयत इति। वागेव वाचमाह्वयतीति। क

I. 197. 2. उ खलु पितापुत्रीया[3] सुब्रह्मण्या प्रथमाह्वयत इत्यग्नीषोमी-
यस्य हुतायां वपायां परिहृतासु वसतीवरीषु द्वितीया। प्रातरनुवाके तृतीया। दक्षिणानां च काल एक आह्वयन्ती-
I. 197. 8. त्यथ यो दीक्षितः कुम्भं याचतीति इह इत्येवेदमुक्तं
I. 198. 17. भवति। पयश्च समूलश्च कुरुतेति श्रयणार्थे एवैते उक्ते
I. 199. 1. भवतस्तस्मो रशनायास्तस्मो वपाश्रपण्यौ द्वयमिध्माबर्हिरिति
सवनीयस्य चानूबन्ध्यस्य चैतानि भवन्ति। कास्तस्य स्वधी-
वधिष्ण्याः सोमपर्ण्यौरित्यादित्यस्थाल्युक्थ्यस्थाल्याग्रयणस्थाली ध्रुवस्थालीत्यथेमानि द्वादशोर्ध्वपात्राणि भवन्ति दधिघर्मपात्रमुपांश्वन्तर्यामयोर्द्विदेवत्यानाꣳ शुक्रामन्थिनोर्ऋतुपात्रे आदि-

---

[1] Thus Ben C Be G D′ U (sec. m.); °त्मानमपरिह° H, °त्मानमभिपरिह° U (pr. m.).

[2] Thus Ben C G (sec. m.) U (pr. m.); °श्चियायामित्येव H Be U (sec. m.).

[3] °पुत्रिका G U.

त्यश्वाश्वा औपशयं पात्रमुक्थ्यस्थाला औपशयं पात्रमथैत एकादश चमसा भवन्ति यजमानस्य ब्रह्मणो होतुरुद्गातुर्मैत्रावरुणस्य ब्राह्मणाच्छंसिनो ऽच्छावाकस्य सदस्यस्याग्नीधः पोतुर्नेष्टुरिति । तेषां तक्ष्णि सरूपाणि कारयेन्नैयग्रोधानां । विज्ञायत उत्तरस्यां[1] ततो[1] यदत्सरकैश्चमसैर्भक्षयन्ति न्यग्रोधचमसैरित्येतस्मान्नैयग्रोधा एव भवन्ति । रश्मिश्च[2] मे[2] इत्यैन्द्राग्न्य एवैष उक्तो भवत्यधिपतिश्च मे इति प्राजापत्य एव दधिग्रहो भवति । सारस्वतश्च मे पौष्णश्च[3] मे[3] इति[3] वसतीवरीरित्येक आहुरथ हैक आह राजसूयिक एव महाग्रहो भवति । पोषणादु[4] ह[4] पौष्णो भवति मषणाद्[5] सारस्वत इति । ॥ १३ ॥ अष्टमः ॥

. 16. अथेदं महाराचिकं कर्म । तस्य कः कर्मण उपक्रमो भवतीति । हस्तपादाग्रचास्थान्तरेण चालाखोल्करौ देवयजनमभि प्रपद्यन्ते । तेषां यथासंप्रैषं विहितानि कर्माणि भवन्त्यथाध्वर्युराग्नेय्यर्चाग्नीध्रमभिमृशेद्वैष्णव्या हविर्धानमित्यपो-परमत्यथैष आग्नीध्रः पूर्वः पत्नीशालं हुत्वाग्नीनुपसमाधाय

---

१ The first citation from the *uttarātatiḥ* seems XVIII. 21. 300. 13, the second I have not been able to point out.

२ °श्चमश H : Ben om. म ।

३ Thus G D U C, पोष्णश्च म H. पोष्णश्चेति Ben. पौष्ण इति Be.

४ Thus G U ; पोषणादु च H D C, पोषणादिति Ben Be.

५ Thus emended : मषणाग्न G U Ben Be, मषणाद्व C. मषणाद्व D, मषणान H.

संपरिस्तीर्य पात्राणि निर्णिज्य संस्राव्याज्यं विलाप्योपास्ते ऽपर:[1] प्रतिप्रस्थाता प्रोक्षणी: संस्कृत्य पात्राणि प्रोक्षेदाज्यं निरुप्याधिश्रित्य पर्यग्निं कृत्वा स्रुच: संमार्ष्टि । ता उत्तरवेदिं हरन्ति प्रोक्षणीस्तथाध्वर्युराग्नेय्यर्चा स्रुचो ऽभिमृशति संमृष्टानि द्विधा पात्राण्यभिभच्यन्त[2] इति । वायव्या वायव्यान्यैन्द्र्या[3] सदो । ऽथैष उन्नेता ग्रावोवायव्यं संप्रचाल्य द्रोणकलशे दशापवित्रे समवधाय दक्षिणस्य हविर्धानस्य पुरोऽक्षं संसादयत्युपकल्पयते प्रतिप्रस्थाता पृषदाज्याय दध्याग्नीध्र इध्माबर्हिरुपसादयत्यथ प्रतिप्रस्थाता पत्नीमभि-संनह्योत्पौरोडाशिकेनाथैनां गार्हपत्यमीक्षयेदथैनामाज्यमवेक्ष-यित्वाज्येनाद्रवेत्यंत्या[4] तदेवेक्षितमुपपश्यीत[5] तेजो ऽसीत्य-थैनत्कृस्त्नेनोपयत्य हरेत्तेजो ऽनु प्रेहीत्यथैनदाहवनीये ऽधिश्रयेदग्निस्ते तेजो मा विनैदित्यथैनदूत्वोत्तरेण प्रोक्षणी: सादयित्वावेक्षेतीत्युत्पुनुयादाज्यवतीभ्यां प्रोक्षणी: प्रसिद्धमाहव-

1 ऽपर: U (pr. m.), पर: D C, अपर: Ben (pr. m.), ह्यपर: the other MSS. H. wholly corrupt.

2 Uncertain reading •भच्चन्त Ben. •भच्यंत G (sec. m.), °भचंत G (pr. m.), •भचन्त Be C U, •भूमन्त D, •भच्यंत D. The Viv. (one copy) •भच्च changed into •भच्य, and thus also the other copy.

3 •यैन्द्रिया G C.

4 •मोहये• again G.

5 •पश्यीत G (sec. m.), U (pr. m.) D C Ben, •पश्येत G (pr. m.) Be H U (sec. m.).

नीयसकाशे पृषदाज्यवन्त्याज्यानि गृह्णीते । सिद्धमत ऊर्ध्वम् ॥ १४ ॥

अथ शालीकेरेवमेवैषां यथासंप्रैषं विहितानि कर्माणि भवन्त्यथाध्वर्युराग्नेय्यर्चाग्नीध्रमभिमृशेदैष्णव्या हविर्धानमित्यथोपरमत्यथैव आग्नीध्रः पूर्वः पत्नीशालं हुत्वाग्निमुपसमाधाय संपरिस्तीर्य पात्राणि निर्णिज्य सꣳसाद्याज्यं विलाप्योपास्ते । ऽपरः प्रतिप्रस्थाता प्रोक्षणीः सꣳस्कृत्य पात्राणि प्रोक्ष्यादाज्यं निरुप्याधिश्रित्य पर्यग्नि कृत्वा स्रुचः संमार्ष्टि । ता आग्नीध्रꣳ हरन्ति प्रोक्षणीस्तथाध्वर्युराग्नेय्यर्चा स्रुचो ऽभिमृशति । संमृष्टानि द्विधा पात्राण्यभिमृशन्त्[1] इति । वायव्यया वायव्यान्यैन्द्र्या[2] सदो । ऽथैव उन्नेता ग्रावोवायव्यꣳ संप्रगृह्य द्रोणकलशे दशापवित्रे समवधाय दक्षिणस्य हविर्धानस्य पुरोऽक्षꣳ सꣳसादयत्युपकल्पयते प्रतिप्रस्थाता पृषदाज्याय दध्याग्नीध्र इध्माबर्हिरुपसादयति । न प्रतिप्रस्थाता पत्नीमभिसंनह्यत्यौरोडाग्निकेन[3] । नैनां[3] गार्हपत्यमीक्षयेदथैनामाज्यमवेक्षयित्वाज्येनाद्रवेत्यन्त्या[4] तदवेक्षितमुपयच्छति[5] तेजो ऽसीत्यं

[1] ॰मृशन्त Be G, मृशन्त U C, ॰मृशन्त D : H and Ben. abbreviate this passage.

[2] ॰व्यैन्द्र्या G U C, ॰व्यैन्द्रेया Be.

[3] Thus G (pr. m.) D Be C Ben ; ॰केनैनां G (sec. m.) H ; ॰केनावैनां U (sec. m.).

[4] ॰षोडशे॰ again G.

[5] ॰यच्छीत all (H. abbreviates).

येनच्छकलेनोपयत्य हरेत्तेजो ऽनु प्रेहीत्यथैनदाग्नीध्रीये
ऽधिश्रयेदग्निस्ते तेजो मा विनैदित्यथैनद्धूलोत्तरेण प्रोक्षणीः
सादयित्वावेक्षेतोत्पुनुयादाज्यवतीभ्यां प्रोक्षणीः । प्रसिद्धमाग्नी-
ध्रीयमकाग्रे । पृषदाज्यवन्त्याज्यानि गृहीत्वा परिकर्मिभ्य
उत्प्रदाय प्रोक्षणीहस्त उत्तरेणाग्नीध्रीयं धिष्ण्यं प्रतिपद्यते । ५
ऽन्वस्य माध्यैरयेध्मं प्रोक्ष्य वेदिं प्रोक्ष्य बर्हिः प्रोक्ष्य बर्हिरासन्नं
प्रोक्ष्योपनिनीय पुरस्तात्प्रस्तरं गृहीत्वैकविधं[1] बर्हिः[1] स्तीर्त्वा[1]
प्रस्तरपाणिः प्राङभिसृप्यौदुम्बरान्परिधीन्परिधायोर्ध्वे समि-
धावभ्याधायं बर्हिर्मुष्टिं विधृती प्रस्तरमित्येतत्समादाय
प्रदक्षिणमावृत्य पूर्वया द्वारा हविर्धानं प्रपद्योत्तरार्धे खरस्य १०
बर्हिर्मुष्टिꣳ स्तृणीयाद्बर्हिषि विधृती । विधृत्योः प्रस्तरं । प्रस्तरे
जुहूं । बर्हिषोत्तरा । एता असदन्निति समभिमृश्य योगेन
युनक्ति । विष्णूमत ऊर्ध्वम् । ॥ १५ ॥ नवमः ॥

किमग्निहोत्री दीक्षितः किमौपसदः किंप्रसुत इति ।
विज्ञायते व्रतमेव दीक्षितस्याग्निहोत्रं । घर्मोच्छिष्टमौपसदस्यो- ११
पांशुमन्तर्यामौ[2] प्रसुतस्य । यो ह्यनुदिते स सायमग्निहोत्र-
भक्षिय उदिते स प्रातरग्निहोत्रभक्षः । किंदर्शपूर्णमास[3]

---

१ The three words एक० ब० स्तीं effaced in G.

२ Thus G U D C Be; ०पसदस्थपांशु० H, ०पसदमन्त्रोपांशु० Ben, the Vivaraṇa also has ०पसदस्य ।

३ Thus Be G U (sec. m.), the Viv.; ०दर्शपूर्णमासयाः H, दर्श (or दर्श) पौर्णमासया (or सय) H D C Ben (pr. m.), all without इति ; °मास इति Ben (sec. m.), °दर्शपौर्णमास इति U (pr. m.).

इति । विज्ञायते पौर्णमासं यज्ञमग्नीषोमीयं पशुमकुर्वत दार्शं यज्ञमाग्नेयं पशुमकुर्वतेति । अथो एतदौपमन्यवस्य कल्पं वेदयन्ते प्रातःसवन एव सर्वेभ्यः सवनेभ्यः सवनीयान्निर्वपेत्सक्-दुपहितान्येव कपालानि स्युरा समभिवासनात्संस्थितं कर्म तायते[1] । तेषामेकैकमुद्वासयेदनुसवनं येनयेन प्रचरिष्यन्त्स्या-दपि वा अभिन्नहुतानां पिण्डानां परिशाययीतेतरयोः[2] सवनयो-र्ह्येकैककपालस्य चिकीर्षितः[3] स्यात्प्रातःसवनिकैरेव[4] वर्तयेत्कृतान्ता-त्पौरोडाशिकं कर्म प्रत्याददीतेतरयोः[5] सवनयोरनुसवनमग्ना-राध्यहनेनैव कपालेषु प्रतिपद्येत । भिन्नमत ऊर्ध्वम् ।

॥ १६ ॥ दशमः ॥

अथो एतद्बौधायनस्य कल्पं वेदयन्त उभयतःशुक्रा आदि-त्यवतीर्वसतीवरीर्गृह्णीयात्ताः शुक्रास्ताभिराप्याययेत्ताभिर-भिषुणुयादित्युपर्यर्धꣳ होतृचमसं कल्पेत्येतेनैवापि वृतीयेन वर्तयेत्तयोरपः पूर्वया द्वारा हविर्धानं प्रपादयेद्धोतृचमसीया वसतीवरीया मैत्रावरुणचमसीया इति दक्षिणेन होतारं परिगृह्यापरया[6] द्वारैकधनानेतस्मिꣳस्तु काले सर्वस्य एव मैत्रा-

---

१ Thus Ben, ज्ञायते C D, तायत H (reading स्यात् instead of वेयात्), वर्तयेत् G Be U (sec. m.) and the Viv.

२ इतरयोः Be G (pr. m.), उत्तरयोः Ben C U D G (sec. m.).

३ यद्येक॰ H and the Viv., यद्येक॰ G U Ben Be; C defective.

४ ॰सवनिकै॰ G U D, Viv., ॰सवनीयै॰ the other MSS

५ उत्तरयोः MSS.

६ परिगृह्य॰ Be U.

वषट्कारमनीयाः पूर्वस्थेत्तृतीयं वसतीवरीणामवनयेत्तृतीयमेक-
I. 190. 12. धनानामेवमस्य प्राक्तवसः शुक्रो भवति । सोमग्रहं गृह्णीयाद्रु-द्रावर्षसकामस्येत्यनिरुक्तस्यैवैष राज्ञो ग्रहीतव्यो भवति । का उ खलु देवताः प्रथमꣳ सोमं भक्षयन्तीत्याप इत्येव ब्रूया-द्विज्ञायत उपहूताः सोमस्य पिबतोपहूतो युष्माकꣳ सोमः पिबत्विति । क उ खलु सोमस्य सोमपीथो भवतीति । विज्ञायते यत्ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहेत्येष एवापि सोमस्य सोमपीथस्तेषाꣳ संनिपति-तानामानुपूर्वतेति[1] । निग्राभ्यासु वाचयित्वादाभ्येन चरेदथो-पाꣳशुसवनमाददीताथ राजानं निर्वपेत्सिद्धमत आग्निष्टोमिकं कर्म आनीयादा फलकयोरभिमर्शनात्फलके अभिमृश्य पृश्निभिश्चरेदथ प्राणग्रहैश्चरेदथाꣳशूनुपसंगृह्णीयादथाꣳशुना चरेदथोपाꣳशुना । काले ऽन्तर्यामेण । सिद्धमत ऊर्ध्वम् ।

॥ १७ ॥ एकादशः ॥

III. 101. 7. अथो एतद्बौधायनस्य कल्पं वेदयन्त आग्रयणस्य ग्रहणे द्वयोर्धारयोः प्रातःसवने गृह्णीयात्तिसृणां माध्यंदिने सवने चतसृणां तृतीयसवन इत्युपाꣳश्वन्तर्यामयोश्च सꣳस्रावः संततश्च शुक्र एते द्वे प्रातःसवने । संततस्यैव शुक्र आग्रयणस्योदचनेन

१ Thus G U D, °पानिनाना° H Ben, °पतिनाम° C. °पोभानां Be.— °मानुपूर्ववेति G U (sec. m.), °मानुपूर्वते H, चानुपूर्ववेति Be. °मानुपूर्वेवेति Ben U (pr. m.), °मनुपूर्ववेति C D.

च[1] तृतीया माध्यंदिने सवन । आदित्यस्थाल्यामतिग्राह्यो[2] राजादित्यपात्रस्य च संस्राव आग्रयणस्यैवोद्यमनेन[3] च चतुर्थी तृतीयसवने । संपूतꣳ राजानं यवेन श्रीणीयात्पयसा सक्तुभिर्हिरण्येनेति । स यं कं च ग्रहं गृह्णात्युभयत[4] उदग्रꣳ हिरण्यश्रयणमेवैनं करोति । तिष्ठता ग्रहा होतव्या अन्यत्र प्राजापत्याच्च मन्थिसꣳस्रावाच्चेति । अथो एतच्छालीकेः कल्पं वेदयन्ते द्रप्सानुमन्त्रणीयास्विति स्रुवाहुतीरेवैता जुहुयात्कस्मिन्नु खल्वेनाः काले जुहुयादिति । संततोर्होतस्मिन्नेनाः[5] काले जुहुयादित्यथो खल्वेतरित्याह प्राञ्चꣳ राजानं पूतभृतमभि संपवयताद्ग्रावभिराधवनीयं गत्वा न्युब्जतादित्युक्तसंप्रैष[6] एष प्रेत[7] आवकाशेभ्यो ऽवकाशैरुपस्थाय ग्रावभिरेवैनं[8] गत्वा न्युब्जति । ॥ १८ ॥

समानं कर्माश्विनाद्ग्रहादित्या[9] धिष्ण्यव्याघारणसंपा-

---

१ Given by Ġ U D only.

२ ०स्थाल्या अति० Ben H.

३ एव om. Be G U D.

४ गृह्णीयादिति instead of गृह्णाति Be G (sec. m.).

५ संततो० Be, सततोर्ह० H.

६ Thus Ben H, ०त्युक्तः सं० the other MSS.

७ प्रेते G U D C, एते Be, हावे Ben, H. corrupt.

८ Thus G (sec. m.) U D, ग्रावभिरं C, ग्रावभिरेवैनां the other MSS.

९ Viv.: समानं कर्माश्विनाद्ग्रहादिति यथोपचारे (e.g. XI. 3 : 67. 17) यथासमेव विधिः ।

I. 213. 20. तादित्येव समुद्देशो[1] भवति । कथमु खलु धिष्णियानां यथान्युप्तं व्याघारणं भवतीति । विभुवे प्रवाहणाय स्वाहेति व्याघार्य रौद्रेणानीकेन पाहि माग्ने पिपृहि मा मा मा
I. 214. 8. हिꣳसीरिति । यन्न हृणीत इति । होतैवैषाꣳ प्रथमो भवत्य-थर्गेण उत्तरेऽन्वहःसु प्रातःसवनिकं प्रसर्पणं कथꣳ स्यादित्या-हवनीयोपस्थानप्रभृतीत्येव ब्रूयात्सकृत् स्वधिष्णानामुपस्थानं ।
I. 217. 6. कथमु खल्वेषां विसꣳस्थितसंचरः स्यादित्यन्तरेण होतुश्च धिष्णियं ब्राह्मणाच्छꣳसिनश्च ये ऽधिष्णिया । अथ धिष्णिय-वन्तः स्वꣳस्वमेव धिष्णियमुत्तरेण परिक्रामेयुरथेमावध्वर्यू प्रथमयौ[2] भवतः । क उ खल्वेतयोर्भक्षो भवतीति । होतृच-मस इत्येव ब्रूयात्क उ खल्वतिग्राम एकाहे सोमं न भक्षयन्ती-त्युन्नेता यावत्स्तुत्सुब्रह्मण्य इत्येव ब्रूयात्क उ खलु सत्त्रे दीक्षिता भक्षयेयुरिति । नेष्टुश्चमस उन्नेता भक्षयेदच्छावाक-चमसे यावत्स्तुदुद्गातृचमसे[3] सुब्रह्मण्यो ऽपि वा सर्व एवाग्नी-ध्रचमसे भक्षयेयुर्विज्ञायत उत्तरस्यां ततौ[4] तेषां य एवाग्नीध्रः स यावत्स्तुत्स सुब्रह्मण्यः स उन्नेतेति । ॥ १९ ॥ द्वादशः ॥

I. 217. 11. III. 104. 7. अथो एतद्बौधायनस्य कल्पं वेदयन्ते समानपात्र्यामेव

---

१ °देशो G (sec. m.).

२ Thus H Ben (pr. m.) C D U (pr. m.), °मयिनो Ben (sec. m.) Be G U (sec. m.).

३ °द्गातृचमसे H only.

४ See XVII. 21 : 301. 2.

स्रुवणीभ्यामुद्वासयेत्पुरोडाशस्यैवैषो ऽवकारो दृष्टो भवति[1] । मध्यतः पुरोडाशमुपस्तीर्णाभिघारितमुद्वासयेत्पुरस्ताद्धाना दक्षिणतः करम्भं पश्चात्परिवापमामिक्षामुत्तरतः । कथमु खल्वेषाꣳ संचरो[2] स्यादिति । प्रज्ञातो हविष्पथो । ऽथापरं । पूर्वया द्वारोपनिर्हृत्यापरया द्वारा सदः प्रपाद्यापरेण कर्तम् जघनेन धिष्ण्यानुत्तरेणाच्छावाकस्य धिष्ण्यं पर्याहृत्यान्यस्मै प्रदायैतेनैव यथेतमेत्योत्तरेण सदः परीत्य पूर्वया द्वारोपनिर्हृत्योत्तरेणाग्नीध्रीयं पर्याहृत्यान्तर्वेद्यासादयेदध्वर्युर्यद्धविर्धानं[3] प्रपन्नः स्यादुपनिष्क्राम मा त्वाभिपरिहारिषमित्येनं ब्रूयादथो एतद्बौधायनस्य कल्पं वेदयन्ते द्विदेवत्येषूत्तरतस्तिष्ठते प्रतिप्रस्थात्रे प्रतिनिर्याय[4] प्रयच्छतीति यदाध्वर्युः पुरोडाशान्प्रत्यङ् हरेत्तद्धविर्धानं प्रपद्यमानं प्रतिप्रस्थातारं परिगृह्णीयाद्धवावादायोपनिष्क्रामन्त्युपनिष्क्रान्तस्यैवाध्वर्युर्ग्रहानादत्ते । ऽपरेण परिक्रम्यायोत्तरतस्तिष्ठते प्रतिप्रस्थात्रे

१ °तीति. Ben.

२ Thus Ben C U and G (pr. m.) the Viv. (one copy); संचरि D H the Viv. (another copy), संचारौ Be G (sec. m.), संचरः U (sec. m.). The Viv.: संचरवं संचरो गमनं गच्छाति संचरौ (°रि) मार्गः cp. XXVI. 24.

३ Thus H G (pr. m.) Kes'., the other MSS. ins. यद before यध्वर्यु°

४ प्रतिनिधाय Ben Be and one copy of the Viv

प्रतिनिर्ग्राह्यं[1] प्रयच्छतीति हुत्वा व्यवनीय[2] प्रदक्षिणमावृत्य[2]
प्रतिप्रस्थाताध्वर्युं परिगृह्णीयादध्वर्युः प्रतिप्रस्थातारं प्रत्यङ्
द्रवत्यायेण निष्क्रमत ऊर्ध्वमथेमे द्विदेवत्या अननुवषट्कारा
भवन्ति क[3] उ स्वेषामनुवषट्कारो भवतीति विज्ञायते
द्विदेवत्यानृतुयाजान्यश्च पात्नीवतो ग्रहः। आदित्यग्रह-
III. 106. 2. सावित्रौ[4] नाग्नं[5] मानुवषट्कुर्या[5] इति यथो एतदौपम-
न्यवस्य कल्पं वेदयन्ते द्विदेवत्येषु दीर्घभक्षेणैवैनाभक्षयेद्वक्षेहि[6]
माविशेति प्रतिपद्य कृत्वे दक्षाय रायस्पोषाय सुवीरताया
इत्यातः प्रत्यभिमृशते मा मा राजन्विबीभिषो मा मे
हार्दिं त्विषा वधीः। वृषणे शुष्मायायुषे वर्चस इत्यथानु-
सवनभक्षेणैव[7] सवनमुखीयान्भक्षयेदिति ॥ २० ॥ त्रयोदशः ॥

क उ खलु वसतीवर्य्याः स्तोत्रभक्तिर्भवति शस्त्रभक्तिश्चेति
विश्वरूपास्तु हास्य स्तोत्रभक्तिर्भवति प्रातरनुवाके[8] च शस्त्र-
भक्तिः क उ खलूपांश्वन्तर्यामयोर्द्विदेवत्यानाꣳ स्तोत्रशस्त्र-

१ प्रतिनिग्रा॰ Ben Be and one copy of the Viv.

२ ॰नीयाप्रदक्षिण॰ G U D C.

३ क उ U Be Ben C, Viv., क G H.

४ ॰सावित्रं Be Ben (sec. m.), ॰सावित्राम् Ben (pr. m.)

५ Thus G (pr. m.) U D C and cp. Āśv. śrs. v. 5. 21 (Vait. sū. 20. 4); माग्नमानुवष॰ Ben (pr. m.), माग्नमाननुवष॰ G (sec. m.), माग्नामानुवष॰ H, समाग्नमानुवष॰ Be.

६ ॰भक्षयेन्नैवै॰ Be G.

७ ॰भक्षेणैव Be G U (sec. m.).

८ ॰वाको Be G C U (sec. m.).

भक्तिर्भवतीति । यदुपाꣳश्वग्रꣳ गृह्णाति तदुपाꣳश्वन्तर्यामयोः प्रउग उक्थे¹ द्विदेवत्यानामथायं प्रतिप्रस्थातर्तुपात्रेऽध्वर्योरन्तरतःसेवी भवतीत्यथास्मिन्नत्र यन्तं प्रतिप्रस्थाताध्वर्युं परिगृह्णीयादथाध्वर्युः प्रतिप्रस्थातारं प्रत्यङ् द्रवन्याचेण । मिथुनत ऊर्ध्वं । किंदेवत्या उ खल्वृतुयाजा भवन्तीत्यृतुदेवता इत्येतदेकमथापरमिन्द्रꣳ होता यजति । मरुतः पोता यजति । ग्रावो नेष्टा यजत्यग्निमाग्नीध्रो यजतीन्द्रं ब्राह्मणाच्छꣳसी यजति । मित्रावरुणौ मैत्रावरुणो । देवं द्रविणोदां चत्वारो ऽश्विनाध्वर्यू अध्वर्यू² । अग्निं² गृहपतिं गृहपतिः । क उ खल्वैन्द्राग्नस्य स्तोत्रभक्तिर्भवतीति । बहिष्पवमान इत्येव ब्रूयाद्ये के चन यज्ञा अस्तोत्राः पवमान एव³ तेषाꣳ⁴ स्तोत्राणि भवन्ति⁴ । क उ खलु माध्यंदिनीयाः सवनीया निरुप्यन्त इति । क्षुल्लकवैश्वदेवस्य स्तोत्र इत्येव ब्रूयात्क⁵ तृतीयसवनीया । माहेन्द्रस्य स्तोत्र इत्येव ब्रूयात् । ॥ २१ ॥

नाराशꣳसमुपदस्तꣳ ऊतादेवैनꣳ⁶ होतृचमसादृणीया-

---

१ Thus U (sec. m.), Viv.; उक्थो G U (pr. m.), उक्थे Be Ben H C. Acc. to the Viv. it is synonymous to शस्त्रे ।

२ Thus G U D C; चाध्वर्योरग्निं Ben H Be.

३ Thus G Be, एवैषां Ben D H U C.

४ भवन्तीति Ben H.

५ चखलु ins. G U D C.

६ Thus G U (sec. m.), ऊतारेनं H D C U (pr. m.), ऊतादेवैनं Ben (sec. m.) Be, ऊतारैनं Ben (pr. m.)

हिंकाराग्रꣳसं प्रातःसवनं च माध्यंदिनसवनं चैकाराग्रꣳसं तृतीयसवनं । चत्वार्युन्नीयमानसूक्तानि[१] भवन्तीति[२] । सवनमुखेषु[३] चाच्छावाकचमसे[३] च[३] । त्रयो दीर्घभक्षाः । क उ खलु प्रवर्ग्यः सुत्यमहरनुसमेतीति । दधिघर्म इत्येव ब्रूया-
I. 234. 1.त्त्रिꣳसुपसदाꣳ । सौम्यस्य परीज्येति । तिरश्चर्मन्फलके ग्राव्णो- हादयतीति । शुष्काभिषव इत्येतदाचक्षते । कथमु खलु रथंतरपृष्ठे माहेन्द्रं ग्रहं गृह्णीयान्महाꣳ इन्द्रो य ओजसेत्येतया गायत्र्या माहेन्द्रं गृह्णीयाद्बृहत्पृष्ठे महाꣳ इन्द्रो नृवदा चर्षणिप्रा इत्येतया त्रिष्टुभा माहेन्द्रमथोभयपृष्ठे[४] यया पृष्ठं तया गृह्णीयात्पुरोरुचमितरां कुर्यादिति । ॥ २२ ॥ चतुर्दशः ॥

कथमु खलु सवनीयस्य पशोश्चर्याया उपक्रमो भवतीति । ध्रुवाꣳ संस्तीर्य पृषदाज्यं विहृत्य[५] जुह्वाꣳ समानीयान्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रम्य संवदेताभिघारयेदाश्रा- हयेत्पशुं पञ्चहोत्रा यतस्रूपस्तृणीते । मनोताप्रभृतिनेडान्तेन चरेत्त्रिंशन्मत ऊर्ध्वमथोक्थ्यविग्रहेषु य एव प्रातःसवनिको[६]

---

१ ॰र्युन्नीयमानानिसू॰ Ben H, ॰र्युन्नीयमानिसू॰ Be. ॰र्युन्नीयसू॰ C.

२ इति om. G.

३ । Thus, hesitatingly, emended. सवनमुखेष्वाछावाकच (॰कश॰) मसेच सवनेच C U D; सवनमुखेष्वछावाकचमसे च सवनमुखेषु G (sec. m.); सवनमुखेचाछावाकचमसे च सवने च Be Ben; सवनमुखेछावाकचमसेवसवने च H

४ After माहेन्द्रम् G C D ins. ग्रहम् ।

५ Thus H, विहृत्य the other MSS. (G is indistinct).

६ ॰सावनीको or ॰सवनीको some of the MSS.

ग्रहणमन्त्रः स एव माध्यंदिनीयः स तृतीयसवनिको[१]।
देवतामेव व्यश्नुयेत्समसाय समसायैव त्रीꣳस्त्रीन्पुरोडाशाञ्शक-
लानुपास्येन्नव[२] होढ्यमस इति। त्रयाणामेवैष भक्षो भवत्य-
थायमाग्रयणस्त्रयस्त्रिꣳशतो देवतानां गृह्यते। क उ खल्वेताः
प्रदाने विभज्यन्त इति। पात्नीवते। विज्ञायते पत्नीवत-
12. स्त्रिꣳशतं त्रीꣳश्च देवानिति। कथमु खलु पात्नीवतं भक्षये-
दादित्यवद्गणस्य सोम देव ते मतिविदस्तृतीयस्य सवनस्य
जगतीच्छन्दसो ऽग्निना वैश्वानरेण पत्नीवता त्वष्ट्रा पीतस्य
मधुमत उपहूतस्योपहूतो भक्षयामीति॥ २३॥
कथमु खल्वन्तरुक्थ्यो भवतीति। प्रसिद्धं तृतीयसवन
आग्रयणं गृहीत्वोक्थ्यं गृह्णीयाद्वैनं ध्रुवमुपस्थाप्य त्रिषूर्ध्व-
पात्रेषु विगृह्णीयादुपयामगृहीतो ऽसि देवेभ्यस्त्वा देवायुव-
मुक्थ्येभ्य उक्थायुवं यज्ञस्यायुष इन्द्रावरुणाभ्यां[३] जुष्टं गृह्णा-
मीति। पुनर्हविरसीत्युक्थ्यस्थालीं प्रत्यभिमृशति। परिमृज्य
सादयत्येष ते योनिरिन्द्रावरुणाभ्यां त्वेति। तदानीमेवापरं[४]
गृह्णात्युपयामगृहीतो ऽसि देवेभ्यस्त्वा देवायुवमुक्थ्येभ्य उक्था-

---

१ •सावनीको or •सवनीको some of the MSS.

२ Thus D G U (pr. m.) C Ben (pr. m.), •पास्येतव H, •पास्येरनव Ben (sec. m.), •पास्येरंनव Be.

३ Nearly all the MSS. insert here and infra त्वा before जुष्टं।

४ MSS., exc. Be once and Ben once (sec. m.), read •मपरैव instead of •मपरं।

युवं यजमानायुष इन्द्राबृहस्पतिभ्यां[1] जुष्टं गृह्णामीति । पुनर्ह-
विरसीत्युक्थ्यस्थालीं प्रत्यभिमृशति । परिमृज्य सादयत्येष
ते योनिरिन्द्राबृहस्पतिभ्यां त्वेति । तदानीमेवापरं गृह्णात्यु-
पयामगृहीतोऽसि देवेभ्यस्त्वा देवायुवमुक्थ्येभ्य उक्थायुवं
यजमानायुष इन्द्राविष्णुभ्यां जुष्टं गृह्णामीति । नाव पुनर्हविर-
सीत्युक्थ्यस्थालीं प्रत्यभिमृशति । इमाभिरेवैनां मृष्ट्वा न्युब्जति ।
परिमृज्य सादयत्येष ते योनिरिन्द्राविष्णुभ्यां त्वेत्यथैनान्भुवे
ऽवनीय होतृचमसे ऽवनयेत्स्तोत्रे स्तोत्राण्यावपेक्षसे भक्षाणि ।
तस्य प्रस्तस्य[2] भक्ष इन्द्रावरुणाभ्यामिन्द्राबृहस्पतिभ्यामिन्द्रा-
विष्णुभ्यामग्निना वैश्वानरेण मरुद्भिः पीतस्य मधुमत उपहू-
तस्योपहूतो भक्षयामीत्येतेनैव वा भक्षयेदपि वा नित्यपूर्व-
णादित्यवद्गणस्य सोम देव ते मतिविदस्तृतीयस्य सवनस्य
जगतीच्छन्दस इन्द्रावरुणाभ्यामिन्द्राबृहस्पतिभ्यामिन्द्राविष्णुभ्या-
मग्निना वैश्वानरेण मरुद्भिः पीतस्य मधुमत उपहूतस्योपहूतो
III. 113. 2. भक्षयामीति । अथो एतदौपमन्यवस्य कल्पं वेदयन्ते पुरस्ता-
दिन्द्राहुती जुहुयादिन्द्राहुती हुत्वा हारियोजनं ग्रहं
I. 326. 12. गृह्णीयादित्यथ हैके चात्वालदेशेऽवभृथं निधाय दध्ना
पयसा मधुमिश्रेण नैष्वयनैर्ऋजीषमभिजुह्वति यत्ते ग्राव्णा

---

1 Here begins M (see Introd. to Vol. II, p. IV).

2 Thus U M, प्रसस्य D, प्रस्तस्य Be, thus or प्रसस्य Ben., प्रतिर H G. om. the word altogether, प्रस C.

चिच्छिदुः सोम राजन्नित्यवभृथयजूꣳषि जुहोतीति[1] । कतमानि खल्विमान्यवभृथयजूꣳषि भवन्तीति । यदेवैनदावनीथे प्राकर्षैस्तरन्ति देवकृतस्यैनसो ऽवयजनमसि मनुष्यकृतस्यैनसो ऽवयजनमसि पितृकृतस्यैनसो ऽवयजनमसीत्यवभृथा-
5. हुताविति । कतमा उ खल्वियमवभृथाहुतिर्भवतीत्यप उकृत्य[2]
जुहोति यज्ञस्य त्वा यज्ञपते हविर्भिः । सूक्तवाके नमोवाके विधेम स्वाहेति । तिष्ठन्त एवावभृथेन प्रचरेयुः ।
7. पराञ्चस्तन्तः प्रपदेनोदकान्तं प्रत्यस्येत्सिद्धमत ऊर्ध्वम् ।

॥ २४ ॥ पञ्चदशः ॥

अथायमुदयनीयस्य कः कर्मण उपक्रमो भवतीति । बर्हिर्यजुषा कुर्यात्पाणी संमृशीत । परिस्तृणीयात्पात्राणि निर्णिज्य सꣳसादयेद्ब्रह्माणं दक्षिणत उपवेश्यावैवोत्तरत उदपात्रं निधाय जघनेन गार्हपत्यꣳ स्फ्यं निदध्यात्स्फ्यस्योपरि पात्रौ । पात्र्यां व्रीहीनावपेच्छूर्पादानप्रभृति[2] कर्मान्तस्तावत आ प्रस्कन्दनात्प्रस्कन्दनान्तं कर्म कृत्वा तिरः पवित्रमप आनीयाधिश्रित्य तिरः पवित्रं तण्डुलानावपेदाज्यं[3] निर्वपेदाज्यमधिश्रयेदुभयं पर्यग्नि कृत्वा जघनेन गार्हपत्यमौपसदायां वेद्याꣳ सामयजुर्वैरे सिद्धमत ऊर्ध्वं । तत्र घृतसादनं । दक्षिणं परिधिसन्धिमपरं विसृज्य दक्षिणं वा परि-

---

१ See TS. VI. 6. 3. 1.

२ Thus G U M D C, [illegible] Ben [illegible] H.

३ From °वपेच्छूर्पा° unto तण्डुलान om. G Be and Ben (sec. m.).

धिमग्रेण प्राञ्चं प्रायणीयमासादयेत्प्रत्यञ्चमुदयनीयमग्निमुखा अथ देवता इज्यन्ते । संस्थन्त[1] उदयनीयः संतिष्ठत । ॥ २५ ॥

I. 263. 2. अथ यदि पशुरुपक्रान्तः स्यात्पाणी संमृशीत । परिस्तृणीयात्पात्राणि निर्णिज्य सꣳसादयेत्प्रोक्षणीः सꣳस्कृत्य पात्राणि प्रोक्षेदाज्यं निरुप्याधिश्रित्य पर्यग्नि कृत्वा उपयमाद्दीत । संप्रैषप्रभृति पाशुबन्धिकं कर्म तायते । सिद्धमत ऊर्ध्वं[3] ।

III. 114. 17. यथो एतत्कालीनैः कल्पं वेदयन्ते मैत्रावरुणामिक्षया यजेतेति तस्यै सह सवनीयैर्वत्सापाकरणꣳ[2] सह सायंदोहमुदयनीयेन चरित्वा पाणी संमृशीत । परिस्तृणीयात्पात्राणि निर्णिज्य सꣳसादयेत्प्रोक्षणीः सꣳस्कृत्य पात्राणि प्रोक्षेदथ प्रातर्दोहं धेनूर्दोहयेदथैना[3] गार्हपत्ये श्रपयित्वानभिघारितामुद्वासयेदथाज्यं[4] निर्वपेदथाज्यमधिश्रयेदुभयं पर्यग्नि कृत्वाहवनीये वेदकान्परिधीन्परिधायाथैनां[5] पुनरधिश्रित्याभिघारितामुद्वास्यान्तर्वेद्यासादयेदथाग्नये सोमायेत्याज्यभागाभ्यां चरेदाज्यभागान्तं कर्म कृत्वा दक्षिणे वेद्यन्ते केशश्मश्रु वपते नखानि

१ Thus write G M U (sec. m.), संभुवंतः Be U (pr. m.) C, मध्वंतं H, संधुतं D.

२ Thus M Be Ben, वत्सानामपाक॰ G U D C, वत्सापाक॰ H.

३ ॰र्थं Ben (pr. m.) Be.

४ Thus H U D C G (pr. m.) Ben (pr. m.); ॰तामनभिघारितमु॰ M, ॰ताभिघारितमु॰ G (sec. m.) Be Ben (sec. m.).

५ वेदस॰ M only.

ऽनिक्रामते[1] ऽथाध्यभागप्रतिपत्केवान्ता[1] संतिष्ठते । ऽथैतस्मुदव-
.9. सानीयोपाꣳशु भवति पुनराधेयधर्मं[2] हि[2] । सहस्रावेदे स्मन्यजुषो हरणमसंनद्धा पत्नी यज्ञपुच्छमन्वास्ते । ॥ २६ ॥

षोडशः ॥

अथेममग्निचयं त्र्युपसत्कꣳ षडुपसत्कं द्वादशोपसत्कमिति[3] चिन्वते । स यदि साहस्रं त्र्युपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिꣳ सपुरीषामुपधाय संचिताहुती[4] जुहोति । द्वितीयां चितिꣳ सपुरीषामुपधाय संचिताहुती जुहोति । श्वो भूते प्रवर्ग्योपसद्भ्यां प्रचर्य तृतीयां चितिं चतुर्थीं चितिं पञ्चमीं चितिꣳ षष्ठीं चितिꣳ सपुरीषामुपधाय संचिताहुती जुहोत्यौपवसथ्यिकैव तृतीयाथ यदि साहस्रꣳ षडुपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिꣳ सपुरीषामुपधाय संचिताहुती जुहोति । श्वो[5] भूते प्रवर्ग्योपसद्भ्यां प्रचर्य द्वितीयां चितिꣳ सपुरीषामुपधाय संचिताहुती जुहोति[5] । स एवमेव पञ्चाहमौपवसथ्यिकैव षष्ठ्याथ यदि साहस्रं द्वादशोपसत्कं चेष्यमाणो भवति यथापूर्वं[6] तथाथ

---

१ ०न चाध्य० Ben H.

२ Thus G Ben C D; ०धर्माचि U. ०धर्म्यंचि M, ०धर्माचिच H, ०संज्ञामाच Be.

३ ०त्कं चेति Ben H.

४ Here and infra some of the MSS. read ०हुतीर्जुहो० ।

५ The passage from श्वो unto जुहोति om. M Be, in G it is effaced.

६ यथापूर्वमेव H G (sec. m.).

यदि द्विषाहस्रं[1] त्र्युपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिꣳ सपुरीषामुपधाय संचिताहुती हुत्वाहार्याꣳ सपुरीषामुपदधाति[2] । द्वितीयां चितिꣳ सपुरीषामुपधाय संचिताहुती हुत्वाहार्याꣳ सपुरीषामुपदधाति । श्वो भूते प्रवर्ग्योपसद्भ्यां प्रचर्य तृतीयां चितिं चतुर्थीं चितिं पञ्चमीं चितिꣳ षष्ठीं चितिꣳ सपुरीषामुपधाय संचिताहुती हुत्वाहार्याꣳ[3] सपुरीषामुपदधात्यौपवसथिकैव तृतीयाथ यदि द्विषाहस्रꣳ षडुपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिꣳ सपुरीषामुपधाय संचिताहुती हुत्वाहार्याꣳ सपुरीषामुपदधाति । श्वो[4] भूते प्रवर्ग्योपसद्भ्यां प्रचर्य द्वितीयां चितिꣳ सपुरीषामुपधाय संचिताहुती हुत्वाहार्याꣳ सपुरीषामुपदधाति[4] । स एवमेव पञ्चाहमौपवसथिकैव षष्ठ्यथ यदि द्विषाहस्रं द्वादशोपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिमुपधायाध्यस्तपुरीष[5] एताꣳ रात्रिं वसति । श्वो भूते प्रवर्ग्योपसद्भ्यां प्रचर्य पुरीषमुपधाय संचिताहुती हुत्वाहार्याꣳ[6] सपुरीषामुपदधाति[6] ।

---

1 दिषा॰ and द्विषा॰ the MSS. promiscue ; thus also चिषा॰, चिषा॰ ।

2 Thus Be G M, -मुपधाय the other MSS.

3 चार्यꣳ M here and infra each time.

4 From श्वो unto ॰दधाति effaced in G.

5 Most of the MSS. ins. सपुरीषाम् after चितिम्, but cp. the following chapter.

6 हुत्वा हेहे चाचार्यं सपुरीषं उप॰ M.

स एवमेव यथासूत्रं तथा वर्तमानः पुरीषंपुरीषमुपधाय संचिताकृती कृत्वाहार्याꣳ सपुरीषामुपदधात्यौपवसथिकैव । द्वादशी । ॥ २७ ॥

अथ यदि त्रिषाहस्रं त्र्युपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिꣳ सपुरीषामुपधाय संचिताकृती कृत्वा द्वे आहार्ये सपुरीषे उपदधाति । द्वितीयां चितिꣳ सपुरीषामुपधाय संचिताकृती कृत्वा द्वे आहार्ये सपुरीषे उपदधाति । श्वो भूते प्रवर्ग्योपसद्भ्यां प्रचर्य तृतीयां चितिं चतुर्थीं चितिं पञ्चमीं चितिꣳ षष्ठीं चितिꣳ सपुरीषामुपधाय संचिताकृती कृत्वा द्वेद्वे आहार्ये सपुरीषे उपदधात्यौपवसथिकैव तृतीयाथ यदि त्रिषाहस्रꣳ षडुपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिꣳ सपुरीषामुपधाय संचिताकृती कृत्वा द्वे आहार्ये सपुरीषे उपदधाति । श्वो[१] भूते प्रवर्ग्योपसद्भ्यां प्रचर्य द्वितीयां चितिꣳ सपुरीषामुपधाय संचिताकृती कृत्वा द्वे आहार्ये सपुरीषे उपदधाति[१] । स एवमेव पञ्चाहमौपवसथिकैव षष्ठ्यथ यदि त्रिषाहस्रं द्वादशोपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिमुपधायाध्यस्तपुरीष एताꣳ रात्रिं वसति । श्वो भूते प्रवर्ग्योपसद्भ्यां प्रचर्य पुरीषमुपधाय संचिताकृती कृत्वा द्वे आहार्ये सपुरीषे उपदधाति । स एवमेव यथासूत्रं तथा

१ कृत्वा द्वेद्वे आहार्ये सपुरीषे उप॰ M

१...१ Effaced in G.

वर्तमानः पुरीषंपुरीषमुपधाय संचिताहुती हुत्वा द्वे आहार्ये सपुरीषे उपदधात्यौपवसथिकेव द्वादशी । कथमु[1] खल्वन्तरुपसत्कं बहिरुपसत्कमन्तर्बहिरुपसत्कमिति विजानीयाद् । यस्य संवत्सरस्य द्वादशावशिष्य राजानं क्रीणीयात्सो ऽन्तरुपसत्कः । संवत्सरे पर्यवेते राजानं क्रीणीयात्स बहिरुपसत्को । यस्य संवत्सरस्य षडवशिष्य राजानं क्रीणीयात्तस्योपसदः सुत्यान्तरस्य षड्हाः सो ऽन्तर्बहिरुपसत्कः । ॥ २८ ॥ सप्तदशः ॥

II. 1. 8. मृदमेताꣳ समां बिलेन करोतीति[2] । समां[3] भूम्यां
II. 1. 16. निदधातीत्येवेदमुक्तं भवत्यथैतावश्वगर्दभावुत्तरत उपस्थापयति[4] पुरस्ताद्वा प्रत्यञ्चौ । स यदि पुरस्तात्प्रत्यञ्चौ दक्षिणो ऽश्व उत्तरो गर्दभो । ऽथ यद्युत्तरतः पूर्वो ऽश्वो[5] ऽपरो[5] गर्दभो । ऽग्निभ्यः पशूनालभत इति । पञ्चानां पशूनां ब्राह्मणं भवति । स यद्यु[6] हैतान्पशूनुपाकरोत्या बर्हिष उपासनात्पाशुबन्धिकं कर्म वर्तयित्वा शिराꣳसि प्रच्छिद्यापो देहानभ्यवहरेयुरपो

---

१ Thus U G (pr. m.) C Ben (pr. m.) H M D, कथ G (sec. m.) Ben (sec. m.)

२ इति given by G U and a citation in the Mahāgnisarvasva.

३ समां D H U (pr. m.) C, समं M U (sec. m.) Ben (sec. m.) Be.

४ Thus (singul.) U (sec. m.) the Viv. and the Mahāgnis., plural the other MSS.

५ Thus (श्वोपरो) M D C U (pr. m.) the Viv. and Ms., ऽश्वउत्तरतो Be Ben G U (sec. m.); H corrupt.

६ यद्य M. (i.e. *yady aha*).

देवाननभ्यवहरन्तीति विज्ञायते । मासमेतं[१] ब्रह्मचर्यं चरति सो ऽधःसंवेशमांऽसमाश्नस्त्युपायो भवति पूर्वदीक्षेत्येतामाचक्षते[२] । यथोदयमेवैतं मासमभि दीक्षमाणो मन्यते । ऽथ कृष्णाजिने यजमानं वाचयति मुष्टी चैव न करोति वाचं च न यच्छतीति । कृष्णाजिनप्रभृति कर्मान्त एष भवत्यावेदनात्प्रथमायामुपसदि वेदिं विमिमीते[३] स्तम्बयजुर्हरतीति । कर्मवशकारितमेवैतद्भवत्यथ[४] संभारेषूषान्निवपन्यदद्य चन्द्रमसि कृष्णं तन्मनसा ध्यायेत्तदपीहेति । ॥ २९ ॥

उत्तरमुत्तरं प्रति बलीवर्दमुत्तरामुत्तरां सीतां कृषन्नौषधं वपन्स्वयमातृण्णावकाशं नावकामेदित्यथ[५] हैके[६] पुरुषे च स्वयमातृण्णायां च साम गायन्ति । किमु खलु स्वयमातृण्णानिकोऽत भवतीति । हिरण्येष्टका मण्डलेष्टका रेतःसिगित्येव ब्रूयाद्यमिष्टकागणमुपदध्यात्तं न व्यवेयाद्दक्षिणेन दक्षिणमुत्तरेणोत्तरं । स यदि दक्षिणतः पुरस्ताद्वेष्टका उपदध्याद्दपसलैरावर्तेताथ यद्युत्तरतः पश्चाद्वा प्रदक्षिणमावृत्य स्वयमातृण्णामेवाभिमुख इष्टका उपदध्यात्कृत्तिका उपदधा-

१ Thus D C M (sec. m.) Ben Ms ; मासमेकं Be H G U M (pr. m.).

२ पूर्वा दी॰ Ben H.

३ मिमीते Ben H.

४ एव om. M G D C ; नद् instead of तनद् Ben (sec. m.) Be.

५ नापका॰ M D C H U (pr. m.) Ms ; नातिका॰ G U (sec. m.) Be Ben.

६ All the MSS. ins. पुरुषे, only Ms. om.

तीति। कतमा उ खल्विमाः कृत्तिका भवन्तीति। विद्युत
इत्येव ब्रूयाद्‌लवणार्थं[1] बौधायनस्याग्नावग्नौ पुनश्चितिः। सह
सा न पुरीषचितिः षष्ठ्या चित्या दृङ्खिजेति। दृङ्खिजैवेति

II. 45. 17. शालीकिः। षष्ठं प्रच्छादमाहरमाणः कस्मिंस्तु खल्वेनत्काल
आहरेदिति। नचचेष्टका उपधायेत्येव ब्रूयात्स चिभिः कर्म-
भिरभिप्रैति पुरीषस्योपधानेन साहस्रवता प्रोक्षणेन धेनुकरणे-
नेति। सो ऽष्टाभिः कर्मभिरभिप्रैत्युत्तमे संचिताहुती शत-
रुद्रीयं नमस्काराः परिषेचनं विकर्षणꣳ सर्पाहुतीः साममिरु-
पस्थानमनुशꣳसनमिति। ॥ ३० ॥ अष्टादशः ॥

III. 133. 1. अथ किं[2] नानाबीजानां निर्वपणे तन्त्रमिति[2]। स्रुगादानं
तन्त्रꣳ शूर्पादानं तन्त्रं [3]धूःप्रभृतयः शकटमन्त्राः सर्वे तन्त्रं
भवत्या[4] साविचाद्बीजंबीजमभ्यावर्तते सावित्रं। तन्त्रं
दशहोताभिप्रव्रजनं परिदानमिति तन्त्रं भवति। तन्त्रं
कृष्णाजिनावधवनं तन्त्रमुलूखलाध्यूहनं तन्त्रं पुरोडाशीयाना-
मावपनं तन्त्रं मुसलस्यावधानं तन्त्रꣳ शूर्पस्योपोहनं तन्त्रꣳ

---

१ °द्लवणा° some of the MSS. and the citation in Viv.; but cp. the vivaraṇa itself: लवणि वै सा नाꣳ लवन्तीमिति (TS. v. 4. 10. 3) होपनिहव्यार्थां पुनश्चितिरिति।

२ किं and इति only given by U (sec. m.) G (sec. m.), Ms.; the other MSS. om. these words.

३ Before धूः° M Be Ben D C G (pr. m.) ins. प्रत्तौषधं प्रत्तौषधं or प्रत्तौषधषं (i.e. प्रत्तौषधं ?).

४ Thus H Be G D C Ms; भवंत्या Ben U M.

हविष्कृदावपनप्रभृतिमन्तो बीजंबीजमभ्यावर्तते प्रस्कन्दनान्तो। यथो एतच्छालीकेः कल्पं वेदयन्ते सह स्विष्टकृतात्याकामे- दित्येकादशप्रयाज एवैतदुपपद्यते न पञ्चप्रयाजे। यथो एतदौ- पमन्यवस्य कल्पं वेदयन्ते पुरस्तात्स्विष्टकृतो यावदाम्नातेना- भिषिञ्चेन्नाच कृष्णाजिनं न दर्भौ न पार्थानि भवन्ति कुशानेव संस्तीर्य तेष्वेनमभिषिञ्चेदिति[1]। कथमु खलु मन्त्रिणामभिषेक आवर्तत इत्यभिषेक आवेदनं प्रथमे ऽग्न्यभि- षेकः प्रथमे ऽग्न्यश्वस्यावघ्रापणमादितस्त्वान्ततस्त बहिष्पवमान- मास्तावे स्तुवीरन्नहरहर्यज्ञायज्ञियस्य[2] स्तोत्रे द्वाभ्यामभिमृशे- दिति। ॥ ३१ ॥

कथमु खल्वेकादशिनानां[3] पशूनां पर्याया उपक्रमो भवती- तीडसूनँ संस्तीर्य पृषदाज्यं विहृत्य शुक्लाँ समानीयान्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रम्य संवदेताभिघारयेदासादयेत्पशुं[4] पशुहोता यतस्सूपस्तृणीते। मुख्यस्य पशोर्दैवतमवदाय[5]

---

१ Corrected acc. to the Dvaidha; तेष्वेवैनम॰ MSS. (वेष्वेन॰ M. तथैवेन॰ H).

२ Thus, with the Samhitā, G Be Ben, ॰यज्ञीय॰ H U D M C.

३ Thus(खल्वेका॰) MSS. (एकादशिनीनाम् M.).

४ ॰दासादये॰ not found in Be and effaced in Ben, but cp. XXV. 23, init.—पशुं seems, here and further on, to have been changed into पशून् in G.

५ ॰दैवतम॰ M U Be, the Viv., ॰दैवतम॰ H G D C Ben.—After ॰दाय M. ins. यच ।

वृक्यमेदो यूषन्नवधाय तेन जुहूं प्रोर्णुयाद्यूष्णोपसिच्याभि-
घारयेद्यथोपभृति स्विष्टकृते[1] सर्वेषां त्र्यङ्गाणाꣳ सकृत्सकृत्स्वि-
ष्टकृते समवदाय वृक्यमेदो यूषन्नवधाय तेनोपभृतं प्रोर्णुया-
द्यूष्णोपसिच्य[2] नाभिघारयेदथ[2] हृदयं जिह्वां वक्षस्तनिम
मतस्नौ[3] वनिष्ठुमिति[4] पात्र्याꣳ[5] समवधाय यूष्णोपसिच्य
नाभिघारयेदथ कꣳसे वा चमसे वा वसाहोमं गृहीत्वा
यूष्णोपसिच्याथाभिघारयेत्सम्प्रेत्यपशुं । पार्श्वेन वसाहोमं
123. 13 प्रयौयाम्मꣳस्तः[5] कुर्वतो । जघनेनोत्तरवेदिं परिक्रम्याश्रावये-
द्याज्याया अर्धर्चे प्रतिप्रस्थाता वसाहोमं जुहुयात्परिधिꣳ-
श्चाच दिग्भ्यो । ऽथेतरद्वसाहोमहवन्याꣳ समवनयेद्वषट्कृते हवि-
र्जुहोति । सो ऽनिष्ट्वैव स्विष्टकृतमुदङ्ङत्याक्रम्य जुह्वां चैव
वसाहोमहवन्यां चोपस्तृणीते । द्वितीयस्य पशोर्दैवतमवदाय
वृक्यमेदो यूषन्नवधाय तेन जुहूं प्रोर्णुयाद्यूष्णोपसिच्याभि-
घारयेद्यथोपभृति[6] स्विष्टकृते सर्वेषां त्र्यङ्गाणाꣳ सकृत्सकृत्सम-
वदाय वृक्यमेदो यूषन्नवधाय तेनोपभृतं[7] प्रोर्णुयात्समवत्त-

---

१ Not given by G U D M.

२ °सिच्याभिघा° G, °सिच्यानाभिघा° H.

३ Thus D Ben C U (pr. m.), मतस्नू G M U (sec. m.), मतस्न H.

४ Thus we ought to read also IV. 9: 123. 7.

५ Here and further on the MSS. write मंसः मसः मोसः मंसः मसः ।

६ °थैतयो° M.

७ After °भृतं G H M ins. यूष्णोपसिच्य नाभिघारयेत्, U ins. यूष्णोपसिच्य नाभिघारयेदथ हृदयं जिह्वां वक्षस्तनिम मतस्नु वनिष्ठुमिति पात्र्याम्; C is incomplete.

मेतद्यूष्णोपसिच्य[1] नाभिघारयेत्तथैव[2] कंसे वा चमसे वा वसाहोमं गृह्णीयाद्यूष्णोपसिच्येदथाभिघारयेत्स्रुग्भ्याम् । पार्श्वेन वसाहोमं प्रयौयात्मँस्ताः कुर्वतो । जघनेनोत्तरवेदिं परिक्रम्याश्राव्याज्याया अर्धर्चे प्रतिप्रस्थाता वसाहोमं जुहुयात्परिशिष्ट्याश्च दिग्भ्यो[3] । वषट्कृते हविर्जुहोति । स एवमेव सर्वेषां पशूनां । स यत्र वारुणस्य स्विष्टकृते ऽवद्यन्ति-रभिघारयेत्समवत्तमेवैतद्यूष्णोपसिच्याभिघारयेत्तथैव कंसे वा चमसे वा वसाहोमं गृह्णीयाद्यूष्णोपसिच्याभिघारयेत्संस्रुग्भ्याम् । पार्श्वेन वसाहोमं प्रयौयात्मँस्ताः कुर्वतो । जघनेनोत्तरवेदिं परिक्रम्याश्राव्याज्याया अर्धर्चे प्रतिप्रस्थाता वसाहोमं जुहुयात्परिशिष्ट्याश्च दिग्भ्यो । ऽथेतरद्वसाहोमहवन्यां समवनयेद्वषट्कृते हविर्जुहोत्यथ पुरस्ताद्वनस्पतेः समान्यो दिशः प्रतियजेदथ वनस्पतिना चरेदथ स्विष्टकृता । सिद्धमत

3. ऊर्ध्वं । अथो एतदौपमन्यवस्य कल्पं वेदयन्ते मैत्रावरुण्यामिक्षया नियुत्वत्या यजेतेति सिद्धमत औपवसथिकं कर्म जागी-

8. याद्यामावास्यायां संनयतो ऽन्यत्र पिण्डपितृयज्ञात्संवत्सरं

---

1 समवत्तमेवैत० M, समवत्तमेतद् D: Ben om. समव० unto ०घारये० (l. 2).

2 एव om. M. probably rightly.

3 Between दिग्भ्यो and वष० M H Ben U ins. तथैव कंसे वा चमसे वा समवनयेद्, in Ben and U these words are effaced; G (partly secunda, partly prima manu) तथैवेतरद्वसाहोमहवन्यां समवनयेद् ।

न कंचन प्रत्यवरोहेन्न ग्रीष्मंमाꣳसं खादेन्न वयसां माꣳसं नाग्निं चित्वा रामामुपेयान्नाग्निचिद्वर्षति धावेद्यदि[1] धावेदुपावर्तेतान्नाद्यमेवाभ्युपावर्तत[1] इति ब्राह्मणम्। ॥ ३२ ॥

एकोनविꣳशः॥

II. 63. 8. अथास्मिन्वाजपेये सप्तदशानाꣳ रथानां चयस्तयो ऽश्वास
I. 63. 11. एकपञ्चाशतमुत्तरतः प्रष्टिं नियुञ्ज्याच्चतुर्विꣳशतिं[2] पशूनि-
II. 64. 4. त्यग्नीषोमीयस्यानूबन्ध्यस्य चतुर्विꣳशौ भवतो। ऽथ वै भवति
सावित्रं जुहोति कर्मणःकर्मणः पुरस्तादिति। दीक्षणीयां
निर्वप्स्यन्सावित्रं जुहोतीति। सावित्रादेव सावित्रं भवति।
II. 64. 7. दीक्षाहुतीर्होष्यन्सावित्रं जुहोतीति। सावित्रꣳ हुत्वा दीक्षा-
II. 64. 8. हुतीर्जुहुयात्प्रायणीयां निर्वप्स्यन्सावित्रं जुहोतीति। सावि-
ib. 9. त्रादेव सावित्रं भवत्यन्तर्हिरण्याꣳ[3] होष्यन्सावित्रं जुहो-
ib. 10. तीति सावित्रꣳ हुत्वान्तर्हिरण्यां[4] जुहुयात्पदेन चरित्वा
राजानं क्रीत्वोह्यातिथ्यं निर्वप्स्यन्सावित्रं जुहोतीति। सवि-
ib. 11. त्रादेव सावित्रं भवति। प्रथमाभ्यां प्रवर्ग्योपसद्भ्यां प्रचरिष्य-
न्सावित्रं जुहोतीति। सावित्रꣳ हुत्वा प्रथमाभ्यां प्रवर्ग्योप-
ib. 13. सद्भ्यां प्रचरेन्महावेद्यै पूर्वं परिग्राहं परिग्रहीष्यन्सावित्रं
ib. 14. जुहोतीति। सावित्रꣳ हुत्वा स्फ्यमाददीताहवनीयं प्रणेष्य-

---

१ यदि धावेद् om. most of the MSS.

२ Thus G (sec. m.), °विंशतिः Bc, °विंशतं Ben, °विंशं D H M G (pr. m.), विंशं U C.

३ °ण्यां G (pr. m.) U (sec. m.) Ben H; °ण्ये Be U (pr. m.) M.

४ °ण्यां U (sec. m.), °ण्ये the other MSS.

न्सावित्रं जुहोतीति । सावित्रꣳ हुत्वेध्ममाददीत रथवाहने सदोहविर्धाने संमेष्यन्सावित्रं जुहोतीति । सावित्रꣳ हुत्वा रथवाहने सदोहविर्धाने संमिनुयादग्नीषोमौ प्रणेष्यन्सावित्रं जुहोतीति । सावित्रꣳ हुत्वाग्नीषोमौ प्रणयेद्यूपमुच्छ्रयिष्यन्सावित्रं जुहोतीति । सावित्रꣳ हुत्वा प्रोक्षणीराददीत । सर्वन्तं यूपमुत्सृज्याग्नीषोमीयं पशुमुपाकरिष्यन्सावित्रं जुहोतीति । सावित्रꣳ हुत्वा बर्हिषी आददीत । तस्य प्रचिह्नं वपया चरित्वा वसतीवरीर्ग्रहीष्यन्सावित्रं जुहोतीति । सावित्रꣳ हुत्वा कुम्भमाददीत । पशुपुरोडाशं निर्वप्स्यन्सावित्रं जुहोतीति । सावित्रादेव सावित्रं भवति । ॥ ३३ ॥

5. द्वूपरस्तुरग्निर्भवतीत्यनुदिशमग्नौ[१] स्थापयित्वाग्निष्ठां च
6. सूर्यस्थां च संमिनुयात्पञ्चैन्द्रानतिग्राह्यान्गृह्णातीति[२] । सर्व
2. एवैते सोपयामा ग्रहीतव्या भवन्ति । माहत्या प्रचर्यैतान्सं-
स्थापयेदिति । तन्त्रमुल्मुकहरणं तन्त्रमभिगृप्रैषो ऽभ्यावर्तेत[३]
संस्थितहोम ऊर्ध्वे[४] बर्हिषी[४] भिन्द्यात्स्वाहाकृतिप्रैष आज्यं द्वेधा
9. विभजेदुभयभागिन्य स्तोकीया । अथेदꣳ रथचक्रं प्रादेशमात्रं

१ Thus Ben H, °ग्नीः the other MSS.

२ Before ग्रहा° Ben H Be ins. पञ्चान्; the word is missing in M D C and effaced in G.

३ Corrected; °वर्तेत U, °वर्तीत Be, °वर्तते the other MSS.

४ Thus G U (sec. m.) H Ben (pr. m.), ऊर्ध्वबर्हिषि Ben (sec. m.) C, ऊर्ध्वबर्हिषी Be, ओर्ध्वबर्हिषी M.

II. 75. 8. भूमेरच्छिन्नं[1] भवत्यपरेण परीत्य पञ्चमी संस्रतीति रथचक्रे
II. 79. 1. एवैते संस्रत्यथावाजिसृतो[2] दक्षिणापथेनोपातीत्येति सूत-
ib. 2. राजन्या एवैत उक्ता भवन्ति[2] । मारुता अग्रेणाहवनीयं परी-
ib. 14. त्येति वत्ससंग्रहीतार एवैत उक्ता भवन्त्यथ यजमानं तार्प्यं
परिधापयतीत्याज्येनैवैतत्तृप्तं[3] वासो भवत्यथाप्युदाहरन्ति तृपा
नाम वृक्षास्तेषामेवैतद्भवत्ययेमं वाजपेयꣳ सर्वसप्तदशमेके[4]
ब्रुवत[5] । आदेशादेव सप्तदशमेकविंꣳशं वैष्णवीषु शिपिविष्ट-
वतीषु स्तुवीरन्निति[6] । ॥ ३४ ॥ विंꣳशः ॥

॥ इति पञ्चविंꣳशः प्रश्नः ॥

---

१ °वत्सत्रं M Ben C.

२ After संस्रवति and भवन्ति some of the MSS. इति ।

३ Thus M, °वैततप्तं D C, °वैतंतप्तं G U Ben, वैनंतप्तं Be, वैतंतप्तं H.

४ Thus G Ben Be, पर्वस° M, सर्वसप्त° H U ; D C om. सर्वं ।—Before एक Be U D M ins. एव ।

५ ब्रुवतेन M.

६ कुर्वंति instead of स्तुवीरन्निति M C.

अथायꣳ राजसूयो ऽर्धमासदर्शैर्मासैः संतिष्ठते ऽर्धमासैर्वा । तस्मिन्सोमसꣳस्थाः पञ्चैकाहा[1] अहीनो द्विरात्रः । षट् छाला[2] । अष्टौ यूपाः षडु हाग्निष्टोमिका द्विपशौ[3]पशुबन्धे[3] सौत्रामण्यामष्टमस्तावन्त एवावभृथाः । क उ खलु हविषो हविर्निरुप्यत इत्यानुमत इत्येव ब्रूयात्कृष्णं वासः कृष्णतूषं दक्षिणेति । कृष्णाद्यमित्येवेदमुक्तं भवति । काममिष्ट्या पशुबन्धेनेति । संतन्येन्नेष्टाग्रयणेन वा पार्वणेन वा यजेत । कथमु खलु साकमेधपर्वणीति । महारात्रे पूर्वा संततिः श्वो भूत उत्तरा प्रदोषे । किमु खल्वसमुदितं भवतीति । प्रागनूयाजिकात्संप्रैषादित्येव ब्रूयाद्बार्हस्पत्यं चरुं निर्वपति ब्रह्मणो गृह इति । योऽन्यो याजमानासंयुक्तो[4] ब्राह्मणो[5] भवति । भगाय चरुं वावातायै गृह इति । यान्या महिष्या[6] एव[6] सुभगा भवति । नैर्ऋतं चरुं परिवृक्त्यै गृह इति । दुर्भगैवैषोक्ता भवति । पौष्णं चरुं

---

१ Thus M only; पंचरे काच H. पंचारैकाचा (i.e. पञ्च चर एकाहाः ?) पंचारैकाच Ben U, पंचारैकाचिनो Be.

२ शाला MSS.—द्विरात्रश्शैका the Vivaraṇa.

३ Thus G (sec. m.) and the Viv. पशुपशुबंधे Be. °पशूपशुबंधे G (pr. m.) Ben U H, °पशूपशूपशुबंधे M.

४ Uncertain reading; याजमानासं° M Be Ben. याजमानसं° H U G (pr. m.), याजनसं° G (sec. m.). The Viv.: योन्याजनसंयुक्तः and यन्या-जनासंयुक्तः ।

५ After ब्राह्मणो Ben G H U ins. भवा, M भव; this word is missing in Be and has been effaced in G and Ben.

६ Conjectural reading. महिष्यैव H Be U Ben. महिष्यैव M, महिष्यं G (omitting एव).

भागदुघस्य गृह इति । महानसिक[1] एवैष उक्तो भवत्यथाप्यु-दाहरन्ति यो भागदाभौ[2] दोग्धि स एवैष उक्तो भवति । दाद्याहेन[3] रत्निनाꣳ हवीꣳषि । यथोद्गमं[4] मैत्राबार्हस्पत्यं । द्व्यहो ऽवभृथ एतस्यैव[5] पूर्वपक्षस्य । तस्मिन्संतनीभ्यां यजेताथ चेदुक्थ्ये ऽभिषेचनीये ऽग्निं चिन्वीतैतस्मिन्नेव द्विरात्र आग्नि-कानि सावित्राणि कृत्वोखाः संभृत्य पशुशीर्षाणि च वायव्येन पशुना यजेत । ॥ १ ॥

II. 97. 7. अपां पतिरसीत्यपांपतीयाः । समुद्रियाणामेवैता उक्ता भवन्ति । महतामोज स्थेति निवेष्या[6] । आवर्तानामेवैता[7] उक्ता भवन्ति । सूर्यवर्चस स्थेत्यभिदृष्याः[8] । प्रसन्नानामेवैता उक्ता भवन्ति । शक्वरी स्थेति[9] गोर[10] जरायोरेवैता[10] उक्ता भवन्ति ।

II. 111. 15. सो ऽग्नेवाग्नेयेनाष्टाकपालेन यजेतेति । सद्यः संतिष्ठमान उक्थ्य एतत्सूचं भवत्यथ चेदतिप्रवर्धेत तदानीमेवाग्नेयेनाष्टाकपालेन

---

१ Thus Be Ben (sec. m.); माहानसिक G (sec. m.) and one copy of the Viv; महानासिक H U G (pr. m.) Ben (pr.° m.) and another copy of the Vivaraṇa; महानासीक M.

२ °भौ M Ben, °भि Be H G U.

३ माघो M.

४ °द्गमो M. द्गमो all the other MSS.

५ एव om. M.

६ Thus G U M, °वेष्या Be Ben, °वेषा H.

७ चाहनानां or चाहनानां MSS.

८ Thus all, against °भिदृश्या: of the text proper.

९ गोरश्वा seems to have fallen out.

१० Conjecturally; गोरजरायो° M, गावजरायो° G (pr. m.), गावश्वायो Ben (sec. m.), गारश्वायो Ben (pr. m.), गारजरायो° H Be U, गावश्वा-रयो G (sec. m.).

यजेत। श्वो भूते सारस्वतेन। दशदशाच ‹चमसमभिषंजानत इति। षोडशचमसे षोडशाद्दशचमसे च सप्तदशप्राथेतरेषु नवनव। प्रसर्पणप्रभृतय एवैते[1] भवन्त्यपुरोमान्ता। अथायं प्रतीचीन-स्तोमः केशवपनीयो ऽतिरात्रः षोडशिको भवति। तस्य चाग्निष्टोमिकानि स्तोत्राण्यावृत्तानि भवन्त्येकविंशो बहिष्प-वमानः सप्तदशान्याज्यानि माध्यंदिनस्य पवमानः पञ्चदशानि पृष्ठान्याभवस्य[2] पवमानस्त्रिवृद्यज्ञायज्ञियमित्यथ[3] प्रतीचीन-स्तोमाय केशवपनीयायातिरात्राय दीक्षते। तस्य षड् दीक्षाः षडुपसदस्त्रयोदश्यां प्रसुतश्चतुर्दश्यामुदवसानमथैतस्मिन्नेव पक्षा-वग्रेषे व्युष्टये[4] द्विरात्राय दीक्षते। स एतां चैकां रात्रिं पूर्वपक्षस्य दीक्षितो भवति द्वे चापरपक्षस्य। तासां[5] द्वादशो-पसदो। ऽथोपवसत्यथोपवसथीये[6] ऽहन्यमावास्यायां[6] पूर्वमह-र्भवत्युत्तरस्मिन्नुत्तरमिति। संतिष्ठते व्युष्टिर्द्विरात्रो[7]। ऽथो-त्तरां शालामध्यवस्येदथ मथित्वाग्नीन्विहृत्योदयनीयायाग्नि-

---

१ Thus Ben. एवते M, इते H Be G U.

२ Thus M G (sec. m.). °भंवतिच Ben, °भंव the other MSS.

३ चथ om. H Ben.

४ Thus M only, व्युष्टि the other MSS.

५ Thus G (sec. m., first hand invisible) and the Viv., which comments: प्रतीचप्रतीनाम्: तथांचा H U, तथाम्भं Be, तस्य M, Ben, defective.

६ Thus, hesitatingly, emended; थोपवसत्यथाम्यौपवसथ्योभवतिमावा° G (pr. m.), थोपवसत्यथार्हौपवसथ्यममावा° Ben, थोपवसथ्यंचम्यमावा° G (sec. m.), थोपवसथाथाम्यौपवसथ्योमावा H Be M (the last only °थथे-ममा°), थोपवसथाथाम्यौपवसथ्योमावा° U.

७ Thus, here and further on, M only; °द्विरि° all the other MSS.

ष्टोमाय[1] दीक्षते। तस्य तिस्रो दीक्षास्तिस्र उपसदः सप्तम्यां प्रसुतः। संतिष्ठत एष[2] उदयनीयो[2] ऽग्निष्टोमः सहस्रदक्षिणो। ऽथैतस्मिन्नेव पञ्चावशेषे क्षत्रस्य धृतिनाभिविधत्ते[3] देविकाहविर्भिस्त्रैधातवीयया सौत्रामण्येति। संतिष्ठते राजसूयो ऽर्धसप्तदशैर्मासैरथ ग्रामीकैः केशवपनीयान्तस्ते ऽर्धषोडशाः[4]।

॥ २ ॥ प्रथमः ॥

अथातो ऽन्नसवः। प्रसिद्धमेव प्रथमो ऽर्धमासः संतिष्ठते। पञ्चाहेन चातुर्मास्यानि द्व्यहेन संतनी अष्टमे ऽहनीन्द्रतुरीयं नवमे ऽह्नि पूर्वाणि देविकाहवीꣳषि दशमे ऽन्युत्तराण्येकादशे[5] द्वादशे त्रयोदश इति त्रिषंयुक्तैश्चतुर्दशे वैश्वानरो द्वादशकपालः पञ्चदशे वारुणो यवमयश्चरुरिति मासो। द्वादशाहेन रत्निनाꣳ हवीꣳषि त्रयोदशे मैत्राबार्हस्पत्यं द्व्यहेन संतनी अर्धमासेनाभिषेचनीय उक्थ्य इति द्वौ मासावर्धमासेन सप्तदशो दशपेयो ऽर्धमासं दीक्षितो[6] दीक्षितव्रतीति त्रयो मासा। अर्धमासेन प्रतीचीनस्तोमः केशवपनीयो ऽतिरात्रो ऽर्धमासेन व्युष्टिर्द्विरात्र इति चत्वारो मासा। अर्धमासेन क्षत्रस्य धृतिरिति। ते ऽर्धपञ्चमा। अथ ग्रामीकैः। सप्ताहेन

---

१ Thus M; °त्रिवृत्सोदवसानीयाया° or यया° the other MSS.

२ इयमुपवसथानीया Ben.

३ Thus G (sec. m.) and the Viv.; °भिधत्ते Be U, °भिविधत्ते Ben, °भिधीयते M.

४ Thus M Be G (sec. m.), °षोडशः H U G (pr. m.), °षोडश Ben.

५ °ण्युत्त° Be Ben.

६ Effaced in M.

पवित्रो ऽग्निष्टोमः स एवमेव पञ्चावरोधं सिद्धमा वारुणाद्द्वादशाहेन रत्निनां हवींषि त्रयोदशे मैत्राबार्हस्पत्यं द्वादशेन संतनी इति मासो । ऽर्धमासेनाभिषेचनीय उक्थ्यो ऽर्धमासेन सप्तदशो दशपेय इति द्वौ मासावर्धमासेन प्रतीचीनस्तोमः केशवपनीयो ऽतिरात्रो ऽर्धमासेन व्युष्टिर्द्विरात्र इति षष्ठो मासः । अर्धमासेन क्षत्रस्य धृतिरिति । ते ऽर्धचतुर्था । अथ पतन्तको । द्वादश दीक्षा द्वादशोपसदः । सप्ताहो ऽहीनो राजसूयो । यथावकाशमितरै राजसूयहविर्भिर्यजते । ऽथ देविकाहविर्भिर्यजते । ऽथ त्रैधातवीयया यजते । ऽथ सौत्रामण्या यजते । संतिष्ठते राजसूयः । ॥ ३ ॥ द्वितीयः ॥

अथेममिष्टिकल्पं पञ्चदशसामिधेनीकं च सप्तदशसामिधेनीकं च समामनामस्तच[1] सिद्धं[1] याजमानं बौधायनस्य कल्पो[2] । यथाम्नायं शाखीये स्तोत्रींस्तृचाननुब्रूयादिति । त्रिः प्रथमामनूच्य तिस्रो ऽनन्तरा अनुब्रूयात्त्रिरुत्तमां । ताः[3] पञ्चदश[2] । पञ्चदशानुब्रूयादित्येकादशैमाः[3] सामिधेन्यः समामनामस्तासां त्रिः प्रथमामन्वाह त्रिरुत्तमां । ताः पञ्चदश । सप्तदशानुब्रूयादेकविंशतिमनुब्रूयाच्चतुर्विंशतिमनुब्रूयात्त्रिंशतमनुब्रूयाद्द्वात्रिंशतमनुब्रूयात् षट्त्रिंशतमनुब्रूयाच्चत्वारिंशतमनुब्रूयाच्चतुश्चत्वारिंशतमनुब्रूयादष्टाचत्वारिंशत-

---

१ तस्य प्रविष्टं M.

२ कल्पे M.

३ Thus corrected; ताः पंचदश सप्तदशानु° M Bo U H. ताः पंचदशानु° Ben; in M सप्तदश is effaced and G is defective.

मनुब्रूयादिति धाय्यालोक एता धातव्या भवन्त्याग्नेय्यः सर्वा गायत्र्यः। सर्वाणि छन्दांस्यनुब्रूयादपरिमितमनुब्रूयादिति धाय्यालोक एवैता धातव्या भवन्ति। नैताः सर्वा गायत्र्यो। गायत्री पुरोऽनुवाक्या भवति त्रिष्टुग्याज्या। पुरस्ताल्लक्ष्मा पुरोऽनुवाक्या भवत्युपरिष्टाल्लक्ष्मा याज्या। मूर्धन्वती पुरोऽनुवाक्या भवति नियुत्वत्या यजत्युपांशुयाजमन्तरा यजतीति। दर्शपूर्णमासयोरेवैतदुपपद्यते नान्यत्र। ॥ ४ ॥ तृतीयः ॥

अथेमाः काम्या इष्टयो निष्पुरीषेणैव प्रयोक्तव्या भवन्ति। स[1] संवत्सरं पयोव्रतः स्याद्द्वादशाहं वा यावद्वा[2] ग्रंसीत[2]। तासां याः समानसंयोजना एकां चेत्तासां निर्वपेत्सर्वा एवैता निर्वप्तव्या भवन्ति यथो एतदनायुक्तो[3] ऽग्निपरिचरो ऽन्यमुद्धृत्य पुनरप्युद्धरति। कथमत्र प्रायश्चित्तं सिध्यतीऽ न सिध्यतीऽ इति। सिध्यतीत्येक आहुरथ हैक आहुर्न सिध्यतीति। निर्दिष्टभागो वा एतयोरन्यो ऽनिर्दिष्टभागो ऽन्य इत्युभावु[4]

II. 125. 3. खल्विमावनिर्दिष्टभागौ भवतो। नैव सिध्यतीति। तस्य धृष्टेरादानं। गार्हपत्यमकाशाद्धृष्टिमाददीत। तयाहवनीये[5] वैश्वानरस्य कपालान्युपदध्यात्। प्रदक्षिणमावृत्य गार्हपत्ये मारुतस्य

१ Found in Ben H, the other MSS om. the word

२ Thus G, तावद्वा द्रांसीत Be. यावत्द्रांसीत M U, यावद्द्वादशसौत H याव--सौत Ben

३ Thus Ben Be G (sec. m.): ॰नुयक्ता H G (pr. m.) U ॰नुयुक्तो M.

४ Thus G M U, उभाऽ H Be. Ben defective

५ तथा॰ G (sec. m.).



BIBLIOTHECA INDICA:

A

COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE
ASIATIC SOCIETY OF BENGAL.
NEW SERIES, No. 1445.

# बौधायन श्रौतसूत्रम् ।

# BAUDHĀYANA ŚRAUTA SŪTRAM

A SANSKRIT WORK ON THE VEDIC LITERATURE.




EDITED BY
DR. W. CALAND,
UTRECHT.

VOL. III. FASCICULUS IV.

CALCUTTA:
PRINTED AT THE BAPTIST MISSION PRESS
AND PUBLISHED BY THE
ASIATIC SOCIETY, 1, PARK STREET.
1921.

# ASIATIC SOCIETY OF BENGAL,

**No. 1, PARK STREET, CALCUTTA,**

**AND OBTAINABLE FROM**

*The Society's Agents—*
MESSRS LUZAC & Co., 46, *Great Russell Street, London, W.C.*
M. PAUL GEUTHNER, 13, *Rue Jacob, Paris, VI^e.*

***Complete copies of those works marked with an asterisk * cannot be supplied as so[me] of the Fasciculi are out of stock.***

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| | Rs. | A |
|---|---|---|
| | 3 | |
| Açvavaidyaka, Fasc. 1–5 @ -/10/- each .. .. .. | 2 | |
| Advaitachintā Kaustubha, Fasc. 1–4 @ -/10/- each .. .. | 6 | [illegible] |
| Agni Purana (Text), Fasc. 4–14 @ -/10/- each .. .. .. | 1 | [illegible] |
| Aitareya Aranyaka of Rig-Veda (Text), 2–4 @ -/10/- each .. .. | | |
| Aitarēya Brāhmaṇa, Vol. I, Fasc. 1–5; Vol. II, Fasc. 1–5; Vol. III, | 14 | |
| Fasc. 1–5, Vol. IV, Fasc. 1–8 @ -/10/- each .. .. | 2 | |
| Aitareyalocana .. .. .. .. .. | 4 | |
| Amarakosha, Fasc. 1–2 .. .. .. .. .. | 2 | |
| *Anu Bhasyam (Text), Fasc. 2–5 @ -/10/- each .. .. .. | 1 | 1 |
| Anumana Didhiti Prasarini, Fasc. 1–3 @ -/10/- each .. .. | 1 | |
| *Aphorisms of Sandilya (English), Fasc. 1 @ 1/- .. .. | 3 | 1 |
| Aṣṭasāhasrikā Prajñāpāramitā, Fasc. 1–6 @ -/10/- each .. .. | 2 | |
| *Atharvana Upanishads (Text), Fasc. 2–5 @ -/10/- each .. .. | 1 | [illegible] |
| Ātmatattvaviveka, Fasc. 1–3 .. .. .. .. | | |
| Avadāna Kalpalatā (Sans. and Tibetan), Vol. I, Fasc. 1–13; Vol. II, | 24 | |
| Fasc. 1–11 @ 1/- each .. .. .. .. | 1 | 1 |
| Bālam Bhaṭṭī, Vol. I, Fasc. 1–2; Vol. II, Fasc. 1 @ -/10/- each .. | 2 | [illegible] |
| Bauddhastotrasangraha .. .. .. .. .. | | |
| *Baudhāyana Śrauta Sūtra, Fasc. 1–3; Vol. II, Fasc. 1–5; Vol. III, | 7 | [illegible] |
| Fasc. 1–4 @ -/10/- each .. .. .. .. | 2 | [illegible] |
| *Bhamati (Text), Fasc. 5–8 @ -/10/- each .. .. .. | 0 | 1[illegible] |
| Bhasavritty .. .. .. .. .. | 5 | [illegible] |
| Bhāṭṭa Dīpikā, Vol. I, Fasc. 1–6; Vol. II, Fasc. 1–2 @ -/10/- each .. | 4 | [illegible] |
| Bodhicaryāvatāra of Çāntideva, Fasc. 1–7 @ -/10/- each .. .. | 1 | [illegible] |
| Brahma Sutras (English), Fasc. 1 @ 1/- .. .. .. | 1 | [illegible] |
| Bṛihaddevatā, Fasc. 1–4 @ -/10/- each .. .. .. | 3 | 1[illegible] |
| Bṛihaddharma Purāṇa, Fasc. 1–6 @ -/10/- each .. .. .. | 1 | [illegible] |
| Çatadūṣaṇī, Fasc. 1–2 @ -/10/- each .. .. .. .. | 8 | [illegible] |
| Catalogue of Sanskrit Books and MSS., Fasc. 1–4 @ 2/- each .. | | |
| *Çatapatha Brāhmaṇa, Vol. I, Fasc. 1–7; Vol. II, Fasc. 1–5; Vol. III, | 14 | [illegible] |
| Fasc. 1–7; Vol. V, Fasc. 1–4 @ -/10/- each .. | 3 | 1[illegible] |
| Ditto Vol. VI, Fasc. 1–3 @ 1/4/- each .. .. | 3 | [illegible] |
| Ditto Vol. VII, Fasc. 1–5 @ -/10/- .. .. | 1 | [illegible] |
| Ditto Vol. IX, Fasc. 1–2 .. .. .. | | |
| Çatasahasrikā-prajñāpāramitā, Part I, Fasc. 1–18, Part II, Fasc. 1 | 11 | 1[illegible] |
| @ -/10/- each .. .. .. .. | | |
| *Caturvarga Chintāmani, Vol. II, Fasc. 4–25; Vol. III, Part I, Fasc. | | |
| 1–18, Part II, Fasc. 1–10; Vol. IV, Fasc. 1–6 @ -/10/- each | 35 | [illegible] |
| | 1 | [illegible] |
| Ditto Vol. IV, Fasc. 7 @ 1/4/- each .. .. | 1 | [illegible] |
| Ditto Vol. IV, Fasc. 8–10 @ -/10/- .. .. | 8 | [illegible] |
| [illegible] Fasc. 1–7 @ 1/4/- each.. .. | 7 | [illegible] |
| [illegible] (Text), Fasc. [illegible] @ -/10/- each [illegible] | | |

कृतानि पिष्टानि समुप्य[1] संयुत्य[1] व्यभिमृश्य[1] पिण्डौ[1] कृत्वाग्रेण[1] मारुतस्य पिण्डं पर्याहृत्याहवनीये वैश्वानरमधिश्रय्यात्प्रदक्षिणमावृत्य[2] गार्हपत्ये मारुतं त्वचं ग्राहयित्वेमं त्वचं ग्राहयेदमुं पर्यग्नि कृत्वेमं पर्यग्नि कुर्यादमुꣳ श्रपयित्वेमꣳ श्रपयेदपि वोभयमेवोभयत्र कुर्यात्तस्य शृतस्यासादनं दक्षिणं[3] परिधिसंधिमपरं[4] विमुच्य दक्षिणं वा परिधिमग्रेण । सिद्धमत ऊर्ध्वमेतस्मिन्वा एतौ मृजाते यो विद्विषाणयोरन्नमत्तीतौतरमितरेणेत्येवैष[5] उक्तो भवति । यं मृधोऽभि प्रवेपेरन्राष्ट्राणि वाभि समियुरिति । प्रतिवेशा राजानो मृधः । स्व एव जनपदा[6] राष्ट्राणि विशो । यो हतमनाः स्वयंपाप इव स्यादिति । मति बले हतमनाः स्वयंपाप इव स्यादिति । साधुरूपे कुले स्वयंपापो । यस्मै प्रत्तमिव सन्न प्रदीयेतेति ।

१ Thus Be M; संयुत्यव्यूह्याभिमृश्य G. समुप्यसंयुत्यपिंडौ कृत्वाग्रेण Ben, संदृक्त्वव्यभिमृश्य H.

२ Thus अधिश्रय्यात् Ben, अधिश्रयात् M. अधिश्रय्यात् G H U अधिप्रश्रयात् Be. cp. XXVI. 6: 279. 9: अधिश्रयन्; it is synonymous to अधिश्रयात् ।

३ Om. Ben.

४ Thus all the MSS. exc. M which has परिधिसंधिमन्तिमरं. Is अपरं to be cancelled? A [illegible]

५ Thus G [illegible] °न्नमत्तीतौतरमितरेणेत्येव । [illegible] Ben, °न्नमत्तीत्वेतिमितरन्तीतरेणत्यवैष M. न्नमत्तरमतरेणत्येव एवैष Be, मितरेणेत्येव H partly deleted.

६ वा ins. G.

II. 128. 17. प्रत्तमनुपाकृतं[1] •प्रतिबध्यमानमेवैतद्भवत्यथास्यामध्वरकल्पाया-
मिडाग्नं[2] प्रथमं तन्त्रं कुर्यादेवं द्वितीयं । तृतीयेन सद्यावग्रेषं
वर्तयेत्कथमत्र भक्षा इति । तत्रतत्र वा भक्षयेदपि वा
II. 130. 4. सर्वासाꣳ समवदाय कृत्वान्ततो[3] भक्षयेदनस्वाग्नीघोत्रा देय इति ।
II. 130. 7. यजमानस्यैवैष गोष्ठाद्दातव्यो भवति । वेदिं परिगृह्यार्धमुद्ध-
II. 131. 6. न्यादर्धं नेति । दक्षिणं वा वेदेरर्धमपरं वेत्यैन्द्रस्यावदाय
वैश्वदेवस्यावद्येदथैन्द्रस्योपरिष्टादिति । द्वे एवैते अवदाने उक्ते
II. 131. 9. भवत । उपाधाय्यपूर्वयं[4] वासो दक्षिणेति । प्रवेणतो[5]
वान्ततो वा तावाणि वा नीलानि वा सूत्राण्युपहितानि[6]
II. 131. 13. भवन्त्यपि वोपधानरज्जुरेवैषोक्ता भवत्यथास्याꣳ संज्ञानेष्याꣳ[7]
सकृदेवानुवाचयेत्सकृदाश्रावयेद्द्वे ह्यस्यै याज्यानुवाक्ये भवतः ।
॥ ५ ॥

१ Thus Be; °मनापकृतं M G (pr. m.), °मनापापकृतं Ben H U; °मनापाकृतं G (pr. m.); °मनापाकृतमप्रति °G (sec. m.)

२ Thus (प्रतिबध्यमान°) M G U, प्रतिबध्य° the other MSS. (G °यप्रतिब° sec. m.).

३ Thus Ben, कृत्वातती G U M, कृत्वातितो H.

४ Thus (cp. XIII. 20 : 131. 5) M only, उपधाय्य° the other MSS and the Viv.

५ Thus M Be, प्रतिवेषतो Ben. प्रवतो H, प्रवनतो G U, प्रवत: the Viv. (both copies).

६ Thus Ben M Be °वतानि G H U.

७ Thus Ben Be U G, संज्ञान्येष्याꣳ M H; the correct reading seems to be (see XXIV. 3 : 187. 7) संज्ञानीष्याꣳ ।

अथ वै भवति यदि नावगच्छेदिममहमादित्येभ्यो[1] भागं निर्वपाम्यामुष्मादमुष्यै विशो ऽवगन्तोरिति निर्वपेदिति निरु-प्योपरमति[2] । परिदानान्तं कर्म कृत्वाथैतामग्नौ हौम्यकृष्णाजिने समुप्योत्तरार्धे ऽग्न्यगारस्यावस्थापयेदथावगते सꣳस्थाप्येत्प्रोक्षण-प्रभृतिना कर्मणा प्रतिपद्येत । विज्ञातमत ऊर्ध्वं । यथा नख-निर्भिन्नायामेवꣳ शतकृष्णलायां । पुरा वा तण्डुलानामावप-नाद्रुक्ममवदध्यात्कृतमुत्तरमपि[3] वैनꣳ शृतमेव सुवर्णरजताभ्याꣳ रुक्माभ्यां परिगृह्यान्तर्वेद्यासादयेदाग्नेयस्य च सौम्यस्य चेन्द्रे समासेचयेदिति । अभिमृष्टानां पिण्डानां पुराधिश्रयणा-त्समासेचयितव्यं[4] भवति । सर्वेषामभिगमयन्नवद्यतीति[5] सदे-वतस्य[5] चखिष्टकृतश्चेत्येवेदमुक्तं[6] भवत्यथो खलु यावतीः समा एष्यन्मन्येत तावन्मानꣳ स्यादिति । त्रिꣳशद्दर्शं श्वेत्यात्सप्रतिमानं कुर्वीत । चत्वारिꣳशद्दर्शं श्वेत्यात्पष्टिमानं कुर्वीत च एवैतस्याभि-

१ इदम् instead of इमम् Be Ben H M.

२ Probably इति has fallen out.

३ चावदध्यात् Ben M, उपदध्यात् Be G U H.

४ Thus (°धिश्रंजनात्) M G (sec. m.), °धिश्रजनात् U H G (pr. m.), °धिंजनात् Be; Ben is defective; cp. अधिश्रयणात् XXVI. 5: 277. 2. Bhavasvāmin gives the periphrase : प्राक्श्रिपणात् ।

५ Thus U G Ben; °नौतिसदेवस्य M, °नौतिसदेवतस्य H, °तितीदे-वतस्य Be.

६ Thus M only; चखिष्टकृतश्चे° Be, चखिष्टकृतश्चे° or खिष्टकृतश्चे° the other MSS.

II. 142. 12. वृद्धिकल्पो[1] । ऽथ ब्राह्मणेषु च संज्ञानेष्ट्यां[2] च सहदेवानुवाच-
II. 142. 16. येतस्य ह दाश्रावयेतस्य सत्यप्रदानाः समानदेवता । आपोनप्त्रीयं चरुं
पुनरेत्य निर्वपेदिति । को नु खल्वपां नपाद्भवतीति । वैद्युत
II. 145. 12. इत्येव ब्रूयाल्लक्ष्णमधु चेति । पौत्तिकमित्येवेदमुक्तं[3] भवत्यन-
स्थिगधमिति । चिवलीकमित्येवेदमुक्तं[4] भवत्यथाप्युदाहरन्ति
II. 149. 13. चिच्छदिष्कमित्येवेदमुक्तं[5] भवति । यथा चिधातावेवꣳ[6]
संदिग्धपुरोडाशस्यावदानकल्पः । ॥ ६ ॥ चतुर्थः ॥
II. 152. 2. स सर्पानसृजतेति । मासा एवैत[7] उक्ता भवन्ति । स
II. 155. 10. वयाꣳस्यसृजतेति । छन्दाꣳस्येवैतान्युक्तानि भवन्ति । स वैव
II. 155. 13. स्यादिति । पुराणगार्हपत्यमभ्युपदिशन्ति । तस्य पशुवेलाया-
मुल्मुकमादाय दक्षिणया द्वारोपनिर्हृत्य दक्षिणेन सदः परीत्य
दक्षिणेन मार्जालीयं धिष्ण्यं पर्याहृत्यान्तरेण यूपं चाहव-
नीयं चोपातिहृत्यान्तरेण चात्वालोत्करावुदङ्ङुपनिर्हृत्य तेन
पशुꣳ श्रपयेयुरथ यदाहवनीयादुल्मुकꣳ स्यादपया तत्सहा-

---

१ एतस्य om. M; Ben Be are defective here.

२ संज्ञान्येष्ट्यां again M G U H, see above.

३ पौतिक° M Ben, पौतिकं the Viv. (one copy), पौतीक° G U, पौचीक H Be and another copy of the Viv.

४ °वलीक° Ben H, °वलिक° Be M G U.

५ Thus Ben; चिच्छदीत्ये° M, चिच्छदित्ये° Be, चिचित्ततीत्ये° H G U.

६ वैधातावेवं Be, चिधातवेवं M, चि (or वै° चै°) धातवौयेवं the other MSS.

७ Thus M only, एवैता all the other MSS.

हरेयुः । किंदेवत्यानि खल्वपाय्यानि भवन्तीति । द्वे प्राजा-
पत्ये आग्नेयं वायव्यं वैश्वदेवमितीष्टर्गो वा अध्वर्युर्यजमान-
स्येष्टर्गं इत्युष्णायमित्येवेदमुक्तं[1] भवत्यथाप्युदाहरन्त्यध्वर्युरेवैष
उक्तो भवत्यासन्यान्मा मन्त्रात्पाहि कस्याश्चिदभिशस्त्या इत्यनु-
व्याहारो ह[2] वा आसन्यो मन्त्रस्तस्मान्मा पाहीत्येवेदमुक्तं
भवति । तस्माद्ध्रजवास्तु नाभ्यवेत्यमित्यहोरात्रावित्येकं । याव-
दग्नयः प्रीताः[3] स्युरित्येतदेकं । यावदेनमभिवर्षेदित्येतदपरं ।
द्वौ समुद्रौ विततावजूर्यावित्यहोरात्रावेवैतावुक्तौ भवतः ।
पर्यावर्तेते जठरेव पादा इत्युदरे पादा इत्येवेदमुक्तं भवति ।
तयोः पश्यन्तो अतियन्त्यन्यमपश्यन्तः सेतुनातियन्त्यन्यमित्यहः
पश्यन्तो अतियन्ति रात्रिं स्वप्नेन सेतुनातियन्त्यन्यमिति ।
12. द्वे द्रधसी सततौ वस्त एक इत्यादित्यो ऽहोरात्रे वस्त इत्ये-
वेदमुक्तं भवति । तिरोधायैत्यसितं वसानः शुक्रमादत्ते अनु-
हाय जार्या इति । रात्रिं वसानस्तिरोधायेति शुक्रमादत्ते
ऽहरित्येवेदमुक्तं[4] भवति । कीटावपक्षस्येति । कतमो नु
खल्वयं कीटो भवति[5] । य एवैष पिण्डान्संवर्तयतीति । नित्ये

१ Thus (उष्णायम्) M G U H and the Viv. (periphrase: इर्षौ वा उष्णं वा); उसप॰ Be, उ–प॰ Ben.

२ Only given by M Be.

३ All the MSS. om. the visarga and Be reads स्थिता ।

४ चवरि॰ MSS.

५ इति ins. M G U

यज्ञे वैष्णावीमृचमनुवर्तयतीति । पृषदाज्य एवैषानुवर्तयि-
तव्या[1] भवति[2] । ॥ ७ ॥

II. 171. 8. अथातो ऽतिग्राह्याणां व्याख्यास्याम । इमे न्वेव[3] पृष्ठ्याति-
ग्राह्याः पञ्चैन्द्रा वाजपेये । परःसामानस्सार्वाक्सामानश्च सौर्यो
वैषुवते । वैश्वकर्मणादित्यौ गवामयने । प्राजापत्यो महाव्रते ।
बार्हस्पत्यो बृहस्पतिसवे । वैमृधे चोन्निदि च त्विषिमति च
वृषा सो अंशुः पवत इति च । द्वावश्वमेधे महिमानावा-
देशादेवाश्वस्य वपां महिमाभ्यां[4] परिजुहुयात् । कथमु खलु
परःसाम्नां भक्षो भवतीति । रुद्रवद्गणस्य सोम देव ते मति-
विदो माध्यंदिनस्य सवनस्य त्रिष्टुप्छन्दसो[5] ऽङ्गिरोषधीभिः
पीतस्यौषधीभिः प्रजाभिः पीतस्य प्रजाभिः प्रजापतिना
पीतस्य मधुमत उपहूतस्योपहूतो[5] भक्षयामीत्येष एवार्वाक्सा-
II. 177. 18. मानामृक्तो भक्षो । ऽष्टाप्रूष्टुरण्यं दक्षिणेत्यष्टापिञ्चकमित्येवेद-
मुक्तं[6] भवति । द्वौ चेद्गर्भौ स्यातां द्वादशप्रूट् स्यादेको ह

---

1 Thus M; नुवर्ति(र्तो)तव्या Be G H, °नुवर्तयितव्यं U, नुवर्तव्या Ben.

2 इति ins. M G U.

3 नेव MSS.; the Viv. points to न्वेव ।

4 Thus (with °भ्यां) all (only महिमाभ्यां Ben), also the Vivaraṇa.

5 ...5 Thus acc. to the Viv. and cp. Āp. XXI. 21. 4. The MSS. more or less corrupt.

6 Thus Be G U; °ष्टापञ्चक° M; °ष्टाप्रूतिपिञ्चक° H; Ben altogether corrupt. Is पिञ्चक = पिच्चक ? or are we to read पुञ्चक ? The same word occurs VII. 6 : 209. 18.

महाकोशः स्याद्द्वाववान्तरकोशौ स्यातामथाग्निगर्भाया[1] आश्वे-
नैवैतान्यस्त्राणि[2] समुदायुत्य मध्यमेन पर्णेनान्तःपरिधि निन-
येद्भूर्भुवः सुवरिति । ॥ ८ ॥ पञ्चमः ॥

यद्यालब्धायामश्वो भवतीत्यालब्धायां चेदश्वः स्यात्तꣳस्था-
पयेदेवाथ चेदुपाकृतायामश्वः स्यादन्यमेतस्मिन्स्थान उपाकृत्यो-
त्तरममेधसंपन्नमेतयागमयेरन्नित्यथेमे[3] जया अभ्याताना
राष्ट्रभृत[4] इत्याहिताग्नेश्चानाहिताग्नेश्चान्यत्र विहाराद्दृष्टा भव-
न्त्यभिसमारम्भात्त्वेवैनानाचार्याः[5] प्राक् स्विष्टकृत उपजुहुत्यष्टौ
वसव इति । कतमे नु[6] खल्विमे वसवो भवन्तीति । पृथिव्य-
न्तरिक्षं द्यौरग्निर्वायुरादित्यश्चन्द्रमा आप इत्येतेऽष्टौ वसव ।
एतेषु वा इदꣳ सर्वं प्रतिष्ठितं यदिदं किंच । य एवं वेद
प्रत्येव तिष्ठत्येकादश रुद्रा इति । प्राणा एवैत[7] उक्ता भवन्ति ।
द्वादशादित्या इति । मासा एवैत[7] उक्ता भवन्ति । पञ्च
गृह्यन्ते नवनव गृह्यन्ते पञ्चधा विगृह्यन्ते । नवनवाꣳशवो

१ Uncertain reading; °गर्भाया the Viv.; °गर्भचाजमाश्वेना° Ben, गर्भ-चाजमाश्वे° M, °गर्भमाश्वेना° Be G U, गर्भामाश्वेना° H.

२ °स्त्राणि G Be and the Viv., °स्त्रौणि M U Ben, °स्त्रिणि H.

३ Thus (°त्तरममेध°) M, °त्तरंमेध° or °त्तरमेध° the other MSS., but cp. the Vivaraṇa: उत्तरस्मिन्मेधवर्जिते ।

४ Thus M; जया चभ्यातानाचाष्ट्र° Be G U, जयाभ्यातानाचाष्ट्र° Ben H.

५ Thus, in accordance with the Viv., G; °पिसमारंभा° M Be, °विसमारंभा° U Ben H.

६ Om. M.

७ Thus both times M and G (sec. m.); एवैता the other MSS.

भवन्त्यथ य एव 'द्वमो मन्त्र एतेषामेवैषो ऽभिग्रहणार्थो[१]
I. 192. 10. दृष्टो भवति । तां दुग्ध्वा ब्राह्मणाय दद्याद्यस्यान्नं नाद्या-
II. 196. 2. दिति । भैक्षाय प्रत्यवस्थितायैवैषा दातव्या भवति । किंदे-
वत्या उ खल्वतिरिक्तसोमा[२] भवन्तीति । यं यं पशुमभ्यतिरि-
च्येरंस्तत्तद्देवत्या[३] एव स्युरित्येतदेकमथापरं । विज्ञायत उ
खल्वेषां[४] ब्राह्मणमथ कस्मादैन्द्रो यज्ञ आ संस्थातोरित्येतस्मा-
II. 199 5. दैन्द्रावैष्णवा एव भवन्ति । तेन प्रीतीभवता षडहसंस्थां
काङ्क्षेयुरिति । षडहब्राह्मणमेवैतद्भवत्यथ चेदहःसंयोग[५] एव-
मापद्येत[५] यथापि नव मध्यमानि सांवत्सरिकाण्यहानि संनि-
गच्छेयुस्तदानीमेवैनं प्रीतीकृत्वा संचिनुयुरथ चेदुदयनीये
ऽतिरात्र[६] एतदेव[६] । प्रजा वै सत्त्रमासत तपस्तप्यमाना अजु-
ह्वतीरिति । तत्पृच्छन्ति[७] कतमत्तत्सत्त्रं[८] भवतीति । यदेवे-

---

१ Thus M and the Viv.; all the other MSS. ग्र° instead of भि°

२ तिरिक्तः सोमो भवन्तीति M. Ben (the last without इति), °तिरिक्त-सोमा भवंतीति the other MSS.

३ °देवता MSS.

४ Thus G M U H; खल्वेषां खल्वे Be, खल्वेब्राह्म Ben. The last reading seems to point to खल्वेकेषां ब्रा°, cp. the Viv.: अन्येषां ब्राह्मणम्; but the Brāhmaṇa here cited is to be found TS. III. 3. 7. 3.

५ Thus M and the Viv.; °संयोगं एवमा° G U, संयोगमेवमा M Be H.

६ Thus M; तिरात्रे एतदेव H U (sec. m.) तिरात्रमतदेव G U (pr. m.), तिरात्रोमतदेव Ben, तिरात्रिपरवदेव Be.

७ इच्छंति M only (cp. XIV. 1 : 152. 5), इच्छति all the other MSS.

८ Thus corrected; कतमत्स° M Be U H, कतमत्सत्रं Ben G (sec. m.).

तद्नाहिताग्नयो ऽयथाश्रमङ् आमनन्त्येतस्य[1] भवतीति ।
॥ ९ ॥ षष्ठः ॥

आश्विनं प्रागाश्विनमिति । कियत्तु खल्वाश्विनं भव-
तीति । [2]द्वियोजनं वा यावदाश्वो ऽह्ना गच्छेत्तावान्[3] वेदि-
र्भवतीत्याग्निकस्य प्रक्रमस्य चतुरश्रकृतस्याच्छायामानमाददीत ।
स प्रक्रमः स्यात्तेन वेदिं विमिमीतापि वा विंशत्याश्च
रथाक्षाणामेकविंशत्याश्च पदानामष्टाङ्गुलस्य च[4] चतुर्विंशं
भागमाददीत । स प्रक्रमः स्यात्तेन वेदिं विमिमीते ।
चिस्तावो[5] ऽग्निर्भवतीति[5] । चयः सप्तविधः । स एकविंशति-
5. विधो । ऽथैतौ ह्रदौ मध्यतो देवयजनस्य जोषयत इति ।
किमर्थौ[6] खल्विमौ ह्रदौ भवत इत्यवभावनो ह दक्षिण
18. आवभृथिक उत्तरो । द्वौ दायावनुजाये च पुत्रो ऽग्न्याधेयाय
चेति । यो ऽस्य पितुरनुजायाः पुत्रः स पुरस्तान्नयत्यथ यो
19. ऽस्य मातुरग्न्याधेयाये पुत्रः सो[7] ऽपरो[7] । जरत्पूर्वया सव्यं
8. जानु वेष्टयित्वेत्युपधानरज्जुरेवैषोक्ता भवति । शतं वै[8] तस्या

१ Thus Ben H U G (pr. m.). आमंवेतस्य M आमं वेतस्य° Be G (sec. m.).

२ कियत्तु खलु ins Be M, कथं नु खलु H.

३ तावान्मे° M Be.

४ च given only by M and G (sec. m.), cp. XXX. 4 s fin.

५ चिस्तावाग्नेर्दिर्भ° M Be, चिस्तावावेदिर्भ° H.

६ नु ins. Ben.

७ Thus G M Be; चोचो H U, चोचमो Ben.

८ Are we to supply वै also XV. 5 : 209. 8 or to accept that the Karmānta points directly to T Br. III. 8. 9. 3?

II. 209. 11. राजपुत्रा इति । प्रतिहिता एवैत उक्ता भवन्ति । ग्रतृष्[1]
II. 211. 5. राजान[1]उग्रा इति । राजन्या एवैते नाभिषेच्या[2] भवन्त्यथ
सावित्रमष्टाकपालं प्रातर्निर्वपतीत्येषैव[3] प्रथमा सावित्री ।
वैश्वदेवपक्षे द्वितीयापराह्णे तृतीये । तदचैकाह्निकं कर्म
आग्नीयादुत्तरतस्स देवयजनादुदवस्येच्चातुर्मासिकानां पशूना-
II. 217. 18. मेवं[4] वायव्याय[5] पशव एवं तूपराय[6] । सप्ताहान्येतयेष्ट्या यजत
इति । कथमत्र भक्षा इति । तत्रतत्र वा भक्षयेदपि वा पुर-
स्तादेवैतस्मै सप्ताहाय । यूपमाम्नाये[7] राज्जुदालमग्निष्ठं[7] मिनो-
तीति । श्लेष्मातक इत्येवेदमुक्तं भवत्यथाप्युदाहरन्ति राज्जु-
दालमग्निष्ठं मिनोति भ्रूणहत्याया अपहत्यै । पौतुद्रवावभितो
II. 223. 5. भवतः पुण्यस्य गन्धस्यावरुद्ध्या इति । तृतीयं दक्षिणानां ददा-
तीत्याग्निकानामु[8] ह[8] तृतीयं कामप्रेण सह तृतीयमतिरात्रे
II. 223. 14. तृतीयं । चतुष्टोम एव भवति[9] । चतुश्चरीय[10] एष[10] चतु-
ष्टोमो भवति । ॥ १० ॥

---

१ Read ग्रतमराजान ?

२ Conjectural reading ; नाभिस्रेच्या M, नाभिषिच्या the other MSS.

३ Thus G Ben ; M om. एव. reading त्वेषा ; ॰त्यैवैव U H, त्येवैव Be.

४ मेव M G U.

५ ॰वाये Be H U.

६ इति ins. M.

७ Reading and interpunction dubious ; ॰आवेराज्जु M, ॰आवेनराज्जु॰ G, आयेन् राज्जु॰ the other MSS.

८ Thus G M Be ; ॰कामामुदाहृतं U H, Ben defective.

९ इत्येके ins. M only.

१० ॰रीया एव G and the Viv. : ॰रीयाऐव M Be, ॰रया (for ॰या) ऐव Ben U H.

एकस्मै स्वाहा द्वाभ्याꣳ स्वाहेति । कथमु खल्वेताननुवाकाञ्जुहुयादिति । यथाप्रकृत्यस्तथानन्तरायꣳ[1] होतव्याः सं तु विꣳशतिꣳ रशना आदाय यूपानभ्यायन्ति चतस्रश्चतस्र इतरे परिकर्मिण इति[2] । कथमेतांस्तु नियुञ्ज्यादित्यश्वस्तूपरो गोमृग इति ते त्रयः समानरशना । रराट्येषु तिस्रः । पर्यङ्ग्येषु पश्चादग्नये ऽनीकवते रोहिताञ्जिरनड्वानित्येतेष्वष्टौ[3] । सोमाय स्वराज्ञे ऽनोवाहावनड्वाहावित्येतेषु सप्तार्थेतेषां त्रयस्त्रयः समानरशना । मुख्यस्यैवैषां चतुर्थो भवति । समानं कर्म पर्यग्निकरणात्पर्यग्निकृतानामेतेषां पशूनामूनविꣳशतिरुत्सृज्यन्त[4] एकचत्वारिꣳशतमतिशिष्यन्ते । द्विचत्वारिꣳशतमेषाꣳ[5] शाखा[6] भवन्त्यश्वे[7] ऽत्र द्वौ समासं गच्छतो । ऽथेतरेषां प्रतिपशु[8] संपद्यन्त[9] इन्द्राग्निभ्यामोजोदाभ्यामुष्टाराविति ।
6. प्राजापत्यावेवैतावुक्तौ[10] भवतो । ऽथैतस्मिन्कल्माषिग्रवं[11]

१ •नथानंतराय MSS. (only G : •नंतरा sec m. and M : •नथांतरायं)।

२ इति supplied by me.

३ •मितिवेष्वष्टौ G U Be.

४ उत्स om. M, उत्सृ read Be U.

५ एवैषां instead of एषां G U H.

६ Thus M; शखा G Be, शाखा Ben U H.

७ Thus M Be G (sec m.); •श्व Ben, श्च U H.

८ Thus Be G, •पशुꣳ or •पशुं the other MSS.

९ •पद्यवे Ben H.

१० Thus G M Be; सप्रसंख्या• Ben, सप्रार्धंख्या• U H.

११ Thus (अस्मिन्शिग्रवं चा•) M, •ग्रव Be Ben H U, •चाग्रुपि• G (sec. m.).

माषपिष्टानि[1] संयुत्येत्याशुकानामेवैतानि व्रीहीणां पिष्टानि
ब्रह्मत्रिस्नेमणा संयुतानि[2] भवन्ति । पृथक् प्रतिप्रस्थातारो ऽव-
II. 240. 4 द्यन्ति । तेषां मैत्रावरुणा एवानुब्रूयुस्त्वार्थैवैतानि प्रदानानि[3]
भवन्तीन्दुवर्दाय स्वाहा बलिवर्दाय स्वाहेति । सूर्याचन्द्रमसा-
वेवैतावुक्तौ भवतो । ऽथाप्युदाहरन्ति संवत्सरो वा इन्दुवर्दः
II. 242. 5. परिवत्सरो बलिवर्द इति । तस्य मूर्ध्नि जुहोति[4] जुम्बकाय
स्वाहेति । किंदेवत्या उ स्विदियमाहुतिर्भवतीति । वारुणी-
I. 242. 10. त्येव ब्रूयात्किंकिदीविर्विदीगय इति । विदिदिहीविकोदी[5] इ
II. 243. 4. किंकिदीविर्भवति । पृषत उ[6] पतंगो[7] विदीगयो[6] । ऽथैता-
न्पशूनुपाकरोत्याग्नेयमैन्द्राग्नमाश्विनमिति । यमा एवैते छागाः
समानयोनयो भवन्ति । तेषामुक्तं चरणं यथैकादशिनानां
II. 244. 2. पशूनां । किंदेवत्या उ स्वित्पशवो भवन्तीत्यृतुदेवता
इत्येतदेकमथापरमाग्नेयाः प्रथमा ऐन्द्रा द्वितीया वैश्वदेवा-
स्तृतीया मैत्रावरुणाश्चतुर्था बार्हस्पत्याः पञ्चमाः सावित्राः षष्ठाः
संवत्सराय निवक्षस इति प्राजापत्याः । ॥ ११ ॥ सप्तमः ॥

---

१ Thus ( ब्रह्मत्रिस्रवं वा० ) M, ०ब्रह Be Ben H U, ०वषापुपि० G (sec. m.).

२ संयुता Ben, संयुतानि the other MSS.

३ om. Be.

४ All the MSS. exc. G ins. इति ।

५ Wholly uncertain reading. I have accepted the reading given by Be; विदीदिहीविदी M, विदिद्वहीकिदी U, विदिदिहीकोदी H, विद - - दिवाहति Ben. विदिशि: विदिहेति G (sec. m.).

६ Thus Be, पतंगोविदी० M, पपतंगोविदी० the other MSS.

अथायं द्वादशाह उभयविधो भवत्यहीनो वा सत्त्रं वा । स[१] यद्यु[१] हैको[१] दीक्षते ऽहीनो भवत्यथ यदि बहवः सत्त्रं । यदि चैवाहीनो यदि च सत्त्रमुभयथैवोभयतोऽतिरात्रो भवत्यन्यतरतो ऽतिरात्रा अहीना भवन्त्युभयतोऽतिरात्राणि सत्त्राण्यादिशादेवोभयतोऽतिरात्रो ऽहीनो भवत्यादिशात्तु[२] सत्त्रमनतिरात्रं यथैतदग्निष्टोमायनꣳ सारस्वतमयनं[३] विश्व-

7. सृजामयनमिति । कथमु खल्वेषाꣳ संनिवापः स्यादिति । साविषेभ्यः प्रथमꣳ संनिवपेरन्हुत्वा साविषाणि विश्वसृजामग्निहोत्राणि जुहुयुरथ वायव्याय पशवे संनिवपेरन्वायव्येनेष्ट्वा विश्वसृजामेवाग्निहोत्राणि जुहुयुरथ यदि[४] दीक्षणीयायै संनिवपेरꣳस्तेषां तत्संन्युप्तान्येव[५] सुत्युदवसानीयाद्युदवसायैव[६] प्रतिवेशा यज्ञपुच्छानि कुर्वीरन्कथमु खलु संदीक्षिता विष्णुक्रमान्क्रमेरन्निति । महापाशाभिपरीता[७] वा क्रमेरन्नपि वा

---

१ Thus Ben, संयद्येको the other MSS.

२ Before चादिशात्त G (sec. m.) ins.: चादिशादनतिरात्रोऽहीनो भवति; the Viv. makes no mention of these words.

३ Thus U G (pr. m.) Ben, °स्वतायनं the other MSS, only H: सारस्वतायनं।

४ यद् M G U H.

५ सतत् instead of तत् G U, वेतत् H.

६ सर्वुदवसाना॰ Ben, सुर्युदवसानीयान्तु (यु) दव॰ Be M, [illegible]दवसानीयाद्युदवसाय H, सुवदवसानीयाद्युदवसाय G; cp. Āp. XXI. 2. 15.

७ Thus, hesitatingly, emended; ॰पाशाभिःपरीता MSS. and the Viv.

पाषाणमभिसंधित्वाभिक्रमः[१] स्यादथाह[२] क्रमस्वाथाह[२] क्रमस्वे-
II. 247. 1. III. 164. 1. त्यतिगृह्णस्तथा[२] कल्पः स्याद्यथो एतत्सूत्रं भवति षष्ठ्यामुपसत्सु-
त्तरवेदिꣳ संनिवपन्त्यपि[३] वैकादश्यामित्यनग्निचित्य एवैतदुप-
II. 247. 11. पद्यते न साग्निचित्ये। कथमु खल्वेषामहीनसंततिर्भवतीति।
वसतीवरीणामभिग्रहणेनाध्वर्युः संतनोतीध्माबर्हिषोरुपकल्पनेन
च पयसां विग्रामनेन च वाचो[४] यम्येन[४] ब्रह्मातिप्रैषेण होता
पुनरभ्यासेन च सुब्रह्मण्ययोद्गाता[५] यज्ञस्य पुनरालम्भेन यज-
मानः[६]। प्रचरन्त एवैतद्ध्रुवाज्यꣳ समाददते। ऽथेमानि सव-
नानि बर्हीꣳषि संचिनुयुस्तेषां प्रचाराच उत्थायाग्नीध्र
आज्यानि गृह्णन्तो व्यवयेरन्निति। ॥ १२ ॥ अष्टमः ॥
II. 248. 3. कथमु खलु दिवा प्रातरनुवाकस्याह्न उपक्रमो भवतीति।
तत्पत्नीसंयाजान्तं वा हृदयशूलान्तं वाहः कृत्वा समुपनह्य
राजानं काले वसतीवरीरभिगृह्याहीनसंततिं कृत्वा प्रावो-
वायव्यꣳ संप्रचाल्य द्रोणकलशे दशापवित्रे समवधायाग्नीध्रं

---

१ Thus H U (without the visarga); पाषाणमभिः पर्यंस्थित्वा॰ Ben, पाषिणीःसंधित्वाभिक्रमः M Be G (the last two omitting the visarga at the end).

२ Thus G (which has only both times ॰थाहं instead of थाह); instead of the second क्रमस्वेति Be H U have: क्रम इति, M: क्रमस्व इति।

३ Thus H only; ॰वपन्त्यपि G U Ben, ॰वपन्त्यैत्यपि M Be.

४ वाचयम्येन M. Is वाचंयम्येन the correct reading?

५ Thus G (sec. m.), ॰ण्यायोद्गाता all the other MSS.

६ Om. M.

हुत्वा समिद्वारा यन्त्याहृत्य समिधः[१] आहवनीय उपसाद-
यन्ति । परिहृतासु वसतीवरीष्वाहुतायाꣳ सुब्रह्मण्यायाꣳ
संवेशनीयाः समिधो ऽभ्याधायेध्माबर्हिः संनह्य पयाꣳसि
विग्निष्याग्नीध्रं हुत्वाग्नीध्रे संवेशनरूपाणि कृत्वा प्रातःकर्मणा
प्रतिपद्यते । प्रसिद्धेन महारात्रिकेण । सिद्धमत ऊर्ध्वमुप-
स्तम्भनं वा एतद्यज्ञस्य यदतिग्राह्याश्चक्रे पृष्ठानीति । त्रिवृ-
त्स्तोमैकविꣳशस्य चक्रे आग्नेय उपस्तम्भनं । पञ्चदशस्य त्रिणवस्य
चक्रे ऐन्द्र उपस्तम्भनꣳ सप्तदशस्य[२] त्रयस्त्रिꣳशस्य[३] चक्रे सौर्यं
5. उपस्तम्भनं । यथो एतद्बौधायनस्य कल्पं वेदयन्ते निर्मन्थ्यो
मन्त्रवान्भवतीत्याध्वर्यवा एवाच मन्त्रा आवर्तन्ते नाग्निमन्थ-
9. नीयाः । स्वयमृतुयाजमेवैतदहर्भवति[४] नैतदहरन्योऽन्यस्मा ऋतुयाजं
यजतीति । ॥ १३ ॥

आग्नाव्याध्वर्युरन्यस्मै ग्रहं प्रदायैतेनैव यथेतमेत्य जघनेन
हविर्धाने उपविश्यर्तुसंप्रैषमुक्त्वोपोत्थाय हुत्वा व्यवनीय प्रद-
क्षिणमावृत्य यथायाचीत्तत्प्राङ्ङासीनो होतृभक्षं भक्षयेत्प्रत्य-
10. ङ्ङासीनो[५] ऽध्वर्युभक्षं । पात्नीवतेऽपीहोता शꣳसति बालखिल्या
मैत्रावरुणो विहरति वृषाकपिं[६] ब्राह्मणाच्छꣳसी शꣳसत्येवा-

१ M G Be U ins. आग्नीध्र ।

२ पंचदशस्य Be.

३ Thus Ben; ०त्रिंशतस्य the other MSS.

४ इति ins. U H, it is effaced in G.

५ Thus M; प्रत्यङ्म० the other MSS.

६ ०कपीयं M.

भवतमच्छावाकः । किंकर्मा[1] तर्ह्यध्वर्युर्भवतीति[1] प्रत्याम्नाया-
II. 252. 11. तीत्येव[2] ब्रूयाद्या एता अध्वर्युरनुष्टुभ उद्धृत्याहरति तासां तत्तो
गायत्र्यस्तास्तिस्रो ऽनुष्टुभः । सोम राजन्नेह्यवरोहेत्येतस्यै गायत्र्यै
पदमात्रेण राजानमुपावहरेत्कथं तु खलु दशममहर्भवत्या[3]
सर्वचतुर्विंशं[4] च भवति[5] चिष्टोमं[6] चान्यत्[7] तूष्णींशंसोमा-
दिति । चतुर्विंशो बहिष्पवमानः पञ्चदशं ब्रह्मसाम[8] त्रय-
स्त्रिंशमग्निष्टोमसाम । तासामु[9] च नत्रागच्छन्ति[9] । तासां तु
विंशतिः संपद्यन्ते । एतदेवापि दशममहर्भवत्या[10] सर्वचतु-
II. 256. 8. र्विंशं[11] च भवति चिंष्टोमं चान्यत् तूष्णींशंसोमादित्युपसृज-

---

१ Thus emended; किंकमतिर्ह्य० Ben, किंकर्मातर्ह्य० Be G U, किंकर्मा-
तर्ह्य० M, किंकर्मातर्ह्यो० H.

२ Thus G (sec. m.), ०प्रत्याम्नातौ M Be U H, यथायाचौतीत्येव Ben.

३ Thus Ben and the Viv. only; ०र्भवतीति or ०भवति the other
MSS.

४ Thus (and cp. XXVI, 16 init.) M Ben Be, सर्वचतु० G U H.

५ Om. G H Be.

६ Thus G M Be; भवतित्रिवृदग्निष्टोमं U H, भवतीत्यग्निष्टोमं Ben.

७ Thus M Be (Ben defective), वा चान्यत् G U H.

८ ०साम U (sec. m.) M G.

९ Doubtful and conjectural reading; तासामुपजन्यावच्छति Ben, तासा-
मुपजन्यावच्छतौ M, तासामुपजवच्छंति G U H; Ben defective. The mean-
ing is clear; चतुर्विंशानां मध्ये (i.e. मध्यात्) नव पंचदशसु प्रविशन्ते । तथा तयोः
(i.e. the pañcadaśam brahmasāma or pañcadaśam mādhyandinam
pavamānam and the trayastriṃśam agniṣṭomasāma) चतुर्विंशं भवति ।

१० Thus G only (०र्भवत्या), ०र्भवता all the other MSS.

११ सर्वचतु० Ben Be H.

ब्राह्मणे वत्सं धारयन्त्यध्वर्यो यथास्विदिति । किंदेवत्या च खल्विय-माहुतिर्भवतीति । प्राजापत्येत्येव ब्रूयादिति । ॥ १४ ॥

॥ नवमः ॥

अथेमं द्वादशाहं यथापूर्वेव प्रतिव्यूढामसंस्य नवाहानि प्रतिव्यूढं गच्छन्ति यान्यन्यानि प्रायणीयोदयनीयाभ्यां दश-माहाभ्यो । ऽथ[1] छन्दोमास्तत्[1] षडेव[1] । खलु यानो[2] ह्वि[3] प्रथमस्त्रिरात्रो[4] । गायत्रीप्रातःसवने[5] प्रथमे त्रिरात्रे[6] ऽष्टौ कल्वो ऽथे प्रथममुपांश्वभिषवमभिषुणुयादेकादश कल्वो द्वितीयं । द्वादश कल्वस्तृतीयं । महाँ इन्द्रो नृवदा चर्षणिप्रा इत्येतया त्रिष्टुभा माहेन्द्रं गृह्णीयाद्दशभिः सवितः पायु-भिष्ट्वमित्येतया जगत्या सावित्रमष्टाकपालान्प्रातःसवनीया-न्कुर्यादेकादशकपालान्माध्यंदिनीयान्द्वादशकपालांस्तृतीयसव-नीयान्वसुमद्रूपेण गायत्रच्छन्दसा प्रातःसवनीयानभ्यपेद्रुद्रव-द्रूपेण त्रिष्टुप्छन्दसा माध्यंदिनीयानादित्यवद्रूपेण जगती-

१ ? Thus Be U H ; यच्छंदोमास्ता. षडेव M, यत्छंदस्तत्षडेव G. यच्छंदस्तत् षडेव Ben ; the Vivaraṇa also has छंदस्तत् षडेव ।

२ खलुख्यानो Ben. खधानो M.

३ Thus B G M, ह्वि U ह्विन् Ben H.

४ Thus, in accordance with the Vivaraṇa, U ; प्रथमस्त्रिरात्रो the other MSS.

५ गायत्रीं प्रा॰ G.

६ Instead of त्रिरात्रे here and in the similar passages further on some of the MSS. (Ben H U) तिरात्रे ।

च्छन्दसा तृतीयसवनीयानित्यथ जगतीप्रातःसवने[1] द्वितीये त्रिरात्रे द्वादश कृत्वो ऽग्रे प्रथममुपांशुमभिषवमभिषुणुयादष्टौ कृत्वो द्वितीयमेकादश कृत्वस्तृतीयं । महाꣳ इन्द्रो य ओजसेत्येतया गायत्र्या माहेन्द्रं ग्रहं गृह्णीयाद्वाममद्य सवितरित्येतया त्रिष्टुभा सावित्रं । द्वादशकपालान्प्रातःसवनीयान्कुर्यादष्टाकपालान्माध्यंदिनीयानेकादशकपालाꣳस्तृतीयसवनीयानादित्यवद्रूपेण जगतीच्छन्दसा प्रातःसवनीयाञ्छ्रपयेद्वसुमद्रूपेण गायत्रच्छन्दसा माध्यंदिनीयान्रुद्रवद्रूपेण त्रिष्टुप्छन्दसा तृतीयसवनीयानित्यथ[2] त्रिष्टुप्प्रातःसवने[3] तृतीये त्रिरात्र एकादश कृत्वो ऽग्रे प्रथममुपांशुमभिषवमभिषुणुयाद्द्वादश कृत्वो द्वितीयमष्टौ कृत्वस्तृतीयं । महाꣳ इन्द्रो य ओजसेत्येतां गायत्रीं त्रिरभ्यावर्तयेदनुपयामाꣳ । सा जगती संपद्यते । तया माहेन्द्रं गृह्णीयाद्धिरण्यपाणिमूतय इत्येतया गायत्र्या सावित्रमेकादशकपालान्प्रातःसवनीयान्कुर्याद्द्वादशकपालान्माध्यंदिनीयानष्टाकपालाꣳस्तृतीयसवनीयान्रुद्रवद्रूपेण त्रिष्टुप्छन्दसा प्रातःसवनीयाञ्छ्रपयेदादित्यवद्रूपेण जगतीच्छन्दसा माध्यंदिनीयान्वसुमद्रूपेण गायत्रच्छन्दसा तृतीयसवनीयानिति । ॥ १५ ॥

॥ दशमः ॥

१ Corrected; जगतींप्रा॰ G M Be, जगत्प्रा॰ H U; Ben has a lacuna.

२ इति om. Ben G U.

३ Thus M Be; त्रिष्टुभःप्रा॰ Ben U H G (pr. m.), त्रिष्टुप्प्रा॰ G (sec. m.).

अथायं वैषुवतो लभेत मासगणानामित्येक आहुः सप्तदश दीक्षा द्वादशोपसदो वैषुवतं त्रिंशत्तमं। कथमु खलु गोआयुभ्यां स्तोमा[1] भवन्तीति[1]। गोर्नु खलु पञ्चदशो बहिष्पवमानस्त्रिवृन्त्याज्यानि सर्वसप्तदशं[2] माध्यंदिनं[3] सवनं सर्वैकविंशं तृतीयसवनं सोक्थ्यमथायोस्त्रिवृद्बहिष्पवमानः[4] पञ्चदशान्याज्यानि सर्वसप्तदशं[5] माध्यंदिनं सवनं सर्वैकविंशं तृतीयसवनं सोक्थ्यमथेमौ विश्वजिदभिजितावग्निष्टोमौ सप्तगतौ भवतः। के[6] नु[6] खल्वेतयो स्तोमा[7] भवन्तीत्यभिजिन्नु[7] खलु त्र्युदयश्चतुरावृत्तो ऽथ विश्वजिच्चतुरुदयस्त्र्यावृत्तः[8]। कथमु खल्वेकविंशतिगर्भा भवतीत्यभिजितमुपेत्य पृष्ठ्यं षडहमुपेयुरथ चौन्यरःसाम्नो ऽथ वैषुवतमथ चौम्प्रत्यक्सामो ऽथावृत्तं पृष्ठ्यं षडहमथ विश्वजितं। कथमु खलु गोआयुषी विहते जानीयादिति[9]। पुरस्तादभिजितो गासुपेयात्तस्मान एवायुर्भवतीति। कियन्तो नु खलु गवामयने

---

१ Thus Be G U and the Viv.: स्तोमा भवन्तीति H, स्तोमो भवन्तीति M.

२ Thus Be M: सर्वस॰ G U H Ben.

३ Thus G (sec. m.): ध्यंदिनाना all the other MSS

४ ॰मानं MSS.

५ Thus M Be; सर्वस॰ G U Ben, सर्वतःस॰ H

६ कोनु M H U Be G (pr. m.). कन G (sec. m.), कनु Ben.

७ Thus M Ben G; ॰मो भवन्ती H U Be.

८ ॰चतुरव्यावृत्त: M H Be (the last two ॰हन:). Ben defective.

९ इति Supplied by me.

ऽग्निष्टोमा भवन्तीति । ज्योतिरग्निष्टोमस्त्रिवृदग्निष्टोमो विश्व-
जिदभिजितावग्निष्टोमौ वैषुवतं दशममहर्महाव्रतमिति यद्येति
ह वा इदं गवामयनं प्रज्ञातस्तोमं ब्रुवते । तस्य होत्तरं पक्ष
आवृत्तं भवति यदन्यद्गोआयुर्भ्यां च दशरात्राच्च । अनीका-
न्यावृत्तान्यवाग्दनीयात् । ॥ १६ ॥

अथेमा द्वात्रिंशतमेकादशिन्यो गवामयने । तेषां[1] पूर्व-
स्मिन्पक्षसि षोडश निष्ठीयन्ते सप्तदश[2] एकादशिन्यै बार्ह-
II. 265. 11 स्पत्यो वैषुवते[3] सवनीयः संपद्यते । तस्य नवाहान्यपशुकान्य-
तिरिच्यन्त इति । कतमानि खल्विमान्यहानि भवन्तीति ।
पृष्ठ्यस्य चतुरस्तोत्तराणि त्रीणि त्र्यहश्छन्दोमा दशममहर्महा-
II. 262. 12 व्रतमुदयनीयो ऽतिरात्र इत्यभिप्लवास्त्वायन्ति च तदङ्गि-
रसामयनमिति । पृष्ठ्यानामेव स्थाने ऽभिप्लवानेव दधाति ।
पृष्ठ्यास्त्वायन्ति च तदादित्यानामयनमित्यभिप्लवानामेव
स्थाने पृष्ठ्यानेव दधात्यग्निष्टोमास्त्वायन्ति च तत्प्रजापते-
रयनमित्युभयेषामेव पृष्ठ्याभिप्लवानां स्थाने अग्निष्टोमानेव

---

१ Thus M G Be Ben U, तासां H, cp. Áp. XXI. 23. 2.

२ Thus G (sec. m.) and the Viv.; सप्ता ins. M Ben, ष्टा ins. Ben U G (pr. m.); H. defective; meaning and interpunction uncertain; cp. Áp. XXI. 23. 2.

३ Thus M U Be H Ben; ०वत: H G (sec. m.), ०वतेः G (pr. m.), ०वतेः Ben.

दृधात्याघाटीभिः[1] पिञ्छोलाभिः[2] कर्करीकाभिरित्याघाटो[3]
ऽह[3] कोलोष्टा[4] भवन्ति । पिञ्छोला[5] उ ह वीणाकाण्डमा[6] ।
वीणा[7] उ कर्करीकास्तं[8] काल एव मस्त्याहणन्तीत्याहन्यादि-
त्येवेदमुक्तं[9] भवति । ॥ १७ ॥ एकादशः ॥

अथ वै भवति ब्रह्मवादिनो वदन्ति स त्वै यजेत यो
ऽग्निष्टोमेन यजमानो ऽथ सर्वस्तोमेन यजेतेति । चत्वारि
पञ्चदशान्याज्यानि । तौ द्वौ त्रिंशद्वर्गौ । तयोरितरस्मिं-
स्त्रिंशद्वर्गे तिस्र उपास्यति । तौ द्वौ त्रिणवत्रयस्त्रिंशौ ।
16. गायत्रं पूर्वं ऽहस्साम भवति त्रैष्टुभमुत्तर इति होतुराज्य-

१ Thus G M U, ॰ढिभिः Be H.

२ Thus (पिंछा॰) H U G (sec. m.), पिछो॰ G (pr. m.) Be M, पिचो॰ Ben.

३ कर्करी॰ Ben, कर्करि॰ the other MSS.—॰घाघोरह Ben H U, ॰घोटह Ben, ॰घाटघोरह M, ॰घाघ उह G.

४ ? कोलोष्टो H, कोलोष्टा G, कोलोष्टो M U, कालोष्टो Ben, कोलोपो Be (compound of काल-घोष ?).

५ Thus M H U, पिछोला Be G, पिञ्चोला Ben.

६ ? ? Thus read U H Be (with var. ॰ब्दमा), वीणाकाणकाण्डमा M, वीणाकांडधूमा G.

७ Thus G only; वीणाणा Be H U M, वीणाणां Ben.

८ MSS., exc. Ben, कर्करिका॰; perhaps the form with short *i* is, after all, preferable.

९ Emended in accordance with the text proper; instead of ॰दमुक्तो॰ the MSS. read दमंतो॰ ।

II. 270. 6. त्रेताग्नि[१] संपादयेदेवमेवोत्तरे ऽह्नि होतुरेवाज्ये । अथाप्येषा[२] सहस्रतम्यन्यतएनी कण्डूकृतोपक्लृप्ता[३] भवतीति । सहस्रेविते-त्येवेदमुक्तं भवति । कस्मिंस्तु खलु काले लक्ष्मणां पष्ठौहीं

II. 273. 7. वार्त्रघ्नीं दद्यादिति । संग्रामं जित्वा राजन्य एनां[४] दद्यात्कथमु खलु गर्गत्रिरात्रेणर्तुमुखेषु विहृतेन यजेतेत्याषाढे वा[५] श्रावणे वा पक्षे ऽग्निष्टोमेन वा[६] यजेत । तत्पत्नीसंयाजान्तं वा हृदय-शूलान्तं वाहः कृत्वा समुपनह्य राजानं काले वसतीवरीरभि-प्रच्छाद्यीनसंततिं[७] कृत्वा ग्रावोवायव्यꣳ संप्रक्षाल्य द्रोणकलशे दशापवित्रे समवधायाग्नीध्रं हुत्वा, समिद्धारा यन्त्याहृत्य समिध आहवनीय उपसादयन्ति । परिहृतासु वसतीवरी-ष्वाहुतायाꣳ सुब्रह्मण्यायाꣳ संवेशनीयाः समिधो ऽभ्याधाये-त्याबर्हिः संनह्याविग्निष्व[८] पयाꣳस्युपवसथ्ये श्वो भूते सव-नेष्ट्या यजेत । तत[९] स्तम्बयजुर्हरति । स एवमेवाहरहर्वसती-

---

१ Thus G U H, होतुराज्यानि Be, होतुराज्यानि हृतानि M, होतुराग्नि-ताग्नि Ben.

२ था॰ M.

३ Thus Ben M U, कंडकृतो॰ Be, ॰कंडूकृतो॰ G H.

४ एतां Be.

५ Om. all exc. Ben.

६ Is वा to be cancelled?

७ ॰वरीभिः परिस्तृता Ben H.

८ Thus G Be U H; ॰स्त्रिविष्ठि॰ the other MSS.

९ तत om. M. Ben; are we to remove it or to read as infra (k. 19). तत्र च ?

वरीः परिहरमाणश्चतुरो मासः सवनेष्ट्या यजते । नाग्निहोत्रं जुहोति न दर्शपूर्णमासाभ्यां यजते । ऽथ चतुर्षु मासेषु पर्यवेतेषु परिहृतासु वसतीवरीष्वाहृतायाꣳ सुब्रह्मण्यायामहरहः संवेशनीयाः समिधो ऽभ्याधायेध्माबर्हिः संनह्य पयाꣳसि विग्रथ्योपवसन्ति । ॥ १८ ॥

अथ श्वो भूत उक्थ्येन यजते । तत्तथैव पत्नीसंयाजान्तं वा हृदयशूलान्तं वाहः कृत्वा समुपनह्य राजानं काष्ठे वसतीवरीरभिगृह्याश्वीनसंततिं[1] कृत्वा ग्रावोवायव्यꣳ संप्रक्षाल्य द्रोणकलशे दशापवित्रे समवधायाग्नीध्रं हुत्वा समिद्धारा यन्त्याहृत्य समिध आहवनीय उपसादयन्ति । परिहृतासु वसतीवरीष्वाहृतायाꣳ सुब्रह्मण्यायाꣳ संवेशनीयाः समिधो ऽभ्याधायेध्माबर्हिः संनह्याविग्रथ्य[2] पयाꣳस्युपवसन्त्यथ[1] श्वो भूते सत्रनेष्ट्या यजते । तत्र तथैव न[3] स्तम्बयजुर्हरति । स एवमेवाहरहर्वसतीवरीः परिहरमाणो ऽपराꣳश्चतुरो मासः[4] सवनेष्ट्या[4] यजते । नैवाग्निहोत्रं जुहोति न दर्शपूर्णमासाभ्यां यजते । ऽथ चतुर्षु मासेषु पर्यवेतेषु परिहृतासु वसतीवरीष्वाहृतायाꣳ सुब्रह्मण्यायामहरहः संवेशनीयाः समिधो ऽभ्याधायेध्माबर्हिः संनह्य पयाꣳसि विग्रथ्योपवसन्त्यथ श्वो भूते

१ ०वरीभि. परिस्रु० G U.
२ Thus M U G; संनह्य पयांसि विग्रथ्योप० the other MSS.
३ न read by all the MSS., but seems to be expunged in M.
४ Thus M U H; ०चातुर्मास० Ben G, मासास० Ben.

II. 273. 1 sqq. ऽतिरात्रेण यजते सर्वपृष्ठेनाथैताꣳ सहस्रतमीं प्राचीं वोदीचीं वावर्तयꣳस्तया[1] विहारं चात्मानं च न व्यवेयादिति ।

॥ १९ ॥ द्वादशः ॥

किंदक्षिणा उ खल्वहीना भवन्तीत्यहर्गणोऽहर्गणः सहस्रदक्षिणः स्यादित्येतदेकमेकैकमहः सहस्रदक्षिणꣳ स्यादित्येतदेकं । द्वादशशतदक्षिणꣳ स्यादित्येतदेकं । यथाश्रद्धदक्षिणꣳ स्यादित्येतदपरमादेशादेवै । तस्मिन्नतिरात्रे सहस्रमनुविहितं ददाति । द्विरात्रप्रभृतयो ऽहीना भवन्त्यैकादशरात्रादथेमान्यहीनाभिपरीतानि[2] सत्त्राणि भवन्ति यथैतत्संवत्सरगर्भः[3] एकादशरात्र । उभयविधो हि भरतद्वादशाहो । द्वादशाग्नि-
III. 168. 10. ष्टोमा रथंतरसामानः । स ह भरतद्वादशाहो । ऽथोद्यत्स्तोमेषु त्रिवृत्प्रथममहः स्यात्पञ्चदशं द्वितीयꣳ सप्तदशं तृतीयमेकविꣳशं चतुर्थमितीक्ष्वेकमथापरस्त्रिवृत्प्रथमस्याह्नः[4] प्रातःसवनं पञ्चदशं माध्यंदिनꣳ सवनꣳ सप्तदशं तृतीयसवनमथ[5] द्वितीयस्याह्नः

१ Thus M; वावर्तयन्स्तया G, वावर्तयस्तया U Ben H.

२ Thus G; ॰हीनाभिः परी (or रि) तानि the other MSS.; चहीनापतितानि or चहीनापरितानि the Vivaraṇa; cp infra k. 21 s. fin.

३ Thus Ben; यथैतत्सं॰ the other MSS.

४ ॰मितीक्ष॰ or मितीत॰ MSS.; the following is doubtful; ॰कमथा॰ परंचत्रि G U Ben U M, but in M च is effaced: ॰क॰॰थापरं सर्वत्रि॰ Ben. The Viv. has चपरत्रि॰; if this is the correct reading, we ought to correct also एकम् into एको ।

५ The MSS. here are defective; the passage has been restored by me according to Sāyaṇa on TS. VII. 1. 8 (ed. Calc. Vol. VII, 198).

पञ्चदशं प्रातःसवनꣳ सप्तदशं माध्यंदिनꣳ सवनमेकविꣳशं तृतीयसवनमथ तृतीयस्याह्नः सप्तदशं प्रातःसवनमेकविꣳशं माध्यंदिनꣳ सवनं त्रिणवं तृतीयसवनमथ चतुर्थस्याह्न एकविꣳशं प्रातःसवनं त्रिणवं माध्यंदिनꣳ सवनं त्रयस्त्रिꣳशं तृतीयसवनम् ॥ २० ॥

अथेम औपसदाः पुरोडाशाः शूर्पादानप्रभृतय आप्यानाः । स्रुवाहुत्या चैनान्सह सकृज्जुहुयादौपमन्यवीयेन[१] कल्पेनाग्नेयानेककपालाननुसरस्वति[२] प्राञ्चो यान्तीत्याहवनीयसकाशाच्छम्यां प्रास्येत्तां यत्र निपतेत्तद्गार्हपत्यस्यायतनꣳ स्यात्प्राचीनं[३] तत आहवनीयो ऽथ यद्यपर्याणा अप उपाधिगच्छेयुरपोनप्त्रीयं चरुं तृतीयसवनीयानामनुनिर्वाप्यं कुर्युर्यथोपोत्तरेयुः समाप्लवेव[४] शम्यां प्रास्येत्स्वचरा भवन्ति पञ्चाशा भवन्तीत्यभिप्लवानामेवैते[५] ऽपच्छेदा[५] भवन्त्यष्टमे ऽह्नि वाजपेय इति[६] । तत्र यदेव सुत्याभिपरीतं वाजपेयिकं कर्म

१ Thus Ben, ॰न्यवेन the other MSS.

२ Thus G (sec. m.) only; ॰नुसरस्वती all the other MSS. and my two copies of the Vivaraṇa.

३ कुर्वन्ति instead of स्यात् G (sec. m.).

४ ? Thus M G; ॰ल्लेव U H; समाप्लेत Ben, ऽऽसमाप्यवलेव Be; the Viv. gives the periphr.: उत्तीर्य समारे(दे)यात् ।

५ Uncertain; ॰वैतेपच्छदा Be, ॰वैतेपचंदा H, वैवे-च्छदा Ben, ॰वैतेपचेदा U and G (pr. m.), ॰वैवेतपच्छदा G (sec. m.), ॰वैतपच्छेदा M. The Vivaraṇa periphrases: अभिप्लवानामेवान्ते लोपि (or ॰वान्तलोपि) न पञ्चाः ।

६ इति Supplied by me.

II. 279. 14. तत्कुर्याद्यदेवꣳ सꣳवत्सरामयनमच्छन्दोमं[1] भवतीति । विज्ञा-
यत[2] तु खल्वस्य छन्दोमभक्तयश्चतुर्विꣳशं चतुश्चत्वारिꣳश-
मष्टाचत्वारिꣳशमिति । ॥ २१ ॥ त्रयोदशः ॥

II. 283. 1. अथायमतिरात्र उभयविधो भवत्यहीनो वैकाहो वापि
तु खल्वस्याहीनस्यैव रूपं । द्वादशोपसदो ऽनेकमहरभि- ५
विधत्ते[3] । ऽथैकाहस्यैव रूपꣳ । सकृद्वसतीवरीर्गृह्णाति सकृ-
II. 285. 13. त्पशूनुपाकरोत्येकं[4] क्रतुकरणꣳ । समयाविषिते सूर्ये हिर-
ण्येन षोडशिन स्तोममुपाकरोतीत्यर्धास्तमित इत्येवेदमुक्तं[5]
भवति । तस्य चेदनुपाकृत आदित्यो ऽभ्यस्तमियाद्गार्हपत्ये तिस्रः
स्रुवाहुतीर्जुहुयाद्भूर्भुवः सुवरित्यथ यस्योक्थ्ये ऽतिरिच्येताति- १
रात्रं कुर्वीतेत्यतिक्रान्ताः खल्वस्य दीक्षोपसदो ऽतिक्रान्तं क्रतु-
करणमतिक्रान्तꣳ षोडशिनो ग्रहणमथ तदानीमेव षोडशि-
पात्रमुपकल्प्य तिसृभिर्ऋग्भिर्गृह्णीयादथैतेन[6] पुरस्ताद्रात्रि-
पर्यायेभ्यश्चरेत्तस्यैवमेव संप्रैषः[7] प्रतिप्रस्थातराग्रयणात्तृतीयं गृह-

---

१ Thus (and cp. TS. VII. 4. 2. 3, Pañc. br. XXIII. 19. 8) M G U H; ०यनमहंदोमं Be, ०यनंमहंदोमं Ben.

२ r. विज्ञायन्त ?

३ Thus G (sec. m.), नेकम० Be, नैकम० M Ben G (pr. m.) U (sec m.), येकम० H.—Instead of ऽभिविधत्ते (thus M Be G U), Ben: ऽभिविधत्ते, H. ऽभिधत्ते । The Viv.: अहीनरूपं द्वादशोपसत्त्वमनेकदिवसव्याप्तत्वं च ।

४ Thus M G U Be; ०त्यकं Ben, ०त्येवं H.

५ इति om. all exc. M.

६ Thus M Ben; ०चैतेन G Be U.

७ प्रैष M G U.

ह्रीयानि[1] आधत्तः पृषदाज्यं गोपायाग्नीदाश्विनं ते द्विक-
90. 11. पालꣳ हुतमध्यपररात्रे ऽस्त्विति । कस्मिन्नु खलु काल आश्विनो
द्विकपालो निरुप्यत इति । तार्तीयसवनिकैर्वा पुरोडाशैः[2]
सहापि वा पुरस्तादुत्तमस्य रात्रिपर्यायस्य । त्रिवृद्वै स्तोमाना-
09. 11. मवमस्त्रिवृत्परम इत्यतिरात्रब्राह्मणमेवैतद्भवत्यथैषꣳ सौत्रा-
मणिकी सुरा पादकिण्वा[3] वा[4] भवत्यपि वा पञ्चिका ।
शष्पाणि च तोक्माणि[5] चेति । यवानामु[6] ह[6] शष्पाणि
309. 15. भवन्ति व्रीहीणामु ह तोक्माणि[5] मासास्तु नग्नहुरथायं कारो-
तरो दारुमयो वा वैदलो[7] वा मृन्मयो वा चर्मणा त्ववाभि-
विदि[8] स्यादथꣳ सुतासुतीति । सुतमु[9] हास्यासुच भवत्या-
331. 7. सुतमु[10] हास्येह भवत्यथास्मिन्दाक्षायणयज्ञे कुर्यादुपाꣳशुयाज-
मिति । ॥ २२ ॥ चतुर्दशः ॥

१ Om. G U H Be.

२ पञ्चपुरो॰ H, पौरोडाशैः M.

३ पादकीण्वा H. U, पाकीण्वा G, पादविण्वा M, पादविण्वा Be. The Viv., although corrupt, mentions the word किण्वा ।

४ वा om. H Ben.

५ ॰णि both times G Be, once ॰णि once ॰नि M, ॰नि both times Ben H U.

६ यवानांच Ben; read perhaps यवानामच ।

७ वैदलो M H U Ben, बै॰ G Be.

८ Thus all exc. Ben (॰विद्धि). The Viv. seems to give the paraphrase: वर्मणा (r. च॰) बद्धोधः (var. बद्धोधाः) ।

९ r. सुतमथास्या॰ ?

१० ॰भवत्यसुतमु Ben, भवत्यासुतमो M Be H.

II. 292. 1. अथास्यामेकादशिन्यां यूपाहुतिस्तन्त्रं याम्नौ हूयते । ऽथा-
प्रश्नजा संचारिणी । षट्स्वर्गकं[1] कर्म तस्य वर्त्यग्निष्ठां[2] प्रथम-
स्याश्रिं[2] षडदाहन्याद्धि द्वितीयस्य चितृतीयस्यैवमेवेतरेषामनु-
पूर्वं छेदनमायाय चाथ वेदिविमानं । दशानां च रथाक्षाणा-
मेकादशानां च पदानामष्टाङ्गुलस्य च[3] चतुर्विंशं भागमाद-
II. 293. 9. दीत । स प्रक्रमः स्यात्तेन वेदिं विमिमीताथेमावुपस्थावानौ
चतुरङ्गुलमात्रेण विकृष्टतमौ[4] स्यातामथेतरे रथाक्षान्तराला[5]
II. 293. 10. एव स्युरित्यथ वै भवत्युपरसंमितां मिनुयात्पितृलोककाम-
II. 293. 12. स्येति यावत्यग्निष्ठस्योपरं[6] तावन्मात्रा इतरे भवन्ति । चषाल-
संमितामिन्द्रियकामस्येति यावदग्निष्ठस्य रशना तावन्मात्रा
II. 293. 13. इतरे भवन्ति । सर्वान्त्समान्प्रतिष्ठाकामस्येति सर्वान्त्समान्प्रतिष्ठा-
II. 293. 14. कामस्य करोति । ये त्रयो मध्यमास्तान्त्समान्पशुकामस्येति
II. 294. 1. तान्त्समान्पशुकामस्य करोति । व्यतिषजेदितरानिति[7] स एवमेव
II. 294. 3. दक्षिणमुत्तरमित्यष्टौ यूपान्व्यतिषजत्यथ वै भवति यं कामयेत
प्रमायुकः स्यादिति गर्तमितं तस्य मिनुयादुत्तरार्ध्यं वर्षिष्ठमथ

१ षडर्धक Be. Instead of षट्स्वर्गकं कर्म a citation in the Mahāgni-sarvasva gives संस्राविं कर्म ।

२ Thus according to Ms. (text and comm.); •ग्निष्ठांतस्याश्रिं the MSS.

३ Om. Ben Be U; cp. XXX. 4.

४ विप्रकृ• M Ben.

५ •चांतमादा M Be, चांतमादा H.

६ Thus MSS.; r. यावदग्नि• ?

७ M Ben ins. व्यतिषजति ।

द्रघीयाꣳसमित्युत्तरार्ध्यमथ वर्षिष्ठं मिनोति दक्षिणार्ध्यं द्रघी-
याꣳसमेव वै गर्तमित्स्यैवं मिनोति ताजक् प्रमीयत इति
294. 6. ब्राह्मणं । दक्षिणार्ध्यं वर्षिष्ठं मिनुयात्सुवर्गकामस्याथ द्रघीयाꣳ-
समिति ॥ २३ ॥

अङ्गुष्ठपर्वमात्रेणाङ्गुष्ठपर्वमात्रेणोत्तरमुत्तरं यूपꣳ ह्रसी-
याꣳसं मिनुयादपि वा यूपावटानामेवैता मात्रा अतिखनेदपि
वोपध्यमेवोपनिदधते[1] । ताभिर्मात्राभिरभिसंपादयेत्कथमु
खलु यूपावटाꣳश्च परिलिखतो यूपाꣳश्चोच्छ्रयतः[2] पशूꣳश्चो-
पाकुर्वतः संचरौ[3] स्यादित्यन्तरेणाग्निष्ठं[4] चोपस्थावानं चोपा-
तीत्य जघनेनोत्तरवेदिं परिक्रम्यान्तरेणाग्निष्ठं[5] चैवोपस्थावानं[6]
चोपातीत्यैकैकं परिलिखेदोच्छ्रयेदोपाकुर्याद्वापि वा यंयं
परिलिखेदोच्छ्रयेदोपाकुर्याद्वा तंतं न व्यवेयाद्दक्षिणेन दक्षिण-
मुत्तरेणोत्तरमपि वा सर्वानेवाग्रेण यूपान्परीत्यैकैकं परिलि-
खेदोच्छ्रयेदोपाकुर्याद्वा । व्यतिषक्तं[7] तेन पूर्वाः संपद्यन्त । एवं

१ °निधत्ते U.

२ °च्छ्रयतां M, °च्छ्रयतो Ben U.

३ Corrected; कःसचरौ M G Be H, कःसंचारौ Ben, कंसंचरौ U. The Mahāgnisarvasva संचरः (without कः). संचरौ (cp. also XXV. 20 : 251. 4) has the meaning of मार्गः (Viv.).

४ °ष्ठं most of the MSS.

५ Thus M and a citation in the Ms.; °चाग्निं the other MSS.

६ च given by Ben only.

७ °षंक्ते Ben, °षक्त Ben, °षंक्तं H.

व्यतिषक्तानामेवैतेषां पशूनां[1] पश्च दक्षिणार्ध्यान्पशूनुपकृत्यैव[2] स्नापयेयुर्वारुणं प्रथममत्यानयेयुरथानुपूर्वमितरानन्तरेण चा-त्वालोत्करावुदङुपनिष्क्रम्य[3] प्रज्ञात्वा[4] निहन्युरपि वा मण्डली-कृतान्स्तेषां वपा उत्खिद्याहरेयुर्यथा[5] वपाभिर्विहारं नात्मानं

II. 296. 3. च न व्यवेयुरथायं पात्नीवतो ऽङ्गुष्ठपर्वमात्रेणोत्तरार्ध्याद्यूपाद्वसी-यान्स्यादपि वा यथाब्राह्मणमवाङ्नाभिमचषालमनवस्तीर्ण-

II. 297. 15. मथेदं[6] सर्पाणामयनं स्तोमतो विहितं भवत्यथेदं विश्व-

II. 298. 11. सृजामयनं कथमिदानीन्तनेषु स्यादिति । शतं दीक्षाः शत-मुपसदः शतं[7] प्रसुतः[7] । ॥ २४ ॥ पञ्चदशः ॥

II. 299. 10. अथेदं कुण्डपायिनामयनमग्निहोत्रपूर्वमेके ब्रुवते सोमपूर्व-मुपयन्ति[8] । तत्पत्नीसंयाजान्तं वा हृदशूलान्तं वाहः कृत्वा

१ Om. Ben Be.

२ पशून् ins. all the MSS. exc. Ben (cp. XVII. 14 : 295. 10).

३ °क्रम्य G U.

४ Thus Ben only and Ms. (प्रज्ञातुञ्जक्रमावस्थितान्), and the Vivaraṇa (प्रज्ञात्वा स्थिताग्नि (sic) स्युः); प्रतिप्रज्ञाता U (pr. m.), प्रति-प्रज्ञातात्वा the other MSS.

५ Thus the Ms. (तेषां संज्ञप्तानां वपाः आध्वर्युवा उत्खिद्याः परिकर्मिव आयवनीयं प्रति नयेयुः); उत्खिद्हरेयुर्यथा the MSS.

६ चमनवस्थितम् instead of चमनवस्तीर्णम् G (sec. m.).

७ These words are missing in G Be U H; प्रसुतः M, प्रसुतं Ben.

८ Uncertain reading; °मुपयन्ति G (sec. m.) Ben; °मुपयं U H, °मुभयं M, °मुपैवयं Be; the Viv.: स एव चारणपोऽग्नयः ।

समुपनह्य राजानं काले वसतीवरीरभिगृह्याऽसौनसंततिं[1] कृत्वा ग्रावोवायव्यꣳ संप्रचाल्य द्रोणकलशे दशापवित्रे समवधायाग्नीध्रं हुत्वा समिद्धारा यन्त्याहृत्य समिध आहवनीय उपसादयन्ति । परिहृतासु वसतीवरीष्वाकृतायाꣳ सुब्रह्मण्यायाꣳ संवेशनीयाः समिधो ऽभ्याधायेध्माबर्हिः संनह्याविग्रिथ्य पयाꣳस्युपवसन्त्यथ श्वो भूत आमावास्येन हविषा यजते । तत्र न स्तम्बयजुर्हरति । त एवमेवाहरहर्वसतीवरीः परिहरमाणा अष्टाविꣳशतिमहान्यामावास्येन[2] हविषा यजन्ते । नाग्निहोत्राणि जुह्वति न पौर्णमासीं यजन्ते । स यत्र तृतीयसवने धिष्णियान्विहरति तदन्तं मार्जालीयं करोति । समासन्नेषु हविःषु गार्हपत्ये करम्भपात्राण्यभिपर्यग्नि कृत्वा तैर्मार्जालीये प्रचरति । गार्हपत्य एव पिण्डपितृयज्ञꣳ श्रपयित्वा तेन मार्जालीय एव प्रचरति । प्रतिपूरुषमुवेवैषां[3] प्रवरान्प्रवृणीत । एकैकस्यैवैषां त्रयस्त्रयः पिण्डास्ते पञ्चदश[4] । महापितृयज्ञे स्तीर्णं[5] बर्हिर्भवति न वेदिमाखिदति[6] न स्तम्बयजुर्हरति नाज्यानि गृह्णीते । स यत्र

१ Emended (cp. XXVI. 18, 19); ॰वरीभिः परिगृह्या॰ U H, ॰वरीरभिपरिगृह्या॰ M G Ben, ॰वरीभिपरिगृह्या॰ Be.

२ Emended; ॰विंशतिरहा॰ MSS.

३ Thus M G U H and the Viv.; ॰पुरुष॰ Ben Be.—॰मुवेवैषां my conjecture (उवेव = उ एव), ॰मुवैवैषां MSS. exc. G (॰मुवेवैषां)।

४ पंचदशा M Ben Be.

५ स्तीर्णे M Be H.

६ After खिदति Ben ins. न खनति।

तृतीयसवने धिष्णियान्विहरति तदन्तं मार्जालीयं करोति । समासन्नेषु हविःषु गार्हपत्ये महापितृयज्ञहवींषि श्रपयित्वा तैर्मार्जालीये प्रचरेदाहवनीये मारुत्या प्रचरेदन्तमेवावभृथः[1] परीषाद्द्वितीया[2] वेदिर्भवति प्रक्रमाणां च तृतीयं नवमन्तु[3] भूमेर्भागो भवतीति । ॥ २५ ॥ षोडशः ॥

II. 302. 12. अथ पञ्चहविषमिष्टिमिष्ट्वाग्न्यहं पुनराहृत्यमेकैकेन हविषा यजेतैकं द्वे वा हविषी पर्यवेते स्यातामथ संवत्सरः समाप्येत कथं तत्र कुर्यादिति । प्रतिकृष्यैतस्य पक्षस्य पञ्चहविष-
II. 302. 16. मिष्टिं निर्वपेदथ संवत्सरतमेऽह्नि पञ्चहविः स्यादिति । प्रथमे द्वादशाहेऽग्निं चिन्वीतेति । प्रथमे द्वादशाहेऽग्निं चिन्वानश्चतुरहं प्रथमयोपसदा गच्छेच्चतुरहं मध्यमयाष्टाहोनꣳ संवत्सरमुत्तमयाथेतराꣳश्चतुरहोनाꣳश्चतुरहोनानेकैकया[4] चतुरश्चतुरो[5] मासान्प्रत्याददीत । चतुरहं प्रथमयोपसदा गच्छेच्चतुरहं मध्यमया चतुरहमुत्तमयापि वा चतुरश्चतुर एव मासानेकैकयोपसदा गच्छेदित्युत्तमे[6] द्वादशाहेऽग्निं चिन्वीतेत्युत्तमे द्वादशाहेऽग्निं चिन्वानोऽष्टाहोनꣳ संवत्सरं प्रथम-

1 Thus M (sec. m.) G; °रेदन्तमथावभृथः Be; °रेदन्तमेवावभृथः U H, °रेदन्त एवावभृथः Ben; cp. the Vivaraṇa: अवभृथोऽन्तं गच्छेत् ।

2 Thus (परीषात्) M Ben; प्रतीषात् the other MSS.

3 नवमं च Ben.

4 Instead of इतरान् (thus Ben M the Viv.) इमान् H Be G U.

5 Thus G U M H Be; चतुरश्चतुरहोनान् Ben.

6 इति om. G.

योपसदा गच्छेच्चतुरहं मध्यमया चतुरहमुत्तमयाथेतरांश्च-तुरहोनानेकैकया[१] चतुरश्चतुरहोनान्मासान्प्रत्याददीत[१] । चतु-रहं प्रथमयोपसदा गच्छेच्चतुरहं मध्यमया चतुरहमुत्तमयापि वा चतुरश्चतुर[२] एव मासानेकैकयोपसदा गच्छेदिति । ॥ २६ ॥

k93. 6. ५ अथ लोकंपृणा इष्टका उपदधन्मासमेतीति । लोकंपृणा इष्टका उपदधन्मासं गत्वा चिङ्ग्रात्तमत्यामहः[४] सर्वं प्रच्छादं प्रच्छादयेदपि वा चिङ्ग्रातोऽवकाशं कृत्वा लोकंपृणा इष्टका उपदधन्मासमेतीति । कथमेतं मासं गच्छेदितीष्टिः प्रथमाय पूर्वाह्णिके प्रवर्ग्योपसदावथेष्टका[५] अथापराह्णिके[५] प्रवर्ग्योपसदौ मासि वसोर्धारेति । मासं पुरीषेण चरतीति । कथमेतं मासं गच्छेदितीष्टिः प्रथमाय[६] पूर्वाह्णिके प्रवर्ग्योपसदावथ पुरीष-मथापराह्णिके प्रवर्ग्योपसदौ । चतुरो मास उपसद्भिरे-

१ Instead of इतरान् some of the MSS. again इमान्;—चतुरहोनान् twice (as above) H, and one of my copies of the Vivaraṇa.

२ ? Thus (and is so to be read also supra, 308. 12 ?) M, U G, चतुरश्चतुरोनासान्प्र° K, चतुरश्चतुरश्चोनान्मासान्प्र° Ben, चतुरश्चतुरोनान्मा-सान्प्र° Be.

३ Thus Ben H and one copy of the Viv.; चतुर the other MSS.

४ Are these words corrupt? The Vivaraṇa periphrases: चिङ्गाग्ने ऽग्नि सर्वमुपधेय शेषमुपदध्यात् ।

५ Thus according to the Viv.; °थेष्टकामथाप° G, U Ben; the other MSS. are incomplete.

६ अथ om. the MSS; it is given in the Vivaraṇa.

तीति[1] । यदमुत्र[2] मासेन करोति तदिह दशरात्रेण करोति ।
चतुरो मासः सुनोतीति । कतमे नु खल्विमे मासा भव-
न्तीति । गवामयनस्य प्रथमोत्तमौ च मासौ यौ चाभितो
II. 306. 1. विषुवतः[3] सह वैषुवतेन । वसतीवरीषु मृत्पिण्डमन्ववधायेति[4] ।
किमर्थो नु खल्वयं मृत्पिण्डो भवतीति । संतत्यर्थ एष
भवतीति । भिन्ने कुम्भे ऽन्यस्मिन्कुम्भ एतं मृत्पिण्डमन्ववधा-
याप[5] आनयेत्तत्पत्नीसंयाजान्तं वा हृदयशूलान्तं वाहः कृत्वा
समुपनह्य राजानं काले वसतीवरीरभिगृह्याहीनसंततिं[6] कृत्वा
ग्रावोवायव्यꣳ संप्रक्षाल्य द्रोणकलशे दशापवित्रे समवधायाग्नीध्रं
हुत्वा समिद्धारा यन्त्याहृत्य समिध आहवनीय उपसादयन्ति ।
परिहृतासु वसतीवरीष्वाहुतायाꣳ सुब्रह्मण्यायाꣳ संवेशनीयाः
समिधो ऽभ्याधायेध्माबर्हिः संनह्याविश्लिष्य[7] पयाꣳस्युपवसन्त्यथ
श्वो भूते सवनेष्ट्या यजन्ते । तत्र न साम्नयजुर्हरति[8] । त
एवमेवाहरहर्वसतीवरीः परिहरमाणाः संवत्सरꣳ सवनेष्ट्या
यजन्ते । नाग्निहोत्रमपि जुह्वति न दर्शपूर्णमासाभ्यां यजन्ते ।

---

१ Thus Ben and the Viv.; उपसद् उपसद्भिरितीति the other MSS.

२ Thus the Viv; यदत्र the MSS.

३ वैषुवतो: Ben.

४ Thus Be U G H M; °पिंडमवधाय Ben.

५ Thus Ben; the other MSS. om. अप्सु; Be defective.

६ Thus Be G U H; °वरीरभिपरिगृह्या° M (sec. m.).

७ Thus M G U Be; संनह्यविश्लिष्य Ben H.

८ °हरंति MSS.

ऽथ संवत्सरतम्यां[1] पर्यवेतायां परिहृतासु वसतीवरीष्वाहृतायाꣳ सुब्रह्मण्यायामवरतः संवेशनीयाः समिधो ऽभ्याधायेध्माबर्हिः संनह्य पयाꣳसि विग्रह्योपवसन्त्यथ श्वो भूते[2] ऽभिजितेष्टोत्तिष्ठन्ति[2] । ॥ २७ ॥ सप्तदशः ॥

306. 8. अथ वै भवति छन्दश्चितं चिन्वीत पशुकाम इत्यभ्यादानप्रभृतीन्मन्त्रान्साधयेदा[3] वायव्यात्स्व प्रत्यञ्चं वायव्येन पशुना यजेत प्रत्यञ्चं दीक्षणीययोत्थाप्रवृञ्जनप्रभृतीन्मन्त्रान्साधयेदा वात्सप्रविष्णुक्रमेभ्यः । प्रत्यञ्चं वात्सप्रविष्णुक्रमैः क्रमित्वा निगदेद्वेतरान्मन्त्रान्विहरेदग्निꣳ[4] । रूपाणि[4] दर्शयेद्रुक्मेदिरिणं । तत्र नैर्ऋतान्मन्त्रान्निगदेत्स[5] प्रत्यञ्चं गार्हपत्यमुपतिष्ठेत । प्रत्यञ्चं प्रायणीयया । प्रत्यञ्चमातिथ्यया । कार्ष्णाजिनौप्रभृतीन्मन्त्रान्साधयेदा[6] कर्षणावपनाभ्यां । प्रत्यञ्चं कर्षणावपने । प्रथमां

---

१ Thus emended; ॰वत्सरतम्यां Be U H, ॰वत्सरतम्या G Ben.

२ Thus Ben and G (sec. m.); भूतेऽभ्युत्तिष्ठंति U, भूतेयोत्तिष्ठंति H Be, भूते इष्टोत्तिष्ठंति M.

३ Corrected; इत्यभ्यादान॰ Ben, इत्यारभ्यादान॰ the other MSS.; The Vivaraṇa details देवस्य त्वेत्यादिनाभ्यादान॰ (sic), cp. X. 2 : 2. 3.

४ Doubtful; G (sec. m.) reads as given in our text and cp. the Vivaraṇa विहरेत् चिनुयादग्निम्; विहरेदग्निंनवरूपाणि Ben, विहरेद्यौरू॰ रूपाणि Be, विहरेदग्नोद्रूपाणि H U, विहरेदग्नौरूपाणि M; the comm. on the Śulba cites the passage with अग्निरूपाणि ।

५ Emended; नैर्ऋंतीन्मंत्रा॰ M Be G (sec. m.); नैर्ऋंतिमंत्रा Ben U, नैर्ऋतिमंत्रा॰ H.

६ Thus (कार्ष्णाजिनौ॰) M Be H U (cp. X. 23 : 21. 17); ॰जिनि॰ G (sec. m.) ॰जिन॰ Ben.

चितिꣳ सपुरीषां निगदेदेवं द्वितीयामेवं तृतीयाꣳ सर्वां[1] चितिꣳ सपुरीषाꣳ सवच्छां चितिꣳ सपुरीषां[1] निगदेत्या[2] अथान्तःश्लोका[2] आहुतयः स्रुगुंडयादेव ता अथ य औत्तरवेदिका मन्त्राः स्रुर्निगदेदेव तान् ॥ २८ ॥

अग्निहोत्रं वै दशहोतुर्निदानं दर्शपूर्णमासौ चतुर्होतुरित्येक आनुपूर्व्यं[3] ब्रुवते ऽथाप्युदाहरन्त्याग्न्याधेयं पूर्वस्यां ततावेकादशप्रयाजꣳ सर्वꣳ सहोत्पन्नान्तवः चक्रोतेति षाण्मास्य[4] एष पशुबन्ध उक्तो भवत्यथाप्युदाहरन्ति षट्सु षट्सु मासेष्वाहिताग्निना पशुना यष्टव्यं भवत्युभे काष्ठे अभियजेत माघमासे[5] धनिष्ठाभिरुत्तरेणैति भानुमानर्धास्मिषस्य श्रावणस्य दक्षिणेनोपनिवर्तत इत्येते काष्ठे भवतस्तदन्ततो ऽग्नीजानस्य[6]

---

१ The reading of this passage is wholly uncertain; I have accepted the reading of M (on चच cp. XVII. 25 and 26); सर्वांचितिः सपिंडां चितिं सपुरीषां U H; सर्वांचितीः सपिंडां चितिं सपुरीषां G, सर्वांचितीः संपिंडां - - - चितेसपुरीषां Be, सर्वांचितीः संचषा - - चितिं सपुरीषां Ben.

२ Thus G (sec. m.), which however, as do all the other MSS. exc. U, reads ॰चांताःश्ला॰ instead of॰चान्तःश्लो; निगदेदेवंचांत: श्लोका G (pr. m), निगदेदेवंचाचाचांता: श्लोका M., निगदेदेचाचांताः श्लोका H, निगदेदेवंचाचांत: श्लोका U, निगदेदेवंचां - - - चांताः श्लोका Be, निगदेदेवंचाभांताः श्लोका Ben.

३ Thus M Ben U G (sec. m), ॰पूर्वं Be, चनुपूर्वं H G (pr. m.).

४ Thus Be U G and the Viv. (one copy); चण्मास्य M H Ben and the Viv. (another copy).

५ ॰मासेन Ben U (sec. m.).

६ Are we to read with the Vivaraṇa. ऽग्नीजानस्य ?

34. 6. संवत्सरो नातीयादथ चातुर्मास्येषु सोमेषु प्रस्तहोता सप्तहोतु
स्थानं प्रत्येत्यथ य एष चातुर्मास्यसंयोजनो निर्मन्थ्य उत्सीद-
त्येव पशुसंयोजन एव[1] भवति । परिधौ पशून्नियुञ्जीतेति[2]
10. 17. ब्राह्मणमेतद्यूपा एव तदस्माकं भवन्त्यथ[3] महापितृयज्ञे स्तीर्णं
बर्हिर्भवति न वेदिमालिखति न स्तम्बयजुर्हरति नाज्यानि
गृह्णीते । स यत्र तृतीयसवने धिष्णियान्विहरति तदन्वसं
मार्जालीयं करोति । महाहविर्भिश्चरित्वा समासन्नेषु हविःषु
गार्हपत्ये महापितृयज्ञहवींषि श्रपयित्वा तैर्मार्जालीये प्रच-
रेदाहवनीये माहुत्या प्रचरेदन्तमेवावभृथः[4] परीयात्तस्य प्रथमा
चितिः पुरीषवती[5] मन्त्रवती भवतीति । प्रथमैवास्य चितिः
पुरीषवती मन्त्रवती भवत्यथेतरास्तूष्णीका । यांयां चितिं
सपुरीषां कुरुते सैवास्य चितिः पुरीषवती मन्त्रवती भव-
त्यथेतरास्तूष्णीकाः । ॥ २९ ॥ षष्टादशः ॥
343. 1, अथेम एकाहास्तेषां यान्यहान्यनादिष्टान्यग्निष्टोमा इत्येव
344. तानि जानीयादथाहीनरात्रिसत्त्रेषु यान्यहान्यनादिष्टान्युक्थ्या
344. 12. इत्येव तानि जानीयान्माध्यंदिनीया एवैनं चमसा निम्नुवन्तो

1 इव the MSS.
2 पशुं instead of पशून् M.
3 Thus M G U H Be; एतद्यूपा एवमस्माकं भवन्त्यथ Ben.
4 Thus Ben (only चरेत् instead of प्रचरेत्); चरेदंतमीवभृथः G H, चरेदंतमोवभृथः U, चरेदंतमेवावभथः Be, प्रचरेदंतमेवावभृथः M; cp. XXVI. 25 : 308. 3.
5 सपुरीषवती MSS.

यन्तीति[1] । सदस्यासीनं माध्यंदिनीया एवैनं चमसा निम्न-
II. 344. 13. जन्तो यन्ति अथार्धमासे चतुर्विंश एष भवति । शुक्रामन्थिनोः
II. 345. 4. संस्रावेणाभिषिञ्चतीति । यजमानायतन आसीनं शुक्रा-
II. 345. 9. मन्थिनोः संस्रावं समानीयाभिषिञ्चति[2] । चतुष्टोम एष
भवति । सप्त हवींषि प्रातःसवनीयाननुवर्तन्त इत्याग्नेयो ऽष्टाकपालः पौष्णश्चरुः सावित्रो[3] द्वादशकपालस्त्वाष्ट्रो ऽष्टाकपालो वारुणो दशकपालो वैश्वदेवश्चरुर्मारुतः सप्तकपाल
II. 346. 4. इत्यष्टौ हवींषि प्रातःसवनीयाननुवर्तन्त इत्याग्नेयो ऽष्टाकपालः सौम्यश्चरुः सावित्रो[1] द्वादशकपालो बार्हस्पत्यश्चरुरग्नीषोमीय एकादशकपालः सारस्वतश्चरुर्वारुणो[4] दशकपालो द्यावापृथिव्य
II. 346. 17. एककपाल इति । यत्किंच राजसूयमृतेसोमं तत्सर्वं भवतीति । मारुतं चाचैकविंशतिकपालं प्रतिषेधयत्यौपसदा-
II. 347. 14. न्येष्टीरर्धचतुर्दशैरेव[5] मासैः संतिष्ठते । यत्किंच राजसूयमनुत्तरवेदीकं[6] तत्सर्वं भवतीति । द्विपशुं चाच पशुबन्धं प्रतिषेध-
II. 348. 19. यति[7] चातुर्मास्यानि चाध्यर्धेनैव[8] मासेन संतिष्ठते । शिंष्टे

---

१ इति om. M Ben U.

२ Thus G H U Be, समवनीया॰ M, चवनीया॰ Ben.

३ The words द्वादश॰ unto सावित्रो (incl., l. 6) are given only by Ben, which, however, reads सावित्रो दशकपा॰ instead of सा॰ द्वादश॰ ।

४ Thus Ben, सावित्रश्च the other MSS.

५ Thus M Ben; ॰षेधयंत्यो॰ Be U H, ॰षेधयतीत्यो॰ G.

६ ॰वेदिकं all, but cp. T Br. II. 7. 5. 2.

७ Thus Be, ॰यंति the other MSS.

८ Thus G only; चाध्य॰ all the other MSS.

9.14. व्याघ्र उत या पृदाकाविति । किंदेवत्या उ खल्वियमाहुति-
र्भवतीति । ॥ १० ॥

4.16 इन्द्राणीदेवतेत्येव[1] ब्रूयात्समदग्निना पशुबन्धेनेष्ट्वोखाः
संभृत्य पशुशीर्षाणि च वायव्येन पशुना यजेतापि वा पुरस्ता-
देव तूष्णीं[2] संभृताः[3] संभृत्य मन्त्रवतीं मृदं संभृत्य तथानु-
56. 8. प्रलिप्य[4] । नियुनक्त्युक्थ्यस्योपयामगृहीतो ऽस्यग्नये त्वा बृहद्वते
वयस्वत उक्थायुवे यत्ते अग्ने बृहद्वयस्तस्मै त्वा विष्णवे त्वा
जुष्टं गृह्णामीति । परिमृज्य सादयत्येष ते योनिरग्नये त्वोक्था-
58. 14. युव इति । नियुनक्ति ध्रुवस्य मूर्धानं दिवो अरतिं पृथिव्या
मघवन्नमृताय जातमग्निम्[5] । कविं सम्राजमतिथिं जनाना-
मासन्ना पात्रं जनयन्त देवाः ॥ उपयामगृहीतो ऽसीन्द्राय
त्वा मघवते जुष्टं गृह्णामीति । परिमृज्य सादयत्येष ते योनि-
59. 3. रिन्द्राय त्वा मघवत इति । नियुनक्ति पात्नीवतस्योपयाम-
गृहीतो ऽसि बृहस्पतिसुतस्य त इन्दो[6] इन्द्रियावतः पत्नीवन्तं
ग्रहं गृह्णामीन्द्रा३[7] पत्नीवा३ इति । नियुनक्ति हारियोजन-

---

१ इंद्राग्नौ॰ Ben.

२ तूष्णीमेव M.

३ संभृतां all, but cp. the Vivaraṇa: तूष्णीं संभृता उखा संभृत्य ।

४ Thus M, तथानुप्रपलिप्य Be, तथानूपलिप्य G (sec. m.), तथानुलिप्य Ben H U.

५ जातमिंद्रमग्निं M.

६ Thus M G U. इंद्रो the other MSS.

७ Uncertain; ॰मींद्रा१इ G (sec. m.), ॰मींम्प्राइ Be, ॰मींद्रापाइ H ॰मींद्रम्पाइ U, ॰मीद्राणा - ॰ Ben, ॰म्प्राइ M.

ह्वोपयामगृहीतोऽसि रोहिदसि रोहिद्योजनो रोह्यो ख्याता वस्वस्य भर्ता पृश्नेः प्रेता तस्य ते देव सोमेष्टयजुष स्तुतस्तोमस्य शस्तोक्थस्य रोहिद्वन्तं ग्रहं गृह्णामि रोही स्थ रोह्योर्धानाः सहसोमा अग्नये स्वाहेति । यो ऽग्निष्टुतीन्द्रस्वर्गस्तमुत्सादयेद्य इन्द्रस्तुत्यग्निस्वर्गस्तमुत्सादयेन्नित्या अन्या देवताः । किंदेवत्यानि
II. 360. 10. स्वस्वतिरिक्तस्तोत्राणि भवन्तीत्याश्विनानीत्येव ब्रूयाद्यच्च[1] किंच रात्रिमुपातिरिच्यते सर्वं तदाश्विनमितीन्न्वेकमथापरमाग्नेयं[2] प्रथममैन्द्रं द्वितीयं वैश्वदेवं तृतीयं वैष्णवं चतुर्थमिति ।

॥ ३१ ॥ एकोनविंशः ॥

II. 366. 11. स ग्रीष्मस्य जघन्याहःसु प्रजहितेषु[3] यवेष्विति । प्रमृदि-
II. 366. 12. तेष्वित्येवेदमुक्तं[4] भवत्यधिकरणेनेत्येवेदमुक्तं भवत्यृत्विजः[5] पदे-
II. 367. 1. नाक्रापयतीति[6] तत्पूर्वं[7] वेत्यथैनमभ्यज्य पचयित्वोदानयतीति ।
शिक्रमथाग्निष्टोमिकं कर्म जानीयादोत्तरस्मादुपघातादेत-स्मिंश्च काले त्रीणि बर्हींषि यजुषा कुर्याद्दीक्षणीयायाः

१ °यजि M.

२ °मितीन्वेक°, मितीचेक°, मितिन्वेक° the MSS.

३ Thus M G (sec. m.) and the Viv.; प्रजितेषु Be, प्रजमितेषु H U G (pr. m.), प्रजमितेषु Ben.; the meaning is, acc. to the Viv., प्रपक्वेषु।

४ प्रमुदिते° Ben.

५ भवतीत्यृत्विजः Ben.

६ पदंमा-पयतीति Ben, पदंमाक्रायंतीति Be U, पदंमाक्रयंतीति G, पदंमा-क्रयंतीति H, पदंमासौदयपतीति M, but द cancelled.

७ Conjectural reading. तत्पूर्वंवत्यथे° Ben G (sec. m), तत्पूर्वंत्वथे° Be H U M G (pr. m.).

प्रायणीयाया आतिथ्याया इत्यथ निर्वपेद्दीक्षणीयां प्रायणीयामातिथ्यादाक्येन[1] वर्तयेयावद्गा[2] आगच्छेयुः[2] सहनिरुप्तमाज्यं निरुप्तेषु स्थालीषु विसृष्टीयायां दीक्षणीयायै सङ्ख्या[3] तया[3] दीक्षणीयाꣳ संतिष्ठापयिषेत्प्रणीताभिः प्रायणीयस्य

368. 2. प्रतिपद्येतैव[4] एवातिथ्याया उपक्रमो भवतीति । चिवत्सेन माण्डेन वत्सतरेण राजानं क्रीत्वोष्णातित्यं निर्वपतीति । चिचायणेनेत्येवेदमुक्तं[5] भवति[6] । कथमु खल्वस्य मन्त्रानभिनमये

368. 3. चिदसि[7] मनो[8]ऽसि[8] धीरसि दक्षिणोऽसि यज्ञियोऽसि चत्रियोऽस्यदितिरस्युभयतःशिराः[9] स नः सुप्राङ् सुप्रत्यङ् संभवेत्येकगणा[10] उपसदो भवन्तीति । पूर्वाचिका एवैता उक्ता

368. 13. भवन्ति । खलेवाली यूपो भवतीत्येतामेवैषां[11] मेथीं कुर्वन्ति ।

---

१ ? Thus Be U H. •आमाक्येन G. •आपूपदाक्येन M. Ben utterly corrupt.

२ Thus the Vivaraṇa : all the MSS. are hopelessly corrupt ; G has the least corrupt reading यावद्गामागच्छेयुः ।

३ Thus M G U Be. संख्याया H. संख्याम Ben.

४ Thus M G U. प्रतिपद्यद्येतैव Be Ben. प्रतिपद्येतेवया H.

५ •चायनेने• MSS. exc. Ben

६ भवतीति MSS. exc. M.

७ •भिसंनमये• G.

८ मनासि MSS. exc. H.

९ Thus Be G U Ben, •शिरो H, •शीर्षाचि M.

१० •गुणा MSS.

११ •त्येतकेवैषां Ben ; are we to correct : •त्येतामेवैषां (iṣā) ? Viv. एतामेव चर्षिणीमर्थं कुर्वन्ति ।

स खल्वेवासौ यूपस्तम्बे कटे परमिव पशावभाजनं भवतीत्या-
H. 369. 1.कुह[१] इत्येवेदमुक्तं भवत्यथैतान्पशूनुपाकरोत्यग्नीषोमीयमाग्नेय-
मनूबन्ध्यमिति । यमा एवैते छागाः समानयोनयो भवन्ति ।
तेषामुक्तं चरणमथाप्याहुः सद्यस्क्रियामनुक्रियां परिक्रियामति-
क्रियामवभृथप्रभृत्यस्तमिते[२] यज्ञपुच्छं । तासां प्रथमैव सरथा[३]
प्रथमा चित्यसोमक्रयणी प्रथमाग्निहोत्रोच्छेषणव्रतायास्याहुः[४]
सद्यस्क्रियामनुक्रियां परिक्रियामतिक्रियां त्रिमन्तद्विस्तनैक-
स्तनप्रतस्य[५] रूपाणि[५] कुर्वन्ति । क[६] उ[६] खल्वेकाह्ने दृष्टः[७]
संनिवापो भवतीति । व्रात्यस्तोमे चैन्द्राग्न्योश्च कुलाय इत्येव
H. 371. 5.ब्रूयादथास्मिन्व्रात्यस्तोमे[८] बहव एकस्मै दीक्षन्ते[९] । ऽदीक्षिता[१०]
H. 373. 8.एवैनान्याजयन्ति[१०] । दण्डोपानहं[११] ग्रामुलाजिनमिति । ग्रा-

---

१ Thus G M Ben, °कह U H. °क्लह Be. the Viv. reads चाकुह and details : चाहतन्याजं निवाहनम् ।

२ Instead of चतिक्रियाम् here and l. 7 the MSS. read चभि°, चवि° or इति° ।

३ Thus corrected ; सरथा Be M G, सुरथा: H U, सपथा: Ben

४ Corrected ; °पणा ह तोमंचास्त्रां M G U Be, °पणवततमचास्त्रां H Ben.

५ Corrected ; °कस्तनव्रतरूपाणि Ben H, °कहतस्य रू° M Be G U.

६ Thus M G Be U, कउ H क Ben

७ दृष्टौ: Ben, दृष्टं Be

८ Thus M Ben, °चैतस्मिन्व्रा° the other MSS.

९ Thus M G ; दीक्षवे Be U H, एकस्मिन्दीक्षवे Ben.

१० दीक्षित ... जयति H.

११ ? दंडोपानहं G (sec. m.) Ben, दंडोपवसनं G (sec. m.), दंडोपव-सनं Be, दंडोपवसन H, दंडोपिनहं M

मुञ्जकानामु[1]ह दर्भमिश्राः[2] कम्बला भवन्ति स च भवति[3]
श्वेतं[4] चौरश्वाजिनम्[5] । ॥ ३२ ॥

4.3.4 स एष[6] ज्येष्ठानामग्निष्टोम । एष एव सक्कनीयसामुक्थ्य-
186.6. श्चतुष्टोमं पूर्वमहर्भवति पञ्चस्तोममुत्तरꣳ[7] । रथो[7] हविर्धानं ।
186.8 कुर्यात्तद्रूपमुत्तरं हविर्धानमुत्सौदेयुः शकटमन्त्रा । द्वौ चय-
स्त्रिꣳशौ मध्यत स्तोमौ भवत इति । पृष्ठ्यस्तोमावेवैतावित-
श्चामुतश्च[8] प्रतिलोमौ[8] भवतो । ऽथामात्राश्यायां[9] प्रतिममस्य
83.10 चान्नमसं पिण्डपितृयज्ञं दद्यात्तं ब्राह्मणः सन्तं पर्युपविश्य
भक्षयन्ति यद्धुतं मन्यन्ते तेन ब्राह्मणं । ब्राह्मणो वै वर्णानाꣳ
श्रेष्ठो[10] ऽग्निर्देवानामित्येतेन वा भक्षयेदपि वा व्याहृतीभि-
183.12. श्चतुष्टोम एष भवतीति[11] चतुरुत्तरीय[12] एष[12] द्विग्नां चतु-

१ Thus M Be and Viv.: शामुञ्जाका० the other MSS.

२ Corrected according to the Viv. दर्भमिश्रा M G (sec. m.). दर्भमि Ben, मर्दभमिश्रा Be U H.

३ भवंति MSS.

४ श्वेता MSS

५ चोर० Ben (च चौरश-चजिनम् ?)

६ एष Ben and Viv : एव the other MSS

७ Thus M only, ०मुत्तरमथो the other MSS

८ Thus M G (sec. m.) Be Ben : ०तश्चाप्रति० U H G (pr. m.).

९ Refers acc. to the Vivaraṇa to the कुरुश (XVIII, 37).

१० Thus M Ben. ज्येष्ठो G U Be H

११ Ben om. इति, rightly ?

१२ Corrected : ०मरौयादेष M G U Be. ०मरौयादष H. ०मरायावदष Ben.

II. 392. 6. ष्टोमो भवत्यथास्मिन्कामानाभ्यधत्ते[1] ऽवभृथप्रभृत्यसमिते यज्ञ-
II. 395. 8. पुच्छं । तस्य दृप्तस्य बर्हिष्पवमानः शते सहस्रे ऽयुते नियुते प्रयुते[2]
ऽर्बुदे न्यर्बुदे समुद्रे मध्ये ऽन्ते परार्धे पद्धे[3] पद्मे नित्यमुक्ता[4]
मनसैव स्तुवानो मन्यत एतावति[5] मे[5] स्तुतमित्यथ सकृत्प्रवर्ग्यं
II. 405. 18. एकमेवाग्निहोत्रमथास्मिञ्छुनस्कर्णयज्ञे । तिलमिश्रमशित्वा म-
त्स्याज्याद्विता[6] चारमाचं[7] पिबेदथ सामपथे संविशेत्स्वप्यादेव
II. 406. 8. स्वप्ने गच्छति । राशिशतं[8] धान्यं ददाति मरायशतं धान्यं
II. 407. 4. ददातीति । भूतशतमित्येवेदमुक्तं भवति । प्रचरन्ति प्राञ्चः
प्रत्यञ्चः प्रचरन्तीति ॥ यः प्रत्यङ् विहारो दक्षिणत उपचार
एष भवत्येतेनैवापि सर्वतोमुखो व्याख्यात । एतेन सहस्र-
शाखो । ऽथैनमिष्ट्[9] पचयित्वामुत्र पचयन्तीति[10] । सिद्धमथ-

१ कामांच० (or कामांद० ?) M.

२ Om. G U.

३ पद्धे G U Ben and probably also M ; पद्य Be, द्दे H ; are we to correct here and XVIII. 43. बद्दे ?

४ Thus Ben : नित्यमुक्ताः the other MSS.

५ Thus M G U ; एतावतिमेव H, एतावतीमे Be, एतावतीमेव Ben.

६ ०खादित्वा H.

७ Thus G U : ०माच M. चारमाच H. चरमच Ben. मचारमाचं Be.

८ राशी० G Be U H.

९ Conjectural reading, वैनमिष्ट MSS (वैरमष्ट्व M). I have not been able to point out the passage in the text proper here referred to.

१० ०यतीति G (sec. m.) Be.

12 b. ग्निष्टोमिकं कर्म आग्नीध्रादुत्तरस्यैव[1] प्रासाद्ये । स द्वौ चिरात्रौ[2] कुर्वत एकं च द्विरात्रमिति[3] । द्वौ चोपसद्भिरेवास्यैतान्यहान्यभिविधत्ते । ऽहीनविधो[4] ऽति यज्ञं दद्यात्तदिदं[4] प्रोक्तं यदकृत्स्नं सूचतः । सामयिकं त्वेव क्रतुयोगं[5] यज्ञे यज्ञमुपलक्षयेतेति बौधायनो यज्ञे यज्ञमुपलक्षयेतेति बौधायनः । ॥

३३ ॥ विंशः ॥

॥ इति षड्विंशः प्रश्नः ॥

। कर्मान्तं समाप्तम् ।

---

१ Thus the MSS.: read ॰दुत्तरस्मै च ?

२ द्विरात्रौ G U.

३ चिरा॰ MSS. exc. M.

४...४ Wholly uncertain. ॰हौनविधोतियज्ञदद्यात्तदिदं G. हौनविधोतियज्ञं दद्यात्तदिदं U. हौनविधोतियज्ञदद्यात्तदिदं Ben Be. हौनविधातियज्ञं दद्यात्तदं H, हौनविधोतियज्ञं दद्यात्तदिदं M. The Viv. seems to point, at least also to the reading यज्ञं दद्यात् ।

५ Thus M G U H, क्रतुवेधं Be, क्रतुवेधं Ben

## प्रायश्चित्तसूत्रम् ॥

अथातो मन्त्रगणाम्नातानि प्रायश्चित्तानि व्याख्यास्यामः । सर्वत्रोपरिष्टान्मन्त्रकृतं यद्यधस्तान्निपतेद्ब्रह्म प्रतिष्ठा मनस इत्येतया प्रतिष्ठाप्यैतयैव स्रुवाहुतिं जुहुयाद्धुत्वा वा[1] प्रतिष्ठापयेद्धुत्वानन्तरं[2] कर्म कुर्यादेवमन्येष्वप्यतिक्रान्तं कर्म नाद्रियेत यद्यर्थलुप्तं भवति । सर्वत्राश्रावितप्रत्याश्रावितवषट्काराणामयुक्तानुक्रान्तेष्वाश्रावितमत्याश्रावितमित्येतया स्रुवाहुतिं जुहुयात्सर्वत्र देवोच्चारणेषु[3] भागिनीं देवतामनुच्चारयित्वा[4] योन्यामुच्चारयेद्यद्वो देवा अतिपादयानीत्येतया स्रुवाहुतिं जुहुयात्सर्वत्र देवतावाहनेषु भागिनीं देवतामनावाहयित्वा योन्यामावाहयेदेतयैव स्रुवाहुतिं जुहुयाद्यच्च स्मरेत्तदुपोत्थायैनां मनसावाहयेद्यातिरिक्तामाज्येन यथोक्तां यजेत । सर्वत्र प्रणीतानां प्रणीयमानानां प्रणीतानां[5] वा यदि[6] विप्रुषो[6] विपतेयुः[6] स्रवेद्वा चमस[7] आपो[7] हि ष्ठा मयोभुव इति तिसृभिरद्भिः पूरयित्वा ततं म आपस्तदु तायते पुनरित्ये-

१ Om. H

२ Thus H U C' B Viv., हुत्वानन्तरं Tr.

३ Thus H U B. देवतोच्चरणेषु C', ॰च्चारणे Tr.

४ देवतामुच्चा॰ B.

५ प्रचरितानां H B.

६ Thus Tr., विप्रुषो यदि पतेयुः the other MSS.

७ Thus C' H, चमसं चापो U, चमसमापो B, चमसामापो Tr.

तथा स्रुवाहुतिं जुहुयात्सर्वं च वितते यज्ञकर्मणि यदि सूर्यो नाविर्भवत्यन्यथादेशाद्दृश्य[1] तममस्यद्युद् त्यं चित्रमित्येताभिः स्रुवाहुतीर्जुहुयाद्यदि सूर्याचन्द्रमसोर्ग्रहणं[2] विद्यात एतदेवाथ यदि यजमानस्याग्लिजां वा स्वप्ने रेतोविसर्गः स्यादिमं मे वरुण तत्त्वा यामीत्येताभ्याꣳ स्रुवाहुती जुहुयात्सर्वं च[3] हविर्देवतायाज्यापुरोनुवाक्याहुतीनाꣳ हुताहुतमेषेष्वन्तरिते विपर्यासे च त्वं नो अग्ने स त्वं नो अग्न इत्येताभ्याꣳ स्रुवाहुती जुहुयात्सर्वं च दर्विकूर्चप्रस्तरपरिधिबर्हिर्विधृतिपवित्रवेदोपवेषेध्मद्रव्यसंभाराणां[4] छेददाहोपघातेषु नाशे विनाशे वान्यं यथालिङ्गं कृत्वा यथालिङ्गमुपसाद्य त्वमग्ने अयासि प्रजापत इत्येताभ्याꣳ स्रुवाहुती जुहुयात्सर्वं च वितते यज्ञकर्मणि ॥ १ ॥

यदि पुरा प्रयाजेभ्यो बहिःपरिध्यङ्गारा अभिपर्यावर्तेरन्नाम्नाणोक्तं प्रायश्चित्तं कृत्वेमं जीवेभ्यः परिधिं दधामीत्येतया स्रुवाहुतिं जुहुयात्सर्वं च वितते यज्ञकर्मणि यदि यज्ञ्भेष आगच्छेद्दिष्टेभ्यः स्वाहा[5] वषडनिष्टेभ्यः[5] स्वाहेत्येतैरष्टाभिः[6] स्रुवाहुतीर्जुहुयात्सर्वं च वितते यज्ञकर्मणि यदि जन्यं भयमा-

---

१ Thus U C' Tr Viv.. ॰न्यथादेशा॰ B न्यथाद्दशा' H

२ Thus C' U Viv.: सूर्याचन्द्रमसोर्ग्र- B. सूर्याचंद्रमसोप॰ Tr H.

३ B U ins. वितते यज्ञकर्मणि ।

४ दर्वि॰ Tr C' U Viv. दर्वी B H and Pray. candrika. Instead of ॰वेदोपवेषेध्म॰ Tr B read ॰वेदोपवेष॰ ।

५ Om. Tr.

६ ॰स्वष्टभिः C', ॰त्येताभिः Tr

गच्छेयत इन्द्र भयामहे स्वस्तिदा विमृधस्पतिरित्येताभ्याꣳ स्रुवाहुती जुहुयादभये वा पुनर्यजेत ।[1] सर्वचोपाꣳश्वप्रभृति वाच[2] स्थानानाꣳ स्वराक्षरपदवृत्तभ्रेषेष्वाभिगौर्भिर्यदन्तो न ऊनमित्येतया स्रुवाहुतिं जुहुयात्सर्वचानाम्नातप्रायश्चित्तेष्वनाज्ञातं पुरुषसंमित इत्येताभ्याꣳ स्रुवाहुती जुहुयात्सर्वचेष्वाबर्हिषः प्रयाजानूयाजानां[3] पाकयाकर्मसु[4] यत्पाकत्रा मनसेत्येतया स्रुवाहुतिं जुहुयात्सर्वच स्कन्ने भिन्ने छिन्ने भग्ने[5] नष्टे[5] चाम्ने विपर्यास उद्दाह[6] ऊनातिरिक्ते वा[7] यन्म आत्मनो मिन्दाभूत्पुनरग्निश्चक्षुरदादित्येताभ्याꣳ स्रुवाहुती जुहुयात्सर्वेष्वभ्युपघातेषु पुनस्त्वादित्या रुद्रा वसवः समिन्धतामित्येतया समिधमादध्यादेतयैव स्रुवाहुतिं जुहुयात्सर्वेषु यज्ञक्रतुषु पत्नीः संयाज्य प्राकृत्य ध्रुवामाप्याय्य ध्रुवातः सर्वप्रायश्चित्तानि जुहोति ब्रह्म प्रतिष्ठा मनस इत्येतेनानुवाकेन प्रत्यृषमंध वै भवति समिष्टयजूꣳषि जुहोति यज्ञस्य समिष्ट्यै । यद्वै यज्ञस्य क्रूरं यद्विलिष्टं यदत्येति यन्नात्येति यदतिकरोति यन्नापिकरोति

[1] In H U the prâyaścitta सर्वचेष्वाबर्हिषः (l. 5) is given here, but cp. T. Br. III. 7. 11. 5.

[2] वाचि U, वाचि H.

[3] °नुयाजा° H Tr.

[4] पाकयज्ञकर्मसु B Tr.

[5] Om. Tr. B; the last om. also भिन्ने छिन्ने ।

[6] ? उद्दाह Tr, दुदाहो H, उद्दाह B U, विपर्यासेदूरदाहे C′: the Viv. explains as उल्लेखने ।

[7] Om. Tr.

तदेव तैः प्रीणातीति ब्राह्मणमेतान्येव ब्राह्मणविधिविहितान्याध्यायनानि[1] मन्त्रवन्ति[2] भवन्तीति बौधायनो । मन्त्रगणाम्नातानि नैमित्तिकानीति शालीकिः । ॥ २ ॥ प्रथमः ॥

अथ कपालकरणे रथचक्रचित्यादत्यग्रपणमात्रं स्यात्तं कल्पितं भवति । संकल्पो[3]ऽधिकारः कपालवृद्धिः कपालह्रासो वा कपालानामनभिप्रथने व्याहृतीभिराहवनीये स्रुवाहुतीर्जुहुयाद्भूर्भुवः सुवरित्येतावदेव नानाप्रथने चातिप्रथने चाथ हविषामशृतद्रवदाहोत्सेकनिस्रावे[4] प्रायश्चित्तिरशृते रुद्राय स्वाहेत्याहवनीये[5] स्रुवाहुतिं जुहुयाद्भवे वायवे विदग्धे निर्ऋत्यै । यदि दग्धं स्याद्यत्तत्र[6] शृतं स्यात्तेन[7] प्रचरेदथ यदि सर्वमेव दग्धं स्यादपोऽभ्यवहृत्य मिन्दाहुती जुहुयादथान्यं निर्वपेदाज्येन वा प्रचरेत्सैव ततः प्रायश्चित्तिर्यस्यैयस्यै[8] दिश्युत्सिच्येत तस्यैतस्यै देवतायै स्रुवाहुतिं जुहुयाद्यदि प्राग्ग्नये यदि दक्षिणतो यमाय यदि पश्चाद्वरुणाय यद्युत्तरतः

१ C ins. sec. m. नित्यानि B ms. प्रायश्चित्तानि नित्यानि ।

२ मंत्रवर्जंति B and C (sec. m.)

३ संकल्पे B.

४ ०स्रावेषु Tr.

५ आहवनीये om Tr. B.

६ Thus C Tr. and Viv., स्यात्तत्र H, स्याद्यत्तत्र B C.

७ तत्र Tr. ins. after स्यात् ।

८ Thus also the Vivaraṇa.

सोमायाथ[1] यदि सर्वत एवोत्सिच्येतैताभ्यः सर्वाभ्यो देवताभ्यः स्रुवाहुतीर्जुहुयात्तमाज्येनाप्यायनीभ्यामाप्याययत्याप्यायस्व सं त इत्यथ हविषामुद्वासनकाले पतनस्फालनस्खलनोद्वर्तनसंसर्पणविपरीतव्यवायकरणेषु[2] [3]व्याहृतीभिराहवनीये स्रुवाहुतीर्जुहुयाद्भूर्भुवः सुवरित्यथान्तरेण वेद्युत्करावुदकुपनिक्रम्या तमितोऽदकुपनिःसृप्य[4] व्याहृतीरुक्त्वा व्याहृतीभिरेव प्रतिपद्यते[5] । ॥ ३ ॥

व्याहृतयस्तु[6] चतुष्पादा नवाङ्गाश्च षडक्षराः ।
चतुर्णामपि वेदानामादिमध्यावसानिकाः[7] ॥
मन्त्रोनं वातिरिक्तं वा दुरिष्टं वापि यद्भवेत् ।
व्यपोहयन्ति[8] पाप्मानं तस्माद्व्याहृतयः स्मृता इति ॥

यदृक्तो यज्ञभ्रेष आगच्छेद्भूरिति गार्हपत्ये जुहुयाद्यदि यजुष्टो भुव इत्यन्वाहार्यपचने । यदि सामतः सुवरित्याहवनीये । यदि सर्वतः सर्वा जुहुयात् ।

१ अथ om. B U.

२ Instead of ॰फलन॰ B. कालन॰ । – Before संसर्पण॰ B U have वलनवेपन॰ ।

३ Before व्या॰ A B ins. प्रायश्चित्तं, C' प्रायश्चित्तिः ।

४ Thus U C', ॰परिसृप्य H (pr. m.), ॰पसृप्य Tr H (sec. m.), सङ्कर-वाप्य B.

५ ॰पद्यते Tr H, ॰पद्येते B U C' (प्रविशेत् the Vir.)

६ व्याहृतीश्च U only

७ ॰वासकाः H U.

८ Thus H U B C'. पोहति च Tr.

उद्धृते तु पुरोडाशे वेपिते स्यन्दिते[1] तथा ।
भिन्ने सꣳसर्पणे चापि[2] प्रायश्चित्तं कथं भवेदिति ॥

विज्ञायते

उद्धृते तु[3] कुलꣳ हन्याद्वेपिते नश्यति प्रजा[4] ।
भिन्ने सꣳसर्पणे चापि यजमानः प्रमीयत इति ॥

अथ[5] पतनस्फालनखण्डनोद्वर्तनसꣳसर्पणेषु[6] प्रसिद्धमुद्वास्य बर्हिषदं कृत्वा प्रभूतेन सर्पिषावसिच्याभिमन्त्रयते किमुत्पतसि किमुत्प्रोष्ठाः शान्तः शान्तेरिहागहि[7] । अघोरो यज्ञियो भूत्वासीद सदनꣳ स्वमासीद सदनꣳ स्वमिति । ब्रह्मणे वरं दत्त्वान्तर्वेद्यासादयेत्तस्याꣳ सꣳस्थितायाꣳ सुरभिमतीं निर्वपेत्तस्याꣳ सꣳस्थितायां तन्तुमतीं निर्वपेत् ।

आयुष्मत्यस्तु कर्तव्या उत्तराश्छन्दसः[8] क्रियाः ।
हविर्भ्रेषविधिस्त्वेष[9] विहितस्तत्त्वदर्शिभिरिति ॥

१ स्यंदिते Tr. C'
२ चापि U
३ Thus C U Tr, नु H. B om
४ प्रजाः U C.
५ Instead of अथ Tr ब्राह्मणम् ।
६ B again •कालन• instead of •फालन•
७ शांतेवि• Tr
८ ? Thus U Viv (sec. m.), •रा:छंदस: H. •राश्छांदस: C', •राछंदस: Viv (pr. m.) Tr B.
९ हविर्वेष• Tr.

स्कन्ने प्रहरणनिर्वापे[1] द्रव्याणां चानुमन्त्रणे ।
यस्मिन्काले विजानीयात्तत्कुर्यात्कर्मसंस्तरे[2] ॥
प्रणवो व्याहृतयश्चैव[3] यज्ञ एष परो ऽवरः ।
तस्माद्यज्ञस्य यत्स्कन्नं विपरीतं च यद्भवेत् ।
तत्सर्वं व्याहृतीभिः[4] कुर्यादन्यच्च च वषट्कृतात् ॥
अजानद्भिः कृतं यच्च त्वरमाणैश्च यत्कृतम् ।
व्याहृतीनां प्रयोगेण यत्कृतं कृतमेव तदिति ।
कपालानां प्रमाणानि ब्रूयादाध्वर्यवे विधौ ।
समानि चतुरश्राणि द्व्यङ्गुलानि समन्ततः ॥

हविर्विकाराणां प्रमाणेन समविषमाणि[5] वर्धयन्तीति[6] बौधायनः ॥ ४ ॥ द्वितीयः ॥

अथारणिगतानामात्मगतानामजस्राणामन्वाहितानां[7] सवनगतानां चाग्नीनामुद्वातानां[8] प्रायश्चित्तिररणिगतं मथित्वा विहारं कल्पयित्वा गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतु-

---

१ प्रचरणि° Tr.

२ ? Thus Tr B, संस्तरेत् C', संचरेत U H

३ Thus H Tr C', °हृतिश्च B U.

४ Thus Tr, °तिभिः H C' U (pr. m.), °हृतिः B, °हृति U (sec. m.)

५ च ins. Tr B U (sec. m.).

६ Thus Tr U (sec. m.), वर्धयतीति B, वर्धयेदिति C' H U; the Vivaraṇa periphrases छेदयन्ति ।

७ चाजस्राणाम् om. Tr.

८ वाग्नी° U H.

गृहीतं गृहीत्वाहवनीये संतनीं[1] जुहोति मनो ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञꣳ समिमं दधातु । या इष्टा उषसो निम्रुचश्च ताः संदधामि हविषा घृतेन स्वाहेत्येतत्प्रायश्चित्तमनुगते ऽळते ऽभ्युदिते ऽभिनिम्रुक्ते चैतत्परिवित्तस्यैतत्परिविन्नस्यैतत्परिविविदानस्यैतत्सोमवामिने[2] सोमातिपवितायै[3] भग्नान्तरितस्यैतद्ब्रह्मचरहितस्यैतत्परोष्टस्यैतत्परियष्टुरेतदेव यस्य पुरुषो रथो ऽश्वो गौर्महिषो वराहो ऽहिर्मृगः श्वा वान्यद्वा श्वापदमन्तराग्नी गच्छेदेतदेव[4] [5]यस्याग्नेरेकदेशमपहरेयुरेतदेव सर्वास्वेवाग्निहोत्रस्यार्तिषु मनस्वत्या प्रायश्चित्तिः क्रियत इष्टा वसीयान्भवतीति ब्राह्मणम् ॥ ५ ॥ तृतीयः ॥

अथ दर्शपूर्णमासयोश्चत्वार ऋत्विजस्तेषामेकस्मिन्नविद्यमाने त्रयः प्रचरेयुर्द्वौ वा[6] यद्येक एव स्यात्पुरा प्रयाजेभ्य आज्यस्थाल्याः स्रुवेणोपघातमेकाध्वर्यवप्रायश्चित्तानि जुहोति जुष्टो वाचो भूयासं जुष्टो वाचस्पतये देवि वाक् । यद्वाचो मधुमत्त-

१ Thus Tr, संतनिं C', मंतनि B U, संतति H

२ Thus (and cp. Āp. IX. 12. 11) B; after परिविन्नस्यैतत् Tr H C' U ins. परिविदानस्यैतत्; Tr reads instead of परिविविदान॰ परिविदान॰ ।

३ ॰पवितस्यैतत् U C'

४ After एतत् H C' and U ins. the following passage (which however, is put between brackets in U) एतदेव विम्रुच (H. C' विम्रुच) पुरीषलोहितरेतोमांसान्यभिमध्यामेध्यान्याधानं समारोप्य अग्निमान्पवमानेष्टिर (॰नेष्टिवद् U).

५ Before यस्य B U H C' ins. अथ ।

६ वा found only in Tr C' and the Vivaraṇa.

स्मिन्मा धाः सरस्वत्यै स्वाहा ॥ इमामेवाश्विना यज्ञस्य यद्वाचो यद्दुरिष्टम् । तदश्विनौ भेषजेन संदधाताꣳ[1] स्वाहा ॥ त्राता-रमिन्द्रमवितारमिन्द्रꣳ हवेहवे सुहवꣳ शूरमिन्द्रम् । ह्वये नु शक्रं पुरुहूतमिन्द्रꣳ स्वस्ति नो मघवा धात्विन्द्रः स्वाहा । यन्मे मनसश्छिद्रं यद्वाचो यच्च मे हृदः । देवास्तच्छमयन्तु सर्वꣳ सोमो बृहस्पतिश्च स्वाहा ॥ यद्विद्वाꣳसो यदविद्वाꣳसो मुग्धाः कुर्वन्त्यृत्विजः । अग्निर्मा तस्मादेनसः श्रद्धा देवी च मुञ्चताꣳ स्वाहा ॥ यदन्तरिक्षं पृथिवीमुत द्यां यन्मा-तरं पितरं वा जिहिꣳसिम । अग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुञ्चतु दुरिता यानि चकृम करोतु मामनेहसꣳ स्वाहा ॥ ब्रह्मत्वे हौत्र आध्वर्यव आग्नीध्रे याजमाने[2] चैक एव यज्ञे यत्पर्याणि[3] तन्मे[2] देवा रक्षन्तां प्राणान्मे मा हिꣳसिषुः स्वाहा ॥ अहं ब्रह्माहꣳ होताहमध्वर्युरहमाग्नीध्रो ऽहं यजमान एक एव यज्ञे पर्याणि[3] तन्मे[2] देवा रक्षन्तां प्राणान्मे मा हिꣳसिषुः स्वाहेत्यैकाध्वर्यवप्रायश्चित्तानि हुत्वान्तर्वेद्यासीनः सर्वा देवता यजतीति विज्ञायते ।

अतिक्रान्तेषु होमेषु पर्वस्वाग्रयणेषु च ।
अरण्योर्ह्रियमाणेषु कथं तन्त्रं न लुप्यते ॥

---

1 Thus H C'. संधातारौ Tr, मंदधातारौ B U.

2 Om. H C Tr.

3 Thus Tr B; पर्वश्चितंमे or तन्मे C' H U. I take पर्याणि as standing for परियाणि, 1st conj. praes cp अपर्याय ।

शुचिश्च पावमानी च तन्तुमानथ पाथिकृत् ।

एता इष्टयः[1] प्रयोक्तव्यास्ततस्तन्त्रं न लुप्यते ॥

शुचिः शोधयते पापं तन्तुस्तन्त्रं न लोपयेत् ।

पथिकृत्पन्थानमारोहेत्[2] पावमानी तु पावयेदिति नु[3]

बौधायनस्य कल्पो । दर्शे व्यतीते पाथिकृती कार्या पौर्णमासे व्यतीते वैश्वानरी कार्योभये व्यतीत उभे[4] कार्ये बहुषु व्यतीतेष्वन्वारम्भणीया[5] स्यादिति[6] शालीकिः । ॥ ६ ॥ चतुर्थः ॥

अथ यद्यरणी जीर्णे स्यातां जन्तुभिर्मन्थनेन वा समाने नवे अन्ये अरणी आहृत्यामावास्यायामुपोष्य[7] श्वो भूते दार्शेनेष्ट्वा तस्मिञ्जीर्णे शकलीकृत्य गार्हपत्ये प्रक्षिप्य प्रज्वाल्य दक्षिणेनोत्तरारणिमादाय[8] सव्येनाधरारणिमुपर्यग्नौ धारयन्नुपत्युद्धुष्यस्याग्ने प्रविशस्व योनिमन्यां देवयज्यां वोढवे जातवेदः । अरण्या अरणिमनुसंक्रमस्व जीर्णां तनुमजीर्णया निर्णुदस्वेत्ययं[9] ते योनिर्ऋत्विय इत्यरण्योरग्नीन्समारोह्य[10] मन्थन-

१ इष्टीः प्रयुञ्जीत तत॰ Tr.
२ Thus Tr. ॰न्थानमारोहेत् C'. ॰न्थानमारोहेत् B. ानमारोहयेत H U.
३ नु given by U C' only
४ उभये B U.
५ ॰भ्यौ Tr.
६ कार्येति U.
७ ॰मावास्यायामुपोष्य om. Tr B.
८ ॰रणीमादाय H.
९ निर्णु॰ Tr: after ॰दस्वेति H U C' ins. च ।
१० ॰ग्निं instead of ॰ग्नीन् B; ॰रोप्य Tr B

आहृत्य गार्हपत्यं[1] मथित्वा[1] विहारं कल्पयित्वा गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वाहवनीये संतनीं[2] जुहोति मनो[3] ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञꣳ समिमं दधातु। या इष्टा उषसो निम्रुचश्च ताः संदधामि हविषा घृतेन स्वाहेत्यथाग्नये तन्तुमते पुरोडाशमष्टाकपालं निर्वपति। शरावं[4] दक्षिणां ददाति। सा प्रसिद्धेष्टिः संतिष्ठते। ॥ ७ ॥

पञ्चमः ॥

अथारण्योर्व्यापत्तिं[5] व्याख्यास्यामो ऽष्टाभिर्निमित्तैर्विनष्टत्यमेध्यश्वचाण्डालशूद्रवायसपतितरासभरजस्वलाभिश्च[6] संꣳस्पर्शने ऽरण्योर्विनाशस्तयोरुत्सृज्य[7] समाने नवे अन्ये[8] अरणी आहृत्याग्निसहमन्थाधेयमरणिगतं[9] पुनराधेयं नष्टारणी अप्सु निमज्जति[10] भवतं नः समनसावित्यथोत्तरां छित्त्वा भित्त्वा

---

१ Tr om. आ° म°, B om. आ° ।

२ Thus Tr B U, संततिं H C′.

३ All the MSS. abbreviate the mantra.

४ Thus Tr C′ H and the prāy. candrikā: आरावं B U.

५ अथारणीरण्यो° H U C′;— °र्व्यापत्तौ° Tr.

६ स्पृश° instead of स्पृश° Tr B U.— °चण्डाल° Tr.

७ ?Thus (°शयोरु°) Tr C′ and the Viv., °शायोरु° H, °शायोरु° B U.

८ Om. H U.

९ ? °मन्थ° Tr C′ H B and the Viv., °मत° U— °माध्या° Tr.— °रणिगतं Tr and the Viv., °रणीगतं C′ H U °रणगतं B.

१० निमज्जति B C′, निमज्ज्य Tr H B and the Viv.

प्रकृतीकृत्य मन्थनसामर्थ्यं समारोपणसामर्थ्यं मन्थनशेषं वा प्रमन्थनं[1] च कुर्यात्समस्तप्रसववर्जं । संतिष्ठते ऽरण्योर्व्यापत्तिः ।

॥ ८ ॥ षष्ठः ॥

अथ हविर्दोषान्व्याख्यास्यामो यथैतच्छौनमक्षिकाघ्रातिका[2] मत्कुणस्वेलम्बिरसोर्यूके[3] कीटो वा पिण्डकारी स्यात्क्षुद्रकीटमक्षिकापिपीलिकावर्जं श्वमार्जारनकुलकुक्कुटमर्कटध्वाङ्क्षाखुपुरीषसिक्पदकेशमूत्रनखकुनखपूतिद्रप्सस्वेदाश्रुश्लेष्मासृक्काशववध्याद्रंमणैर्वोपहतमन्यैर्वोपहतं[4] रजस्वलया वा स्पृष्टं तथाप्रयतेन[5] भ्रूणघ्नेन वा दृष्टं तथापपात्रेणामेध्ये वा देशे । स्कन्नं दुष्टं हविरपो ऽभ्यवहरन्ति । शीते[6] भस्मनि वा निधापयति[7] । भिन्नाहुती हुत्वाथान्यन्निर्वपेदाज्येन[8] वा प्रचरेदपि[9] तु[10]

---

१ Thus B H and the Viv.; मथनं U C', प्रमंथं Tr.

२ Thus (°घ्रातिका i. e. आघ्रातिका according to the Viv.), B and the Viv., °घ्रातिका H C'. °शौतिका U.; Tr om.

३ Thus (°येल°) U H C' and the Viv., °येल B, °येल° Tr.

४ °शववध्या° my conjecture; °शववधा° Tr, °शववधा° H, °शववधा° U, °शववधा C', °वधा° B.; the Viv.: शववधुः चूर्णं ।

५ °प्रयतेन H; अप्रयतो नामाशुचिः the Viv.

६ शीत Tr C'.

७ °यंति Tr H U.

८ °वाज्यग्नि° Tr, °वाज्यनि° B, °वाज्यंनि° C' U, °वाज्यंनि° H.

९ After प्रचरेत् H U C' ins. नैव तत्र प्रायश्चित्तिः ।

१० Thus Tr C' Viv. (sec. m.), नु H U B Viv. (pr. m.).

खलु चिप्रसꣳस्कारमाज्यं[1] भवत इति। मिन्दाहुती हुत्वा मनस्वतीं जुहोति। सैव ततः[2] प्रायश्चित्तिः[3]। ॥ ९ ॥ सप्तमः ॥

अथातो ऽग्नीनामुद्वातानां प्रायश्चित्तिराहुतयः सꣳस्कारार्था दृष्टा भवन्ति। चतुर्होतार इत्येके। व्याहृतय इत्येके। मिन्दाहुती इत्येके। मनस्वतीत्येके। महाव्याहृतय[4] इत्येके[4]। अथ यदि सर्व एवोद्वायेयुरायतनेभ्यो ऽरण्योरग्नीन्समारोप्य[5] मन्थनप्रावृता गार्हपत्यं मन्थतीतः प्रथमं जज्ञे अग्निः स्वाद्योनेरधि जातवेदाः। स गायत्रिया[6] त्रिष्टुभा जगत्या देवेभ्यो हव्यं वहतु प्रजानन्निति। छन्दोभिरेवैनꣳ स्वाद्योनेः प्रजनयतीति ब्राह्मणमथ[7] यदि मथ्यमानो न जायेत यथान्यं पश्येत्तत आहृत्य होतव्यमित्यथान्यमनारमाणः[8] पुनर्मन्थेदथ यदि जात एवोद्वायेत्समारोपणमन्त्रं जपित्वा पुनरेव मन्थेदथैनमुप-

---

१ °संस्कारतमना° U (pr. m.) Viv. (sec. m.), °सꣳस्कारतमा° C'.

२ ततः Tr, तत U B H C'.

३ H U C' add इति विज्ञायते।

४ Om. Tr C'.

५ °रोप्य B U H.

६ गायत्र्या MSS.

७ After ब्राह्मणम् H C' insert the passage (l. 11-12): अथ यदि... पुनरेव मन्थेत्।

८ Instead of the words: यथान्यमनारमाणः... पुनरेव मन्थेत् (l. 11-12) H C' have (and cp. Rudradatta on Āp. IX. 2, 3): लौकिकमग्निमाहृत्य विहृत्याग्नीनन्तरारणी निधाय कुड्यामन्तरेवारमाणो मन्थेदुत्तरं मन्थनम्; these last two words not in C'.

तिष्ठत इषे रय्यै रमध्व महसे द्युम्नायोर्जे ऽपत्यायेत्यथैनमुप-
समिन्द्धे सारस्वतौ त्वोत्सौ समिन्धातामित्यन्नादसि विराड-
सीत्यथैनमुपसमाधायान्वाहार्यपचनमाहृत्य जघनेनाहवनीय-
मुद्धृत्य न्युप्योपसमाधाय[१] गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि
चतुर्गृहीतं गृहीत्वा दशहोतारं मनसानुद्रुत्याहवनीये जुहो-
त्यन्वारब्धे यजमाने स्वाहेत्यथ प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य[२]
गार्हपत्ये दशात्मकं ब्राह्मण एकहोतेत्येतस्यानुवाकस्य दश
स्रुवाहुतीरथ यद्यन्वाहार्यपचन उद्वायेद्गार्हपत्यादेनमुद्धृत्यान्वा-
हार्यपचने चतुर्होतारं जुहोति गार्हपत्ये दशात्मकमथ
यद्याहवनीय उद्वायेद्गार्हपत्यादेनमुद्धृत्याहवनीये पञ्चहोतारं
जुहोति[३] गार्हपत्ये दशात्मकमथ[३] यदि सवनगतानामग्नीना-
माग्नीध्रीय[४] उद्वायेच्छालामुखीयादेनमुद्धृत्याग्नीध्रीये षड्ढोतारं
जुहोति शालामुखीये दशात्मकमथ यद्यौत्तरवेदिक आहव-
नीय उद्वायेदाग्नीध्रीयादेनमुद्धृत्यौत्तरवेदिक आहवनीये सप्त-
होतारं जुहोत्याग्नीध्रीये दशात्मकम्[१] ॥ १० ॥

एतयैवावृतैकाग्निमुद्वाते द्वयोर्वा प्रतिविभज्य होतॄञ्जुहुया-
द्यावतीर्वोद्वाताः समस्तास्ता जुहुयात्तथा मिन्दाहुती जुहुया-

---

१ These two words found in C' H U (in U they are cancelled), U ins. जघ after °धाय।

२ These two words om. Tr C' H.

३ H B read हुत्वा and insert जुहुयात् after दशात्मकम्।

४ सवनगतानामग्नीनाम् om. Tr.

मनस्वतीं चेदाहवनीये जुहुयात्तेषामजस्राणामन्वाहितानां सवनगतानां चाग्नीनामुद्वातानां प्रायश्चित्तिरेतदेव[१] होमकाले ऽन्याधानवर्जमथ यस्याग्निरुद्धृतो[२] ऽहुते ऽग्निहोत्र उद्वायेदिति यथासूक्तं[३] वा कुर्यादपि वा गार्हपत्यादिध्ममादीप्य[४] मन्थनमधिमन्थनमुपसमिन्धनमित्येतान्मन्त्रान्निगदेदपि[५] वा ज्योतिष्मतीमिष्टिं निर्वपेदपि वा ज्योतिष्मतीभ्यामृग्भ्यां पूर्णाहुतिं जुहुयादपि वा ज्योतिष्मतीं स्रुवाहुतिं जुहुयादग्नये ज्योतिष्मते स्वाहेतीष्टिपूर्णाहुतिस्रुवाहुतीनां पूर्वंपूर्वं विधिं बलीयांसमाचार्या ब्रुवते । तत्रोदाहरन्ति

येये विशेषा लघवो यत्रयत्रोपलक्षिताः ।
कर्म तैर्न प्रसङ्गेन कुर्यादापत्सु तद्धुनम्[६] ॥
विशेषान्सर्ववेदेभ्यः[७] प्रयत्नेनोपधारयेत्[८] ।
कर्मणां प्रविचारार्थमापत्सु[९] च समाप्नुयादिति ॥

---

१ Thus C' H B U (pr. m.) and the Viv.; °त्तिषेव Tr, °त्तिरेवाथ यदि U (sec. m.).

२ यथस्याग्नि° Tr.

३ Viz. according to the ritual exposed in XIII. 7 : 124. 1.

४ Instead of मादीप्य H U उद्धृत्य।

५ अधिमंथनम् found in C' Tr H U (pr. m.).

६ मधुनं H U.

७ °देवेभ्यः H Tr and once in the Viv.

८ प्रयत्नेनो° B.

९ प्रतिचारा° B U.

यदि प्रयक्ष्णेन हुतं च[1] लौक्ये[1] मुग्धैर्वा[2] बालैर्हुतं स्याद्विहुतं[3] च पत्न्या तानरण्योरग्नीन्[4] समारोप्योद्वसाय[5] मथित्वाग्नीन्विहृत्य पूर्णाहुतिस्तन्तुमती च कार्यैत्यथ यद्यप्रयक्ष्णेन हुतं च[6] लौक्ये[6] मुग्धैर्वा[7] बालैर्हुतं[8] स्याद्विहुतं च पत्न्या ताम्व्याहृतीभिर्विहृत्य पूर्णाहुतिस्तन्तुमती च कार्यैति । ॥ ११ ॥ अष्टमः ॥

अथ वै भवति[9] निर्ऋतिर्वा एतस्य यज्ञं गृह्णाति यस्या कस्यां च हविः चायति[10] यद्यवदानानि विन्दन्ति नाव प्रायश्चित्तं कुर्वन्ति । दहति ह वा एषो ऽध्वर्युरवदानानि । समू[11]ह्यैतान्येष[11] तर्पयति[11] । दहति ह वा एष य[12] आज्यं[12]

---

१ ? चलौक्यं Tr U, चलौक्ये C′ the Viv., चलौवे H. चलौक्ये B

२ Thus B C′, मुग्धैर्नेवा H, मुग्धंमवा Tr U the Viv

३ विहुते H U.

४ Thus Tr and the Viv., मामारण्यो॰ H, यारण्यो॰ B U, नारण्यो॰ C′.

५ समारोप्योद्वसीय H U, समारोप्य B, समारोप्य Tr C′.

६ Thus Tr C′ the Viv., चैलाक्यं B, चालौक्यं H, लौकिक्यं U.

७ Thus B, मुग्धैनवा H, मुग्धंमवा U C′, मुग्धेग्धमवा Tr.

८ Thus Tr B, बालैर्हुतं C′, बालैर्वाहुतं H U.

९ These three words not in H Tr.

१० Thus (and cp. Āp. IX. 1. 17) Tr B U the Viv. चारयति C′, चपर्यति H.

११ समूह्यैतान्येष संतर्पयति U, समूह्यैतान्येष तर्पयति Tr, समूह्यैतान्येष संत॰ H, समूह्यैनेतान्येष संत॰ B, समूह्यैतान्येषः संत॰ C′.

१२ Thus Tr and the Viv., यदाज्यं the other MSS.

पुरस्तादञ्जलाघावदानानि जुहोत्याज्येनोपरिष्टाद्भिघार-यति। तेषाꣳ संदग्धानां न देवास्तृप्यन्ति[1] न यजमानो। ऽथ हैनान्येष संतर्पयति य आज्यं पुरस्ताज्जुत्वाघावदानानि जुहोत्याज्येनोपरिष्टादभिघारयति। तेषाꣳ संहृष्टानां तृप्यन्ति[2] देवास्तृप्यति[2] यजमानो[2]। ऽथ यद्याग्नेयात्पुरोडाशादग्नीषोमौ यजेताग्नीषोमीयाद्वाग्निं यजेत नैतत्प्रदानमित्याहवनीये स्रुवाहुतिं जुहुयाद्यदो देवा प्रतिपादयानीति। देवपवित्रमाग्नेय्यो याज्यापुरोनुवाक्या देवपवित्रमैन्द्रियो[3] देवपवित्रं प्राजापत्या देवपवित्रं व्याहृतय इत्यथ यदि होता याज्यापुरोनुवाक्यासु मुह्येत सर्वाभिराग्नेयीभिर्यजेतेति। विज्ञायते ऽग्निः सर्वा देवता इत्यैन्द्रीभिर्विज्ञायत[4] इन्द्रो वै सर्वा देवता इति। प्राजापत्याभिर्विज्ञायते प्रजापतिः सर्वा देवता इति। व्याहृतीभिर्विज्ञायते सर्वा वा ऋचः सर्वाणि सामानि सर्वाणि यजूꣳषि यद्व्याहृतय इत्यथ यदि यजमानो याजमानेषु मुह्येत व्याहृतीभिरेवान्तरेण वेद्युत्करौ प्रपद्य[5] व्याहृतीभि-

---

१ देवतास्तृ॰ U (sec. m.).

२ Thus Tr, देवा (or देवता) तृप्यंत्यथ यज॰ U (sec. m.) B, देवास्तृप्यंति यजमानो H; C′ incomplete.

३ Thus U, ॰मिंद्रियो C′, ॰मैन्द्र्यो Tr U the Viv., ॰मैन्द्रिया H.

४ After the instrumental here and infra some of the MSS. ins. वा।

५ प्रपाद्यं Tr. C′.

रेवौपनिष्क्रमणं व्याहृतीभिरेवानुमन्त्रणं विज्ञायते[1] सर्वा वा ऋचः सर्वाणि सामानि सर्वाणि यजूꣳषि यज्ञमाहुतय इत्युपाससते ह वै यज्ञं देवा[2] अन्तरिता[3] इदमु नो हविर्न कृतं तज्जोष्यत[4] इत्या स्विष्टकृत इत्येक आ इडाया इत्येक आनुयाजेभ्य[5] इत्येक आ शंयुवाकादित्येक आ समिष्टयजुष इत्येक ऊर्ध्वं चेत्समिष्टयजुषः स्मरेत्सꣳस्थाप्यैतामिष्टिमन्यामिष्टिमनुसवनां तन्वीत यज्ञो हि[6] वै[6] यज्ञस्य प्रायश्चित्तिरिति विज्ञायते ॥ १२ ॥ नवमः ॥

अथ सांनाय्यदुहो[7] धयेयुश्चेत्ता वायव्यया[8] वत्साम्या[8] सायं यजेताप्येकस्यां दुग्धायां न[9] धीतायां[9] दोहयेद्दुग्धाभिः सꣳस्थाप्यादुग्धानां[10] वत्सानपाकृत्य श्वः सांनाय्येन यजेत।

---

१ च ins. H U C'.

२ देवता H C'.

३ Thus H U C', अंतर्हिता Tr B.

४ तज्जाषो° Tr.

५ Thus, not आनू° the MSS.

६ हैव Tr.

७ सान्नायदो Tr, सान्नाय्यदुहो H.

८ Thus C' Tr and the Viv.; वायव्याया वत्साम्या B C'. वायव्यया-वंवाम्या C'.

९ ? नाचीतां Tr, नधीता B, नपीतां H U C'. The Vivaraṇa periphrases: वत्साभावेन वा दोहयेत (sic)।

१० °साय दुग्धायां Tr H.

सायंदोहस्येदार्तिमार्छेदिन्द्राय[1] व्रीहीन्निरुप्योपवसेदिति यथा-समाम्नातमपि वा प्रातर्दोहं द्वैधं कृत्वान्यतरदातञ्च्य[2] सायं-दोहस्थाने कुर्यात्कृतस्थान[3] इतरत्प्रातर्दोहस्येदार्तिमार्छेदैन्द्रं वा माहेन्द्रं वा पुरोडाशं निरुप्य तेन दध्ना सह प्रचरेदुभयं चेदार्तिमार्छेदैन्द्रं[4] पञ्चशरावमोदनं निर्वपेदिति । प्रसिद्ध-माग्नेयेन प्रचर्यैन्द्रेण प्रचरेत्सर्वाणि चेद्धवींषि दुष्येयुर्नश्येयु-रपहरेयुर्वाज्येनैता देवताः प्रतिसंख्यायमिष्ट्वैतामिष्टिमन्या-मिष्टिमनुसवणां[5] तन्वीत । यज्ञो ह[6] वै[6] यज्ञस्य प्रायश्चित्ति-रिति विज्ञायते । ॥ १३ ॥ दशमः ॥

अथातश्छन्दस्यनाम्नातानि[7] ऊतानुमन्त्रणानि व्याख्या-स्यामो । वैमृधमिष्टमनुमन्त्रयत इन्द्रस्य वैमृधस्याहं देवयज्य-येन्द्रियाव्यसपत्नो वीर्यवाञ्छ्रीमान्भूयासित्यसपत्नो वीर्यवान्भूया-

---

१ After इन्द्राय C′ H U and the Viv. ins. वा महेन्द्राय वा but cp. T Br. III, 7. 1. 6.

२ ०न्यतरमातञ्च B U, ०न्यतरदाविञ्च C′.

३ कृतस्थान इतरत् only in H U C′.

४ चार्तिमार्छेत् om Tr H C′.

५ प्रतिसंख्यामि० Tr ; C′ : प्रतिसंख्यायामि० ; the Viv. and B U as given in the text.

६ चैव Tr.

७ The Prāyaścitta candrikā makes the interesting statement, that these anumantraṇa formulas are taken from the Kāṭhaka (काठीय sic). Some of them occur indeed in the Kāṭhaka (v. i : 44. 5 sqq.).

समिति वा[1] । पर्जन्यस्याहं देवयज्यया सुयवसो[2] भूयासꣳ सोमस्याहं देवयज्यया प्र प्रजया च पशुभिश्च जनिषीय सुरेता रेतो धिषीयेति वा । सवितुरहं देवयज्यया सनिमान्पशुमान्भूयासꣳ । सरस्वत्या अहं देवयज्यया वाचमन्नादं पुषेयꣳ । सरस्वतो ऽहं देवयज्यया श्रद्धामना भूयासं । पूष्णो ऽहं देवयज्यया पुष्टिमान्पशुमान्भूयासं[3] । मरुतामहं देवयज्यया प्राणैर्ऋध्यासं । विश्वेषां देवानामहं देवयज्यया प्राणैः सायुज्यं गमेयं । द्यावापृथिव्योरहं देवयज्ययोभयोर्लोकयोर्ऋध्यासं भूमानं प्रतिष्ठां गमेयमिति वा । वाजिनामहं देवयज्यया रेतस्वी भूयासं । वरुणस्याहं देवयज्यया धर्मभाग्भूयासं । कस्याहं देवयज्यया प्रविष्ठो[4] भूयासं । विश्वकर्मणो ऽहं देवयज्यया विश्वानि कर्माण्यवरुन्धीयादित्या अहं देवयज्ययाꣳहसो मुच्येय । वायोरहं देवयज्यया रत्नभाग्भूयासꣳ । सूर्यस्याहं देवयज्यया सहस्रीको भूयासमग्राविष्णवोरहं देवयज्यया वीर्यवान्भूयासं । विष्णोरहं देवयज्यया

१ H U C′ ins. पर्जन्यमिष्टमनुमन्त्रयते H U C′, and thus each time further on, mutatis mutandis, before each formula (e.g. after सुयवसो भूयासमिति सोममिष्टमनुमन्त्रयते सोमस्याहं etc.). But cp. the expression (p. 342. 2.) यथादेवतमिष्टमनुमन्त्रयते ।

२ सुवर्चो Tr only.

३ पशुमान् in Tr C′ and Prāy. candrikā only.

४ प्रथिष्ठो Tr B.

ग्निपिविष्टो भूयांसमेवं यज्ञो ऽहं देवयज्यया सुवर्ग[1] लोकं गमेयमिति। यथादेवतमिष्टमनुमन्त्रयत[2]. एवमनादिष्टानष्टाकपालानाग्नेयविकारानावपत एकादशकपालानग्नीषोमीयविकारान्द्वादशकपालान्वैश्वदेवविकारानेककपालं भूमिकपालं च द्यावापृथिव्यविकारावतो[3] ऽन्यानाग्नेयविकाराꣳसंहत्सौम्यविकारान्दधिपयसामिक्षापशव:[4] सांनाय्यविकारा[5] वनस्पतिः स्विष्टकृद्विकार।. उपांशुयाजानुपांशुयाजविकारानावपत[6] इत्येयाप्युदाहरन्ति[6] हविःसामान्यं देवतासामान्यं कपालसामान्यमिति हविर्देवताकपालसामान्ये हविःसामान्यं बलीय[7] इत्यपि[7] वाक्य यज्ञस्यागुर उदृचमग्नीयेति सार्वत्रिकम्।

॥ १४ ॥ एकादशः ॥

॥ इति सप्तविंशः प्रश्नः ॥

---

१ Thus U C′ Prāy. candr., स्वर्गं Tr B H.

२ •दैवत• H U C′.

३ Thus B U H Viv., •विकारानतो Tr C′.

४ Thus (•विकारान्दधि•) U C′ and Viv.: •विकारांदधि• Tr, •विकाराद्दधि• H, •विकारानिति माक्षीकिर B. — C′ breaks off after पयसामिक्षापशुभ्य (sic).

५ Thus Tr U B, •विकाराम् H.

६ Thus U; •कारावपत इत्य• H, कारानित्यथा Tr B.

७ Thus B H U and the Viv., बलीयोऽपि Tr.

अथ वै भवति यः पापयक्ष्मगृहीतः श्यावो वापद्येत देवेभ्य ऋषिभ्यः पितृभ्यो गोभ्यो ब्राह्मणेभ्य[1] स्तेनाभिशस्तो ऽभिशस्यमानो वा रहस्येष्ट्या यजेतेत्येतयेष्ट्या यक्ष्यमाण उपकल्पयते हिरण्यं । तस्याः प्रज्ञात उपवसथो । ऽथ प्रातर्हुते ऽग्निहोत्रे पुरा वा प्रणयनाद्गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वाहवनीये जुहोत्यन्वारब्धे यजमाने येन देवाः पवित्रेणात्मानं पुनते सदा। तेन सहस्रधारेण पावमान्यः पुनन्तु मा स्वाहेत्यथापरं चतुर्गृहीतं गृहीत्वाहवनीय एव जुहोति प्राजापत्यं पवित्रꣳ शतोद्यामꣳ हिरण्मयम्। तेन ब्रह्मविदो वयं पूतं ब्रह्म पुनीमहे स्वाहेत्यथापरं चतुर्गृहीतं गृहीत्वाहवनीय एव जुहोतीन्द्रः सुनीती सह मा पुनातु सोमः स्वस्त्या वरुणः समीच्या। यमो राजा प्रमृणाभिः पुनातु मां जातवेदा मोर्जयन्त्या पुनातु स्वाहेत्यथ पृष्ठ्याꣳ स्तीर्त्वापः प्रणीयाग्नये ऽꣳहोमुचे ऽष्टाकपाल इति दशहविषमिष्टिं निर्वपति श्रपयित्वासादयति । तस्याः सप्तदश सामिधेन्यः । समिध्यमानां च समिद्धां चान्तरेण पावकवत्यौ धाय्ये दधात्यपामिदं न्ययनं नमस्त इति द्वे[2] । पावकवन्तावेवाज्यभागावग्नी[3] रक्षाꣳसि सेधति शुक्रशोचिरमर्त्यः। शुचिः पावक ईड्य इति

१ B C ins. [illegible], which is neither found in the Pray. pradipa देवेभ्यः पितृभ्य ऋषिभ्यो गोभ्यो ब्राह्म॰ Tr, देवेभ्य ऋषिभ्यो ब्राह्मणेभ्यः पितृभ्य H.

२ द्वाभ्यां Tr B, द्वे H.

३ इव given by Tr only.

पुरोनुवाक्यामनूच्य यत्ते पवित्रमर्चिष्यग्ने विततमन्तरा। ब्रह्म तेन पुनीमह इति यजति। यो धारया पावकया परिप्रस्यन्दते सुतः। इन्दुरश्वो न कृत्विय[1] इति पुरोनुवाक्यामनूच्या कलशेषु धावति पवित्रे परिषिच्यते। उक्थैर्यज्ञेषु वर्धत इति यजत्यथ हविषामग्नेर्मन्वे प्रथमस्य प्रचेतस इत्येतस्मिन्ननुवाके याज्यापुरोनुवाक्याः सहसंयाज्या भवन्त्यथ[2] पुरस्तात्स्विष्टकृतः स्रुवाहुतीरुपजुहोति पवमानः सुवर्जन इत्येतेनानुवाकेन प्रत्यृचं। प्रसिद्धेडायान्वाहार्यमासाद्य हिरण्यं ददाति। समानं कर्म पत्नीसंयाजेभ्यो। ऽथ पुरस्ताद्बृहस्पतेः स्रुवाहुतीरुपजुहोति यद्देवा देवहेडनमित्येतेनानुवाकेन प्रत्यृचꣳ। संतिष्ठत एषेष्टिः सपूर्णपात्रविष्णुक्रमा। विज्ञायते व्रतमेतयैव यजेतर्तुव्यतिक्रमे[3] दारव्यतिक्रमे ऽयोनौ वा रेतः सिक्त्वैतयैव यजेत पातकोपपातकसंयुक्तो[4] द्वादशाहं महापातकसंयुक्तो मासं पुष्यमित्येके संवत्सरमृतुं वा तामेतां महापवित्रेष्टिरित्याचक्षते मृगारेष्टिरिति वा रक्षोघ्नेष्टिरिति बौधायनः[5]। ॥ १ ॥ प्रथमः ॥

१ Thus Tr U H, कृत्व्य B.

२ भवन्तीत्यथ Tr.

३ यजेतर्व्यतिक्रमे Tr.

४ पातकोपपातक॰ Tr, पातकोपातक॰ B. The Viv.: पातकोपपातकः महापातकानां एकत्वकलानाम्।

५ Tr B H repeat the last three words.

यथो एतस्मो ऽपरिमितं प्रवसतीति[1] न संवत्सरमति प्रवसतीत्येवेदमुक्तं भवति स उ चेदति प्रवसेत्पवित्रेष्ट्या यजेतेत्येतयेष्ट्या यक्ष्यमाण उपकल्पयते हिरण्यं तस्याः प्रज्ञात उपवसथो ऽथ प्रातर्हुते ऽग्निहोत्रे पुरापां प्रणयनाद्गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वाहवनीये जुहोत्यन्वारब्धे यजमाने येन देवाः पवित्रेणात्मानं पुनते सदा। तेन सहस्रधारेण पावमान्यः पुनन्तु मा स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वाहवनीय एव जुहोति प्राजापत्यं पवित्रं शतोद्यामꣳ हिरण्मयम्। तेन ब्रह्मविदो वयं पूतं ब्रह्म पुनीमहे स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वाहवनीय एव जुहोतीन्द्रः सुनीती सह मा पुनातु सोमः स्वस्त्या वरुणः समीच्या। यमो राजा प्रमृणाभिः पुनातु मां जातवेदा मोर्जयन्त्या पुनातु स्वाहेत्यथ पृष्ठ्याꣳ स्तीर्त्वापः प्रणीयाग्नये पवमानाय पुरोडाशमष्टाकपालं निर्वपति सरस्वत्यै प्रियाया उपाꣳश्वाज्यमग्नये पावकाय पुरोडाशमष्टाकपालं निर्वपति सवित्रे सत्यप्रसवायोपाꣳश्वाज्यमग्नये शुचये पुरोडाशमष्टाकपालं निर्वपति वायवे नियुत्वत उपाꣳश्वाज्यमग्नये व्रतपतये[2] पुरोडाशमष्टाकपालं निर्वपति विष्णवे शिपिविष्टायोपाꣳश्वाज्यमग्नये वैश्वानराय पुरोडाशमष्टाकपालं निर्वपति दधिक्राव्ण उपाꣳश्वा-

---

१ इति not in the MSS., but cp. III. 14 : 85. 2.

२ ॰नव इति Tr

ऽग्निमिति। अर्पयित्वाश्रावयति। तस्याः सप्तदश सामिधेन्यः समिध्यमानां च समिद्धां चान्तरेण पावकवत्यौ धाय्ये दधात्यपामिदं न्ययनं नमस्व इति द्वे[1]। पावकवन्तावेवाज्यभागावग्नी रक्षांसि सेधति शुक्रशोचिरमर्त्यः। शुचिः पावक ईड्य इति पुरोनुवाक्यामनूच्य यत्ते पवित्रमर्चिष्यग्ने विततमन्तरा। ब्रह्म तेन पुनीमह इति यजति। यो धारया पावकया परिप्रस्यन्दते सुतः। इन्दुरश्वो न कृत्विय इति पुरोनुवाक्यामनूच्या कलशेषु धावति पवित्रे परिषिच्यते। उक्थैर्यज्ञेषु वर्धत इति यजत्यथ हविषामग्न आयूंषि पवस्वे ऽग्ने पवस्वेत्यग्नेः पवमानस्योत नः प्रिया प्रियास्विमा जुष्टाना युग्मदिति सरस्वत्याः प्रियायाः अग्ने पावक स नः पावकेति पावकस्य विश्वदेवमा सत्येनेति सवितुः सत्यप्रसवस्याग्निः शुचिव्रततम उदग्ने शुचयस्तवेति शुचेर्वायुरग्रेग वायो शुक्रो अयामि त इति वायोर्नियुत्वतस्त्वमग्ने व्रतपा असि यद्वो वयं प्रमिनाम व्रतानीति व्रतपतेः प्र तत्ते अद्य शिपिविष्ट नाम परि षच्छं भूदिति विष्णोः शिपिविष्टस्य वैश्वानरो न ऊत्या पृष्टो दिवीति वैश्वानरस्य दधिक्राव्णो अकारिषमा दधिक्रा इति दधिक्राव्णो ऽथ ऋतानुमन्त्रणमग्नेः पवमानस्याहं देवयज्यया शुचिः पूतो मेध्यो विपाप्मा ब्रह्मवर्चस्यन्नादो भूयासमग्नेः पावकस्याग्नेः शुचेरग्नेर्व्रतपतेरग्नेर्वैश्वानरस्याहं देवयज्यया शुचिः

१ दाक्षी Tr B.

पूतो मेध्यो विपाप्मा ब्रह्मवर्चस्यन्नादो भूयासमित्युपांशुयाजायामुपांशुयाजवदित्यथ[1] पुरस्तात्स्विष्टकृतः स्रुवाहुतीरुपजुहोति पवमानः सुवर्जन इत्येतेनानुवाकेन प्रत्यृचमतिथिवत्यौ[2] दमूनवत्यौ संयाज्ये जुष्टो दमूना अतिथिर्दुरोण इमं नो यज्ञमुपयाहि विद्वान्। विश्वा अग्ने अभियुजो विहत्य शत्रूयतामाभरा भोजनानि ॥ मर्जाल्यो मृज्यते स्वे दमूनाः कविप्रशस्तो अतिथिः शिवो नः। सहस्रशृङ्गो वृषभस्तदोजा विश्वाꣳ अग्ने सहसा प्रास्यन्यानिति प्रसिद्धमेडान्ताथान्वाहार्यमासाद्य हिरण्यं ददाति समानं कर्मा पत्नीसंयाजेभ्यो ऽथ पुरस्ताद्गृहपतेः स्रुवाहुतीरुपजुहोति यद्देवा देवहेडनमित्येतेनानुवाकेन प्रत्यृचꣳ संतिष्ठत एषेष्टिः सपूर्णपात्रविष्णुक्रमा विसृजते व्रतमेतयैव यजेताभिशस्तो ऽभिशस्यमानो वैतयैव यजेतर्तुव्यतिक्रमे[3] दारव्यतिक्रमे ऽयोनौ वा रेतः सिक्त्वैतयैव यजेत संवत्सरमर्धपादमेकविंशतिरात्रं[4] वा तिर्यग्योनिगताꣳश्चातीञ्जात्यन्तरे[5] वर्तमानान्दुष्कृतेरपहृत्यान्दश पूर्वा-

1 °शुयाजविकारवदित्यथ H U.

2 °मत्यौ U.

3 Thus B U H and Prāy. candr.; Tr. omits the passage.

4 Thus (अर्धपादम्) H and Prāy. candr., °पूर्धपाद° U, सकृत्पाद° Tr B. The meaning acc. to the Vivaraṇa is: द्वौ माषौ।

5 ज्ञातीन् Tr and the Viv. °ज्ञातान् U; B and H. om.

न्दशापरानात्मानं चैकविंशं[1] पङ्क्तिं च पुनाति न[2] च[2] पुनरावर्तत[2] इत्यथाप्युदाहरन्ति

वैश्वानरीं व्रातपतीं पवित्रेष्टिं तथैव च ।

ऋतावृतौ प्रयुञ्जानः पुनाति दशपूरुषमिति[3] ॥ २ ॥

द्वितीयः ॥

अथातो नक्षत्रेष्टीर्व्याख्यास्यामो ऽग्निर्वा अकामयतान्नादो देवानाꣳ स्यामिति ता ब्राह्मणेन[4] व्याख्याताः या या वैशाख्याः पौर्णमास्याः पुरस्तादमावास्या भवति स संवत्सरस्यापभरणीभिः[5] संपद्यते तस्यामारभेतेति तस्या उपवसथे ऽरण्योरग्नीन्समारोह्योदवसाय[6] मथित्वाग्नीन्विहृत्याजस्रान्वापि वा[7] पौर्णमास्याममावास्यायां वोपवसेद्यस्यां[8] तस्या

[1] Thus B U, चिंशति H Tr and Prāy. candr.

[2] These words omitted by Tr as also the following इति; the Prāy. candrikā reads न च पुन॰ ।

[3] Thus (and cp. Baudh. dhś. I. 2. 17, Vas. dhs. XXII. 10) Tr B (the last only ॰पुरुष॰ and U (sec. m.) and Prāy. candr.; पवित्रेष्टिमृतावृतौ । ब्रह्मरेष्टिं प्रकुर्वाणः पुनात्यात्मविंशतिं (or पुनाति वि॰) कुलमिति H and U (pr. m.).

[4] See T Br. III. 1. 4 sqq.

[5] Thus Tr B U (sec. m.) ॰भरण्या H U (pr. m.) Prāy. candr.

[6] ॰रोप्यो॰ B U H Prāy. candr.

[7] Om. U B.

[8] उपवसेद् om. Tr.

संपद्यते । तस्यैषो ऽत्यन्तप्रदेशो । हविरुच्छिष्टमतो[1] यजमानो[2] भवतीति विज्ञायते ऽपि वा जन्मनक्षत्रे कुर्यादायुष्कामस्य[3] यावज्जीवं[3] संवत्सरार्ध्यो वा प्रयोगो । जीववन्तावाज्यभागौ यजत्या नो अग्ने सुकेतुना[4] त्वं सोम महे भगमित्यथ[4] निर्वपत्यग्नये कृत्तिकाभ्यो जुष्टं निर्वपामीत्यग्निं[5] कृत्तिका यजेति संप्रेष्यत्याग्नेयमष्टाकपालमनुमत्यै चरुमिति[6] सर्वत्रानु यजति नक्षत्रहविर्मध्ये । अपयित्वासादयति । तस्याः सप्तदश सामिधेन्यः । समिध्यमानो च समिद्धो चान्तरेण श्रीमत्यौ धाय्ये दधाति स्वाहुता यस्य श्रियो दृशे ऽदाभ्यः पुर एतेति । रयिमन्तौ पुष्टिमन्तावाज्यभागौ[7] यजत्यग्निना रयिमश्नवदुत्थस्थानो अमीवहेत्यथ हविषामग्निर्मूर्धा भुवो ऽनु नो ऽद्यानुमतिरन्विदनुमते त्वमिति संयाज्ययोर्याज्यापुरोनुवाक्या ।

१ ॰मतोपाषो H U

२ Om. Tr.

३ Thus reads Tr; the three other MSS. ॰दायुष्कामस्संवत्सरार्ध्यौ; the manuscript tradition, however, seems to be defective, the Vivaraṇa runs. अपि वा जन्मनि जिजीविषायुष्कामः किं तत्र स्वजन्मनक्षत्रदेवत्या-मिष्टिं यावज्जीवमथ वा संवत्सरार्धे प्रयोगः । जन्मनक्षत्रदेवत्यामिष्टिं जन्मनक्षत्रे चिरायुष्का-मेदायुष्कामोऽत ऊर्ध्वं यथाकाममायुष्कामस्य ।

४ The two mantras are given Sakalapāṭhena in B.

५ इति om. U B H.

६ इति om. Tr B H.

७ पुष्टिमन्तौ om. Tr.

नक्षत्रविधानमग्निर्नः[१] पातु कृत्तिका[२] इति यथासमाम्नातमथ पुरस्तात्स्विष्टकृतः स्रुवाहुतीरुपजुहोत्यग्नये स्वाहा कृत्तिकाभ्यः स्वाहेति यथासमाम्नातꣳ[३]। स्विष्टवत्यौ[४] संयाज्ये हव्यवाहꣳ स्विष्टमिति। संतिष्ठत एषेष्टिः सपूर्णपात्रविष्णुक्रमा। विसृजते व्रतम्॥ ३॥

एवमुत्तरमुत्तरं[५] प्रतितन्त्रमुत्तरउत्तरे[६] ऽहनि यजेत। विशेषान्व्याख्यास्यामः। प्रजापतिः सवितेत्युपांशु सर्पेभ्य आश्रेषाभ्य[७] आज्ये करम्भमिति। सर्वे यवा भवन्त्यधिश्रयण-काले तिरः पवित्रमाज्यमानीयाधिश्रित्य[८] तिरः पवित्रं कर-म्भानानयति[९]। पितृभ्यो मघाभ्यः पुरोडाशꣳ षट्कपालमिति। पैतृयज्ञिकेन निर्वपणप्रोक्षणाधिवपनसंवपनादीनि[१०] व्याख्यातानि भवन्ति। तार्तीयसवनिकेन[११] सौम्येन प्रचरणकल्पो व्याख्यातो।

---

१ •विधानोऽग्नि• H.

२ Tr gives a longer citation of the pratika.

३ Tr. ins. अथ।

४ •कृतौ U H.

५ एवमेवमु• U H.

६ Thus Tr; प्रतितंत्रमु• H U, तंत्रमु• B and the Viv.

७ Thus (•षे•) B and Prāy. candr. as T Br. III. 1. 4. 7; •श्ले• U H Tr.

८ अधिश्रित्य givēn only by Tr.

९ Thus Tr B H and Prāy. pradipa; •अमानयति U.

१० •संवपन• om. Tr; •संवपनादीनि the Viv.

११ •सवनीयेन Tr.

ऽथैतद्वायवे निष्ट्यायै गव्ये दुग्धमिति । अथैतः प्रातर्दोहव-त्संस्कार[१] । आ[१] विशाखाभ्यामिष्ट्वा तदानीमेव पौर्णमासी-माज्येन यजेताथ श्वो भूते मित्रायानुराधेभ्यश्चरुमित्युत्तराभि-रषाढाभिरिष्ट्वा[२] तदानीमेवाभिजिता यजेताथ श्वो भूते विष्णवे श्रोणायै पुरोडाशं त्रिकपालमित्युत्तरेषु प्रोष्ठपदेषु पुरोडाशं भूमिकपालमिति । कपालमात्रं[३] भूमौ परि-लिख्याङ्गारमधिवर्तयति[४] । तस्यैककपालवत्संस्कार[५] । आप-भरणीभिरिष्ट्वा[५] तदानीमेवामावास्यामाज्येन यजेताथ श्वो भूते चन्द्रमसे प्रतीदृश्यायै पुरोडाशं पञ्चदशकपालमित्यभि-नीयैवाह्नि[६] निर्वपेदुदिते चन्द्रमसि प्रचरेन्नैतमहो-रात्राभ्यां चरुं निरवपतां द्वयानां व्रीहीणां शुक्लानां च कृष्णानां च सवात्योर्दुग्धे श्वेतायै च कृष्णायै चेत्यभिनीयैवा-ह्नि[६] निर्वपेदस्तमिते प्रचरेदपि वा सन्ध्यावेव निर्वपेत्सन्ध्यावेव प्रचरेन्निर्वपणन्यायेन[७] प्रचरेदथैतमुषसे चरुमित्यभिनीयैव रात्रौ निर्वपेदुषसि प्रचरेदथैतस्मै नक्षत्राय चरुं निर्वपति । यथा त्वं देवानामस्येवमहं मनुष्याणां भूयासमिति निर्वपण-

---

१ ? Thus Tr B; ॰रोचाचि॰ H, ॰रोचचि॰ U.

२ ॰चानुराधे॰ Tr.

३ ॰मंत्रं Tr.

४ प्रक्षि॰ U H.

५ ? Thus B; ॰रोचापथ॰ U, ॰रोपथ॰ H Tr.

६ हविर् ins. H.

७ निर्वपणन्यायेन प्रचरेत् in Tr only.

काले यजमानायतन आसीनो यजमानो जपत्यभिनीयैवाहनि[1] निर्वपेदुदितेषु नक्षत्रेषु प्रचरेद्यैतꣳ सूर्याय नक्षत्रेभ्यश्चरुमित्यभिनीयैव रात्रौ निर्वपेदुदिते सूर्ये प्रचरेद्यैतमदित्यै चरुमथैतं विष्णवे चरुमिति यजति[2] । यज्ञो वै विष्णुर्यज्ञ एवान्ततः प्रतितिष्ठतीति ब्राह्मणं । वरो[3] दक्षिणा भवतीति[3] विज्ञायतेऽपापावद्धा[4] । प्रष्ठिद्धः पष्ठः । पापिष्ठत्येष्वेष्टा दर्शपूर्णमासाभ्यां यजेत नक्षत्रसत्रेण धृतिरामन्नाय । [5]ज्योतिषामयनेनेष्ट्वा पापं निर्णुद्य[6] ज्योतिष्टमुपजायतेऽप पुनर्मृत्युं जयतीति ह[7] स्माह[7] बौधायनः । ॥ ४ ॥

तृतीयः ॥

नवैरेवामावास्यायां[8] पौर्णमास्यां[8] वा यजेत नवैर्वाग्नि-

१ हविर् ins. H.

२ Om. Tr.

३ वरा दक्षिणा भवन्तीति Tr.

४ Thus (and cp. the Journal of the German Oriental Society, Vol. LVII, p. 742) U Tr, पाद्यावद्धा B, पावद्धा H. The Vivarana runs: अपापावद्धा दक्षिणा इति शेषः । यथा अपापाद्ध भूयन्ते दक्षिणाः तावन्तिरि षष्ठौही वराम्बद्धाम्बꣳवं च क्रिये चाभारꣳ सम्बद्धा इति (cp TBr. III. 12. 4. 7).

५ Tr ins ज्योतिषा ।

६ निर्णुद्य Tr.

७ Om. B.

८ Thus Tr H and the Viv.; °मावास्यां पौर्णमासीं वा U, नवैरेव पौर्णमासीममावास्यां वा B; the accus. instead of the locat. also Āp. VI. 30. 13.

होत्रं[१] जुहुयाद॑पि वाग्निहोत्रीं वा[१] नवान्नादयित्वा[२] तस्याः पयसा जुहुयाद॑पि[३] वा[३] नवानां[३] यवाग्वा[३] सायंप्रातरग्निहोत्रं जुहुयाद॑पि वा गार्हपत्ये चतुःशरावमोदनꣳ श्रपयित्वाग्रयण-देवताभ्यः स्विष्टकृच्चतुर्थीभ्यो[४] जुहुयाद॑पि वा नवैरेव ब्राह्मणा-न्भोजयेत्स[५] एष[५] दृब्ध्युपचारकल्पो[६] हरितयवशमीधान्यौषधि-वनस्पतिमूलफलशाकानामनिष्ट्वाग्रयणं[७] यथाकामी[८] स्यात्पङ्क्ति-वैषम्याद्व्रीहिभिरिष्ट्वा[९] व्रीहिभिरेव[१०] यजेत यवेभ्यो यवैरिष्ट्वा यवैरेव[१०] यजेत व्रीहिभ्यो ऽपि वा व्रीहिभिरेव[११] यवैर्वा यजेत संतिष्ठन्त आग्रयणानि ॥ ५ ॥ चतुर्थः ॥

१ Thus H U and the Viv.; नवैरेवा॰ B Tr.

२ Thus U and the Viv., वा नवानदयि॰ Tr, वावानादयि॰ H, वैनानादयि॰ B.

३ Om. Tr; cp. Āp. l. c. 15.

४ Thus (as gṛhyasutra and Hir. Śrs. III. 8. 23) Tr B. ॰चर्थ्यो (as Āp. l. c. 16,) H U.

५ Thus U and the Viv., ॰स एवैष Tr, H B om. स।

६ Thus Tr; दृब्ध्युपचार॰ B U, दृब्ध्युपचारि॰ H.

७ ॰श्यिंबी॰ instead of ॰शमी॰ H; ॰फलमूल॰ instead of ॰मूलफल॰ U; ॰निष्ट्वापि instead of ॰निष्ट्वाग्रयणं (thus B U H and Viv.) Tr.

८ Thus B H, यथा॰ Tr U Viv.

९ Thus U and the Viv.; स्यात्पङ्क्ति॰ B, स्यानात्पङ्क्ति॰ H, स्यात्सान् पङ्क्ति॰ Tr.

१० एव om. Tr.

११ एव om B U

अथातः पशुप्रायश्चित्तानि व्याख्यास्यामः। स यदि पशुरुपाकृतो वाश्येत यद्स्य पारे रजस इत्येताꣳ हुत्वा नैमित्तिकीं[1] द्वितीयां जुहोति यस्माद्भीषावाशिष्ठास्ततो नो अभयं कृधि। प्रजाभ्यः सर्वाभ्यो मृड नमो रुद्राय मीढुषे स्वाहेति[2]। यस्माद्भीषावेपिष्ठाः पलायिष्ठाः समज्ञास्थाः अहदुरया सूचमकथा इत्येतेषु[3] निमित्तेषु य इदमकस्तस्मै नमस्तस्मै स्वाहेति तृतीयाꣳ। स यदि निषीदेद्यस्माद्भीषा न्यषद इत्येताꣳ हुत्वा तं मैत्रावरुणदण्डेनोत्थापयेदन्येनौदुम्बरेण वोर्ग्वा उदुम्बर ऊर्जं पशव ऊर्जैवास्मा ऊर्जं पशूनवरुन्द्ध इति ब्राह्मणमुदस्य तिष्ठेत्युदमुदस्येत्यमद्दुच्छागेति छागमुन्मेषेति मेषमुद्दश इति वशां। स उ चेत्प्राक् पर्यग्निकरणाच्म्रियेत याश्वमेधे प्रायश्चित्तिस्तां कृत्वाथान्यं[4] तद्देवत्यं[5] तद्वर्णं[6] तद्वयसं[6] तद्रूपं तज्जातीयं पशुमालभेत। तस्योपाकरणादि सर्वमावर्तते निर्मन्थ्य सामिधेनीतन्त्रेणाघारसंप्रैषसंमार्गप्रवरप्रयाजवर्जमथ[7] यदि तज्जातीयं न विन्देताजावयो[8] गोऽश्वा इत्यन्योन्यस्य प्रति-

---

१ °त्तिकां H U.

२ इति only in U (sec. m.)

३ Thus U (pr. m.) इत्येषु B, इत्येवमेतेषु Tr, इत्येवमेदेषु H.

४ Thus (and cp. XVIII. 11 : 355. 15.) Tr B; H U om. कथा।

५ तद्दे° Tr and the Viv.

६ तद्रूपवं तद्रूपं H U.

७ °सामिधेनित° Tr, °सामिधेनीत° H U.

८ Thus Tr, °ताजोनयो H U, °ताजावि B.

निधयो भवन्तीति[1] । तेषां छागस्य[2] मेषस्योपाकरणीयावालभे[2] ऽन्यतममालभेत[2] । त्वाष्ट्रेण प्रवरणकल्पो व्याख्यातो[3] । ऽथास्य[3] शरीरमप्सु प्रवेशयति न वा उभे तस्मिन्नियच्छ आशानां त्वा विश्वा आशा इति द्वाभ्याम् । ॥ ६ ॥

अथ यद्यङ्गहीनः पशू रूपतो वर्णतो वाग्नेयीमाग्नावैष्णवीमैन्द्रीं वायव्यां प्राजापत्यामिति च हुत्वा तमेवोपाकुर्यादथ यदि वपामाह्रियमाणाᳪं श्येनो ऽपहरेदश्येद्वा[4] पाश्चाᳪं हिरण्यमन्तर्धाय[5] चतुर्गृहीतं[5] गृहीत्वाहवनीये जुहोत्यन्वारब्धे यजमान उद्यन्सुपर्णो[6] न विभाति सर्वᳪं हिरण्यकुक्षिः सप्तशिराः पुरस्तात्। सर्वेषु लोकेषु विभुः प्रतिष्ठो गातुमस्मिन्यज्ञे यजमानाय विन्द[7] स्वाहेत्यथैतस्यै[7] वपायै स्थाने यत्किंचिन्मेदोरूपमवशिष्टᳪं स्यात्तदुत्पाद्य[8] तेन प्रचरे-

---

१ भवंति B U H.

२ Partly conjectural reading; छागस्य मेषस्येदुपाकरणीयावुपाकरणीयावमन्यतम° U, छागस्येदुपाकरणीया उपाकरणीयानामन्यतम° H, छागं च मेषं चोपाकरणीयावावालभेदन्यतम° Tr, छागमस्य मेषस्योपाकरणीयावथालभेदन्यतम° B. The Viv. तेषां छागस्य मेषस्योपाकरणीयाविति।

३ U ins. after आख्य : षट्तयमभिविदध्मंपति, H ins. before आख्य : (व्याख्यात)रेथास्य षट्तयमभिविदध्मंपति (cp. IX. 19 : 296. 3).

४ Thus B Tr U ; H corrupt.

५ Om. Tr.

६ उद्यंस्तु° H, उद्यन्सु° U Tr, उद्गुत्सु° B.

७ Thus Tr, विंदस्वा° B H U.

८ Thus B, °दुत्थाय Tr U H.

दंष यद्येनां पुनर्विन्देत नैनामाद्रियेताथ यदि वपा हविरवदानं वा स्कन्देदा त्वा ददे यशसे वीर्याय चास्मास्वग्निया यूयं दधाथेन्द्रियं पय इत्यादाय जुहोति यस्ते द्रप्सो यस्त उदर्षो दैव्यः केतुर्विश्वं भुवनमाविवेश । स नः पाहि रिष्टै स्वाहेत्यथ यद्यसंस्थिते पशौ शकुनिश्चषाल उपविशेच्चषालं प्रक्षाल्य यूपं प्रोक्ष्य तथैवाज्येन जुहोत्यापवस्व वदस्व[1] वा[1] सोमपीतये गातुमस्मिन्यज्ञे यजमानाय विन्द[2] स्वाहेति[2] ।

॥ ७ ॥ पञ्चमः ॥

अथातश्चातुर्मास्यान्तरालव्रतानि व्याख्यास्यामस्तस्यैतद्व्रतं[3] । नानृतं वदति । न मांसमश्नाति । न स्त्रियमुपैति । नास्य[4] पल्पूलनेन वासः पल्पूलयन्त्यन्नमयपाय्यशूद्रोच्छिष्टो । स्वयं पादौ प्रक्षालयते[4] । न लवणमश्नाति । न कौशीधान्यमन्यत्र[5] तिलेभ्यो । नासन्द्यां शयीत । न स्त्रियमुपेयात्काममृतौ जायामुपेयाद्यद्यजातपुत्रः स्यादुभयोः कालयोर्मधुपूर्वं व्रत-

१ ? Thus U, वदस्व H, वदधुवा B, वदस्वधुवा Tr.

२ Thus Tr again, विंदस्वा॰ B U H, विदास्वा॰ Prāy. candr.

३ Thus B : व्याख्यास्यामो व्रतं चरेदिति तस्यैतद्व्रतं Tr ; after व्याख्यास्यामः H and U have a passage which seems to be interpolated (from XXI. 1. : 69. 2, 3) : नान्यत्र (these two words only in H) चायज्ञीयप्रयोगेत्येवं चातुर्मास्यानाम(न)न्तरालव्रतानि प्रथमे त्वेव संवत्सरे व्रतं चरेदिति ।

४...४ om. Tr.

५ Thus (and cp. II. 20 : 67. 1) B. कोशी॰ H U Prāy. candr. कौशि॰ Tr.

मुपैति। मध्वश्नातीति ब्राह्मणं[1]। घृतमित्येवेदमुक्तं[1] भवति[1]। दैव्यं मध्विति। विज्ञायते ऽश्नन्ति त्वामध्वरे देवयन्तो वन-स्पते मधुना दैव्येनेति। नान्यस्योच्छिष्टं भुञ्जीत। नान्यस्या-र्त्विज्यं कुर्वीत। नाञ्जीत। नाभ्यञ्जीत। न श्राद्धं[2] भुञ्जीत। न लोमानि वापयीत[3]। न दतो धावते[4]। न नखानि निकृन्तते[4]। कामं पर्वसु[5] केशश्मश्रुलोमनखानि[6] वापयीत। चतुर्षुचतुर्षु मासेषु निवर्तयेतेति ब्राह्मणम्[9]। संवत्सरादूर्ध्वं दार्शपौर्णमासिकमेव[7] व्रतमुपदिशन्ति तस्य चेद्वैश्वदेवस्य कालो[8] नातीयाद्यद्यतीयादग्नये[8] व्रतपतये पुरोडाशमष्टाकपालं निर्व-पति[9]। सा प्रसिद्धेष्टिः संतिष्ठत आमावास्यकालादिति[10] व्याख्याताः। कालातिक्रमेष्वापदि[11] यजेत। ॥ ८ ॥ षष्ठः ॥

---

१ Thus Tr B; ०र्वं वेदमुक्तं भवति घृतमित्येतद्वै H, ० वं चैवेदमुक्तं भवति घृतमित्येतद्वै U; on this passage cp. Rudr. on Āp. VIII. 4. 11.

२ श्राद्धानि Tr.

३ Thus U H. वापयते B, छिन्दीत Tr.

४ Thus MSS., we expect the optat.

५ पर्वणि Tr.

६ लोमनखानि om. Tr.

७ दार्शपूर्वमासिकं Tr.

८ Thus is the reading of U sec. m. U (pr. m) B and Tr. om. the words यद्यतीयात् and B has कालोतीयाद् instead of कालोनाती०।

९ वरावं दक्षिणां ददाति U ins. on the margin.

१० ०स्यस्य कालादिति Tr.

११ Thus also the Vivaraṇa, काला चतिक्रम० H. (rightly ?).

अथातोऽध्वरदीक्षाप्रायश्चित्तानि व्याख्यास्यामो । दीक्षितश्चेदनृतं वदेदिमं मे वरुण तत्त्वा यामि त्वं नो अग्ने स त्वं नो अग्न इति चतस्रो वारुणीर्जपेत्कृष्णाजिनाद्वा विच्छिन्नो दण्डाद्वा देवाञ्जनमगन्यज्ञस्ततो मा यज्ञस्याशीरवतु। वर्धतां भूतिर्दध्ना[1] घृतेन मुञ्चतु यज्ञो यज्ञपतिमंहस इति जपेद् । मेध्यममिष्टं वा दृष्ट्वा जपतीत्युक्तमेतद् । अभिवृष्टोऽभिवृष्यमाणो वा[2] जपतीत्युक्तमेतद् । धूतयित्वाप आचम्य जपति शिवाः पीता भवथ यूयमापोऽस्माकं योनावुदरे सुशेवाः। इरावतीरनमीवा अनागसः स्वस्ति नो भवथं जीवस इति । छर्दयित्वा निष्ठीव्य वा जपति यच्चापि रपस्य मे निरष्ठविषमस्तृतः[3]। अग्निष्टोमः पृथिवी पुनरात्मन्दधातु म इति । रेत स्कन्नमनुमन्त्रयते यन्मे रेतः परीतोपास्तदर्पिंथ[4]। अग्निषोमनिव[4] सोमेन तदहं पुनरादद इति । मूत्रं करिष्यन्पुरीषं वा पृथिव्या[5] लोष्टमादत्त इयं ते यज्ञिया तनूरिति । करोत्यपो मुञ्चामि न

१ दध्ना om. H.

२ om Tr.

३ निरष्ठविषव् B U H and the Prāy. candrikā, निरष्ठीविषव् Tr and a prayoga of the collection Burnell;—चक्रुमः or चक्रुम Tr B H and the same prayoga, चक्रुम B and the Prāy. candrikā.

४ परीतो° Tr B, परितो° U H Prāy. candrikā—°पिंथ चग्नि° Tr, पिंथा । चग्नि° prayoga Burnell, °पिंचेग्नि° H, °पिंचाग्नि° U. °पिंताग्नि° B, cp. Āp. X. 18. 10.

५ पृथिव्यां Tr U.

प्रजामस्मँहोमुचः स्वाहाकृताः पृथिवीमाविशतेति । लोष्टं प्रतिनिदधाति पृथिव्याः संभवेति । बीभत्सा नाम[१] स्थापः[१] स्वाहाकृताः पृथिवीमाविशतेत्यप्सु[२] । कपाल्या[३] नाम स्थापः स्वाहाकृताः पृथिवीमाविशतेति तूषान्[४] । तपस्या नाम स्थापः स्वाहाकृताः पृथिवीमाविशतेति स्वेदं । दुःस्वप्नं दृष्ट्वा जपत्यभिपर्यावर्तते[५] दुःस्वप्न पापस्वप्नादभूत्यै[६] । ब्रह्माहमन्तरं करवे न हि स्वप्नमुपपद्य[७] इति । स्वप्ने ऽन्नं भुक्त्वा जपति यदन्नमद्यते नक्तं न तत्प्रातः क्षुधो ऽवति । सर्वं तदस्मान्मा हिंसीन्न हि तद्ददृशे दिवेति । लोहितमुत्पतितं दृष्ट्वा कण्डूय[८] वा जपति नमो रुद्रियाभ्यो ऽद्भ्यः स्वाहेति । न वर्षति धावेद्यदि धावेन्नमो रुद्राय[९] वास्तोष्पतय[९] इत्येतामृचं जपेन्नान्येन दीक्षितेन समेयाद्यदि समेयात्कया नश्चित्र आभुवदित्येतामृचं जपेदेव-

१ Thus (and cp. Āp. X. 14. 1) Tr, नामाप स्थ: H U Viv. and Prāy. candrikā ; B om. this passage.

२ Thus the prayoga Burnell ; °प्सो Tr, °प्सुपारे U ; H totally corrupt and B defective.

३ Thus Tr, Viv. and prayoga Burnell ; कपे कितेते कपल्या U.

४ Thus the prayoga Burnell, चोरं Tr, केशं B and Viv, स्नाना H.

५ Thus MSS., read with Āv. VII. 100 जपति पर्यावर्तं ।

६ The original reading of Baudh. is difficult to restore. °प्नादभूत्यै B, °प्नोमुच्यै Tr, °प्नोपमुञ्चे U Prāy. candr. °प्नपमुञ्चे H.

७ Thus B U Tr and Prāy. candr., °प्रप H.

८ Thus MSS.

९ वास्तवे Tr.

यजमानादन्यथाभ्युदितो ऽभिनिम्रुक्तो वा सूर्यो मा देवो देवेभ्यः पात्विति जपेदितीष्वा[1] इमानि[1] सर्वास्वेवाध्वरदीक्षासु प्रायश्चित्तानि भवन्तीति[2] बौधायन। आवान्तरदीक्षायै विसर्गादिति शालीकिः। ॥ ९ ॥ सप्तमः ॥

अथातः सर्वयज्ञानां प्रायश्चित्तानि व्याख्यास्यामः। सर्वत्र [3] स्कन्नच्छिन्नभिन्नभग्ननष्टदुष्टविपरीतहीनेषु[3] [4]हविःस्कन्नास्रावितपतितस्फुटितेष्वद्विजश्वानबिडालकाकखरमृगपशुपक्षिसरीसृपादीनामन्यत्कीटानाम्त्विजो[5] ऽग्नीनामन्तरागतानां[5] द्वादशगृहीतेन[5] स्रुचं पूरयित्वा दुर्गां[6] मनस्वतीं[6] मघा-

---

[1] Thus Tr (reading only °ष्वा). जपेदितीमानि B U H.

[2] च स्मात ins. H U.

[3] Thus the Prayāscittapradipa, and H and the Viv., the last two omitting, however, °छिन्न°; स्कन्नेच्छिन्नेभिन्ने भग्ने° B U, स्कन्नेभिन्नेच्छिन्नेभग्न° Tr; °हीन B.

[4] हविःस्कंदना° B, हविःस्कंदता° H, हविःस्यन्दना° Tr, हविर्विस्कंदन° U.

[5] One of the most difficult passages! स्फुतिवेष्वविर्द्विज° U, स्फुतितेषुद्विज B U, °स्फुदितादिज° Tr. The Viv. reads °चद्विज° (द्विजातिरेखाः पक्षादयः) - श्वानवि (or वि)डाल° all, but the Viv. °श्वानोविडाल° explaining श्वनः मकडम्; this points to चद्विजश्वानोविडाल° - Before खर H U have मूक° - °सरोसृपादि H U and the Viv., सरीसृपादि° Tr, सरीसृपादीनाम् B. - चन्यत्कीटानाम् the Viv, चन्यत्कीटो B, चन्यत्कीटानाम् H U. - ग्नीनामंतरागतानांद्वा° U (sec. m.), ग्नीमंतरागतानांद्वा° H U (pr. m.) ग्नीनामंतरागच्छद्वा° B Tr, ग्नीनामंतरागच्छद्वा° Viv. - Read perhaps instead of चन्तागतानाम्: चन्तरागमने। In the Gṛhyasūtra (IV, 8) this passage also is to be found equally corrupt.

[6] Thus Tr, दुर्गामनस्वतीं B U H.

व्याहृतीस्तिस्रो जुहुयाज्जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः । स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः स्वाहेति[1] । कार्यविपर्यासे च[2] मन्त्रब्राह्मणमात्रं[3] दर्भश्चाबर्हिःपरिधिविधृतिपवित्रहविःकपालस्रुक्स्रुवारणिकृष्णाजिनंप्रणीताभ्युदासनेन[4] यत्किंचित्कार्यविपर्यासः स्याद्ये चान्ये चाज्यस्थाल्याः स्रुवेणोपघातं प्रायश्चित्तानि जुहोति प्रजापतये स्वाहा हिरण्यगर्भाय स्वाहेत्यथ पितामहं जुहोति भृगूणां पतये स्वाहाङ्गिरसां तपसे स्वाहेत्यथ महाव्याहृतीर्जुहोति भूरग्नये च पृथिव्यै च मंहते च स्वाहा भुवो वायवे चान्तरिक्षाय च महते च स्वाहा सुवरादित्याय च दिवे च महते च स्वाहा भूर्भुवः सुवश्चन्द्रमसे च नक्षत्रेभ्यश्च दिग्भ्यश्च महते च स्वाहेत्यथ व्याहृतीर्जुहोति भूः स्वाहा भुवः स्वाहा सुवः स्वाहा भूर्भुवः सुवः स्वाहेति । ॥ १० ॥

॥ अष्टमः ॥

मन्त्रहीने ऽतिरिक्ते वा दुरधीते दुरागते ।
अनागते ऽवषट्कारे[5] अतीते[6] वापि[7] यद्धुते[8] ॥

१ दुर्गा ins. B.
२ च found in H Tr and the Vivaraṇa.
३ Thus B, °मात्र Tr, °मंत्रभेदे च U. °मात्रोभेदे च H.
४ This whole passage is incomprehensible to me. बर्हिः om. B K. – °कपालमात्रसु° H U – °वरणी° B K U – प्रणीतानामभ्युदासनादि H U.
५ °ट्कृते H.
६ Thus Tr, ऽतीते H U, चातीते B.
७ चापि Tr, B.
८ ? °ते B Tr, °तं H U.

हविषः[1]॰स्कन्दनादग्नेर्होतुर्हीनस्वरेण[2] च ।
अतिदाहे च हविषां यत्किंचित्पात्रभेदने ॥
कपालनाशे भेदे च चतुष्पाद्यन्तरागते[3] ।
प्रणाशे च पवित्रस्य[4] आज्यस्यैवावलोडने[4] ॥
हविषां च विपर्यासे ऋत्विक्ष्वप्रयतेषु च ।
यज्ञप्रसारणीकाले[5] द्वैधीभावे समुत्थिते ॥
मिन्दाहुती च होतव्ये व्याहृत्यः प्रणवादिकाः ।
वारुण्यस्तन्तुमत्यश्चाग्निश्च[6] मनस्वती ॥
महाव्याहृतयः सप्त प्राजापत्या तथैव च ।
प्रसंधानाय यज्ञस्य[7] स्वेते[7] मन्त्राः प्रकीर्तिताः ॥
अप्रायश्चित्तिको यज्ञो ह्यसुरैः संप्रभुज्यते ।
असुरैर्भुक्तयज्ञस्तु[8] देवान्दोषेण[9] संश्रयेत् ॥

१ Thus Tr and the Viv. हविषाऽ U, हविषां B, हवि H.

२ चोक्त॰ Viv.

३ Thus Tr B and the Viv., ॰ष्पाद्यंतरागतौ U, ॰ष्पाद्यांतरागतौ H.

४ Thus U, ॰वस्याज्य॰ Tr H, ॰वस्यचाज्य B.

५ ? Thus U H, प्रसारणा॰ Tr, प्रासारणा॰ B; प्रसारणिकाले यज्ञप्रसारिणि (sic) यज्ञविस्तारः the Vivarana.

६ Thus Tr H T U, ॰मत्यश्चाश्चा॰ B.

७ Thus Tr, यज्ञस्यैवे U (pr. m.) and H, स्येवंवे U (sec. m.). स्वतन्ते B.

८ Thus H U B, ॰यज्ञस्य Tr.

९ Thus Tr B, यज्ञेन U, दयज्ञन H.

ऋत्विजो यजमानं[१] च[२] आयुषो[२] ब्रह्मवर्चसात्[३]।
प्रच्यावयेयुरिष्टं तस्मात्तेषामप्रच्यावयेदिति[४]॥

॥ ११ ॥ नवमः ॥

अथातो ऽनुपदाव्याख्यास्यामः[५]। सायꣳहोमं चोपोदयं[६] जुहुयात्प्रातर्होमं चोपास्तमयं[६] कालेन कालमनतिक्रम्य। कालो[७] दर्शपूर्णमासयोरग्निहोत्रस्य च न[८] स्कन्दते[८] न व्यथत इति[९] विज्ञायत। आ प्रातराहुतिकालात्सायमाहुतिकालो नातीयादा सायमाहुतिकालात्प्रातराहुतिकालो। ऽथ यदि सायꣳ सायं दोषा वस्तोर्नमः[१०] स्वाहेत्याहुतिꣳ हुत्वाग्निहोत्रं जुहुयाद्यदि प्रातः प्रातर्दोषा वस्तोर्नमः[१०] स्वाहेत्याहुतिꣳ हुत्वाग्निहोत्रं जुहुयादथ यदि पूर्वस्यामाहुत्याꣳ हुताया-

---

१ Thus B K U (pr. m.), ऽमानच Tr, मानं वा U (sec. m.)

२ आयुषो Tr.

३ ०वर्चसः Tr.

४ Thus H U; ततस्मा० B, तुतस्मा० Tr—The last words repeated in B Tr.

५ Thus Tr B and the Viv., गुरुव्याख्या० H U.

६ Thus U H, वो० B Tr and the Viv.

७ Thus H; कालो U, कालेन B कालेन च Tr.

८ Thus H U, नस्कंदते B, स्कंदे Tr; ०होत्रस्य च स्कंदनं व्यथते Viv., cp. the citation of Bhāradvāja in Rudradatta's comm. on Āp IX. 7. 3.

९ च ins, H U.

१० वस्तोर्वा U and Prāy. candrikā.

माहवनीयो ऽनुगच्छेदग्निर्दारौ दारावग्निरिति वदञ्छकले[1] हिरण्यं निधायोत्तरामाहुतिं जुहुयात्कालातिक्रमेष्वापद्धोमः[2] । आमावास्यस्य[2] कालात्पौर्णमासस्य कालो नातीयादा पौर्णमासादामावास्यस्य । व्रीह्याग्रयणस्य कालाच्छ्यामाकाग्रयणस्य कालो नातीयादा यवाग्रयणस्य[3] कालाद्व्रीह्याग्रयणस्या[3] श्यामाकाग्रयणाद्यवाग्रयणस्य ।[4] वरुणप्रघासानां कालाद्वैश्वदेवस्य कालो नातीयादा साकमेधेभ्यो[5] वरुणप्रघासानामा शुनासीर्यात्साकमेधानामा वैश्वदेवाच्छुनासीर्यस्य । दक्षिणायनपक्षोः कालादुत्तरायणपक्षोः कालो नातीयादोत्तरायणपक्षोर्दक्षिणायनपक्षोरौत्तरवसन्तज्योतिष्टोमस्य[6] कालात्पूर्ववसन्तज्योतिष्टोमस्य[7] कालो नातीयात्समस्तस्य संवत्सरस्या[8] निज्यासुत्या[8] । च्यवयो ह स्म तत्प्रयोयुगा[9] आसङ्गस्ते ऽर्धमासायार्धमासायाग्निहोत्रमजुहवुः[10] । प्रतिपदि सायं चतुर्दशगृहीतानि गृह्णाति ।

---

१ Thus U, वदञ्छ॰ Tr, वदेच्छ॰ B H.

२ Thus Tr, ॰द्धोममामा॰ U, द्धोमामा॰ B U.

३ Thus Tr, ॰यणस्याद्व्रीह्याग्र॰ B H, ॰यणस्यकालाद्व्रीह्याग्र॰ U.

४ श्यामाकाग्रयणा॰ Tr.

५ Thus U, ॰सानां H B, ॰सानां कालाद्वै॰ Tr.

६ Thus Tr, ॰पक्षोरुत्तरवसंत॰ B U.

७ Thus Tr, ॰त्पूर्ववसंतज्यो॰ B, ॰त्पूर्ववसंतज्यो॰ U.

८ ? Thus Tr U, ॰त्सरस्य चानी॰ B; H om. this passage.

९ तत्प्रयोयुगा Tr. प्रयोगा H and the Viv. (pr. m.) तत्प्रयोगा B, प्रयोग U. प्रयोयुगा Viv. (sec. m.) which explains चतिप्रवीन प्रयोगविदः ।

१० Thus Tr B, र्धमासेर्धमासेग्नि॰ H U – ॰त्रमजुहवुः Tr, ॰त्रंजुहवुः U H, ॰त्रंजुहुवुः B; on this passage cp. Hir. pi. sū. II. 9 : 56, 11.

सकृदुन्नयते हविरेका[1] समित्सकृद्धोमः[1] सकृदुपस्थानꣳ । सकृत्पाणिनिमार्जनमेवं प्रातः । अथ षण्मासानकृते ऽग्निहोत्रे दर्शपूर्णमासाभ्यामनिष्ट्वाग्रयणैश्चातुर्मास्यैः पशुबन्धेन चाग्नये पथिकृते ऽग्नये तन्तुमते ऽग्नये वैश्वानरायाग्नये व्रतपतय इति[2] पुरोडाशान्निरुप्याग्निहोत्रꣳ हुत्वा[3] दर्शपूर्णमासाभ्यामिष्ट्वाग्रयणैश्चातुर्मास्यैः[4] पशुबन्धेन चाथ संवत्सरमकृते ऽग्निहोत्रे दर्शपूर्णमासाभ्यामनिष्ट्वाग्रयणैश्चातुर्मास्यैः पशुबन्धेन चाग्नये पवमानायाग्नये पावकायाग्नये शुचये ऽग्नये पथिकृते ऽग्नये तन्तुमते ऽग्नये वैश्वानरायाग्नये व्रतपतय इति पुरोडाशान्निरुप्याग्निहोत्रꣳ हुत्वा[1] दर्शपूर्णमासाभ्यामिष्ट्वाग्रयणैश्चातुर्मास्यैः पशुबन्धेन च । ॥ १२ ॥

अथ हविषामर्थे । व्रीहियवौ । तयोरलाभे[5] प्रियङ्गवः कोद्रवोदारवरकवर्जꣳ[6] श्यामाकनीवारवेणुयवास्तरसंपाककन्दमूलफलान्यापः[7] सक्तुमिति[8] । घृतमाज्यार्थे । गव्यमिति प्रत्यय-

१ Thus Tr B, °एकाꣳ समिधꣳस° U H.

२ B U H put व्रतपतये before वैश्वानराय ।

३ Tr ins. अग्निहोत्रं जुहुयात् ।

४ °मास्यैश्च Tr.

५ Thus B Tr, the Viv. and the Prāy. candr.; °रभावे H U.

६ ? Thus Tr H U, °कोद्दारक° B; °कोदारकमाषवर्जं the Prāy. dipikā.

७ Uncertain reading; °संपाटकंदक° Tr. °संपाकंदक° B U, °संपाकेंदक° H, °सकंदक° Prāy. pradipa.

८ Thus H U, सक्तमिति B °सक्तूमिति Tr.

तस्यालाभे माहिषमाजं वा घृतमाज्यार्थे प्रयुञ्जीत[1] भोजने-
ष्वविरुद्धं मन्यन्त[2] एके तयोरलाभे तैलं प्रतिनिधिस्तस्या-
लाभे जर्तिलतैलमतसीकुसुम्भसर्षपवार्चेलं वा[3] इति[2] शिष्ट-
प्रामाण्यादेतदूर्ध्वमलाभे यवपिष्टानि व्रीहिपिष्टानि श्यामा-
कपिष्टानि वाद्भिः संसृज्याज्यार्थे प्रयुञ्जीत कुशाः स्तर-
णार्थे[4] तेषामलाभे शरमयकुशपाश्वबल्बजमुञ्जसुगन्धितेजना-
र्जुनाह्वारदूर्वाश्यामाकाः[5] क्षीरवृक्षा इक्षव इत्येतेभ्यः प्रस्तर-
बर्हिर्विधृतिपवित्रयूपरशनाशालाकपरिस्तरणार्थानामन्यतम-
स्तोमोपाकरणार्थाः कार्याः सर्वतृणेभ्यो वा शुष्कशृङ्गखण्डितमल-
वल्वजकण्टकतृणवर्जं[6] पालाशः खादिरो वैल्वस्तयोरलाभे
याज्ञिकानां वा[7] वृक्षाणामन्यतमस्तेषामलाभेऽरलुकपित्थको-
विदारशल्मलिश्लेष्मातकनीपनिम्बतिलकबाधकविभीतकराजवृ-

---

१ Thus B U, प्रयुञ्जते Tr., H. omits the passage.

२ B U ins. इति।

३ Emended; ०वार्चवेलाशिष्ट० Tr, ०वार्चावावेलाच्चेह० B, वार्चवावेला इति शिष्ट० H U.

४ णारणा० H U.

५ शरमय० Tr, शरमय० U, शरमयः H U — ०र्जुनाह्वार० Tr, ०र्जुनाह्वारा० B U, र्जुनमरा H.

६ Thus Tr (reading only शुष्कं instead of शुष्क); शुष्क० H U, ०शीर्णविल्वकण्ट० B; ०शुष्कमवलकण्ट० H, ०शुष्कमवलवन० U. Sāyaṇa (citing in his bhāṣya on the darśapūrṇamāsa) gives शुष्कं instead of शुष्क०।

७ Om. by Sāyaṇa in his citation.

चकरञ्जपलाण्डुवर्ज्य[1] । सर्ववनस्पतीनामिध्मो भवतीत्येके[2] । हविषाणां काले गौर्हिरण्यं वा तस्तेषामलाभे फलानां मूलानां भक्ष्याणां[3] दद्यान्नत्वेव न यजेत ।

नित्यं[4] नित्येषु युक्तः स्यात्तथैवाजस्रिकेषु च ।
यस्य नित्यानि लुप्तानि[5] तथैवाजस्रिकाणि च ॥
विपश्चतो[6] न स[7] स्वर्गं गच्छते पतितो हि सः ।
तस्मान्मूलैः फलैर्वापि[8] मधुना तरसेन[9] वा[9] ।
नित्यं नित्यानि कुर्वीत न च नित्यानि लोपयेत् ॥

न च नित्यानि लोपयेदिति ॥ १६ ॥ दशमः ॥

॥ इत्यष्टाविंशः प्रश्नः ॥

१ Thus Tr and B (B reading, however, ०मल्लकौ० and ०पर्णार्जुन instead of ०पलाण्डु० : both have ०वाभीतक० instead of ०बाधक०). Sāy. in a citation agrees with the above given reading, putting only करञ्ज between कपित्थ and कोविदार; U reads: नौपनिंबतिल्वकबाधकविभीतकराजवृक्षश्लेष्मातकशिरसं (sec. m. करव करंजकपित्थकोविदारश्लेष्मातकपलांडु (sec. m. पर्णार्जुन) वर्जं; H: नीपनिंबबिल्वाकबाभीतकविभीतकराजवृक्षश्लेष्मातककपित्थकरंजककोविदारश्लेष्मातकपलाण्डुवर्जं ।

२ After एके the MSS. exc. Tr and the Viv. ins. यद्यपि ।

३ Thus H U, भक्ष्याणां B, भक्ष्याणां Tr.

४ Thus B U and Viv.; नित्या Tr, नित्यं H

५ लुप्तानि Tr.

६ Thus Tr B and Viv.; विपर्यस्ता U H.

७ सः U च Tr.

८ Thus U H and Viv.; मूलपर्वैः Tr B.

९ Thus B and Viv. तरसाणि वा Tr U H.

अथाभिदग्धानि[1] सदोहविर्धानानि समस्तदेवयजनमावृ-
तेव[2] क्रियेरन्ननावृता[3] वा[4] वसतीवरीः प्रथमं गृह्णीयादिति[5]
वाधूलकस्य मतमथेतरासामानुपूर्वमित्यथ[6] यदि [7]भिन्नेषु कपा-
लेषु सर्वाणि[8] निपतेयुस्तत्र यावत्स्रुतं[9] पुरीषमादाय वसती-
वरीभिः संयुत्य[10] विस्राव्य प्रचरेत्तत्र प्रायश्चित्तं ग्रहाणामेकेन १
जुहुयादाग्नीध्रीयविनाश आग्नेय्यर्चा[11] जुहुयादग्निर्मूर्धा दिव
इति । वैष्णव्या हविर्धाने[12] विष्णो त्वं नो अन्तम इत्याग्नेय्या[13]
स्रुक्ष्वयमग्निः सहस्रिण इति । वायव्या वायव्येषु वायो शतꣳ
हरीणामित्यैन्द्रिया[14] सदसीन्द्रं विश्वा अवीवृधन्निति । वैश्व-

---

१ अथाग्नि॰ H U and the Vivaraṇa.

२ Thus Tr H U and Prāy. candrikā, समस्तंदेव॰ B.

३ Thus B and the Viv., क्रियेरन्नावृता Tr H U, cp. Rudradatta on Āp. XIV. 25. 2.

४ Om. T B, given by U H and the Vivaraṇa.

५ Thus Tr B, स्तृणीरन्निति H U.

६ Thus B, ॰तरासामानुपूर्वमित्यथ Tr, ॰तरासामानुपूर्व्यं भवत्यथ U, ॰तरास्वनुपूर्वं भवंत्यथ H.

७ Om. H.

८ कपालानि यत्र ins. B, यत्र ins. Tr.

९ यावत्स्तूतं U and Viv., यावत्स्नुतं B H, यावत्स्रूतं Tr.

१० Thus U, ॰युत्य H B, ॰स्रुत्य Tr.

११ ॰ग्नेय्या B U H.

१२ ॰र्धानं B Tr.

१३ The passage आग्नेय्या...हरीणामिति found in H U only.

१४ ॰त्यैन्द्रीया H B ॰त्यैन्द्रा Tr, त्यैन्द्र्या U.

